

श्रीदक्षिणामूर्तये नमः

# श्रीशिवसहस्रनामसङ्ग्रहः

श्रीमत्परमहंस परिव्राजकाचार्य महामण्डलेश्वर
**श्री १०८ स्वामी महेशानन्द गिरि जी**
महाराज की आज्ञानुसार
स्वामी मधुसूदनानन्द गिरि
द्वारा संकलित

## इतिहास-पुराणोक्त दस शिवसहस्रनाम


श्री दक्षिणामूर्ति मठ, प्रकाशन
वाराणसी

संवत् २०६३

मूल्य 85/-

ॐ

# आशीर्वाद

सनातन धर्म वैदिक परम्परा और लौकिक परम्परा इन दो धाराओं का संगम है । वैदिक की तरह लौकिक अर्थात् कुलपरम्परा भी प्रमाणरूप से स्वीकार्य है । ग्रन्थों पर आरूढ होने से वैदिक परम्परा लोगों पर निर्भर नहीं जबकि ग्रंथों पर आरूढ न होने से लौकिक परंपरा कुलधर्म के रूप में मिलती है अतः विषम परिस्थितियों में नष्ट भी हो जाती है । युद्ध के नुकसानों में अर्जुन ने शाश्वत कुल-धर्मों के नाश को प्रमुखता से गिना था । महाराजा मनु ने वेद व स्मृति के साथ सदाचार को भी धर्म का लक्षण कहा है । वेद से साक्षात् विरुद्ध होने पर कुलधर्मों की प्रमाणता कट जाती है क्योंकि मनु का निर्देश है 'धर्मे प्रमीयमाणे तु प्रमाणं परमं श्रुतिः' कि धर्म के बारे में अन्तिम, निरपेक्ष, निर्णायक प्रमाण वेद ही है किन्तु साक्षात् विरोध न हो तो सदाचार भी स्वीकृत प्रमाण है ही ।

वेद में इन्द्र, रुद्र, मित्र, वरुण, आदित्य आदि सभी देवताओं की जगह-जगह परमेश्वररूप से स्तुति की गयी है । परलोक में विष्णु, शंकर व शक्ति को ही तत्तत् सम्प्रदाय में परमात्मरूप माना गया है । पुराण श्रुति व लोक दोनों का समन्वय बनाते हैं अतः अधिकतर पुराणों की रचना इन्हीं देवताओं को परम बताते हुए की गयी है । प्रसिद्ध है कि स्तुति सुनकर सभी प्रसन्न हो जाते हैं अतः

शिवादि के स्तोत्रों के पाठ से इनकी प्रसन्नता भी स्वाभाविक है । वेद के रुद्राध्याय में भगवान् शंकर की अनेक रूपों में जैसी स्तुति मिलती है वैसी अन्य किसी देवता की नहीं । पुराणों में अनेक जगह शिव के शत, सहस्र आदि नाम उपलब्ध हैं । विस्तृत होने से सहस्रनाम सर्वाधिक विशेषताओं का उल्लेख कर देते हैं । यथासम्भव सब शिवसहस्रनामों का एक जगह संग्रह होने से शिवभक्तों को पाठ, अर्चना आदि में सुविधा होगी यह मानकर स्वामी मधुसूदनानन्द गिरि ने पुराणों से छह, महाभारत और शिवरहस्य से दो-दो, यों दस सहस्रनाम एकत्र कर उपस्थित किये हैं ।

आशा है भगवान् शंकर को प्रसन्न करने का सरल उपाय शिवभक्तों को यह प्रकाशन सुलभ करायेगा । शिवाराधना कर शुद्ध बुद्धि पाकर भक्त आत्मज्ञान की योग्यता प्राप्त करें यही हमारा आशीर्वाद है ।

श्रीशंकर मठ, आबू । भगवत्पादीय
श्रीवसन्त पंचमी, २०६३ महेशानन्द गिरि

# विषय-सूची

ॐ

श्रीदक्षिणामूर्तये नमः

शिवपुराणान्तर्गतं विष्णुकृतं

# श्रीशिवसहस्रनामस्तोत्रम्

## सूत उवाच

श्रूयतां भो ऋषिश्रेष्ठा येन तुष्टो महेश्वरः ।
तदहं कथयाम्यद्य शैवं नामसहस्रकम् ॥ १ ॥

## विष्णुरुवाच

शिवो हरो मृडो रुद्रः पुष्करः पुष्पलोचनः ।
अर्थिगम्यः सदाचारः शर्वः शम्भुर्महेश्वरः ॥ २ ॥

चन्द्रापीडश्चन्द्रमौलिर्विश्वं विश्वंभरेश्वरः ।
वेदान्तसारसन्दोहः कपाली नीललोहितः ॥ ३ ॥

ध्यानाधारोऽपरिच्छेद्यो गौरीभर्ता गणेश्वरः ।
अष्टमूर्तिर्विश्वमूर्तिस्त्रिवर्गः स्वर्गसाधनः ॥ ४ ॥

ज्ञानगम्यो दृढप्रज्ञो देवदेवस्त्रिलोचनः ।
वामदेवो महादेवः पटुः परिवृढो दृढः ॥ ५ ॥

विश्वरूपो विरूपाक्षो वागीशः शुचिसत्तमः ।
सर्वप्रमाणसंवादी वृषाङ्को वृषवाहनः ॥ ६ ॥

ईशः पिनाकी खट्वाङ्गी चित्रवेषश्चिरन्तनः ।
तमोहरो महायोगी गोप्ता ब्रह्मा च धूर्जटिः ॥ ७ ॥

कालकालः कृत्तिवासाः सुभगः प्रणवात्मकः ।
उन्नध्रः पुरुषो जुष्यो दुर्वासाः पुरशासनः ॥ ८ ॥

दिव्यायुधः स्कन्दगुरुः परमेष्ठी परात्परः ।
अनादिमध्यनिधनो गिरीशो गिरिजाधवः ॥ ९ ॥

कुबेरबन्धुः श्रीकण्ठो लोकवर्णोत्तमो मृदुः ।
समाधिवेद्यः कोदण्डी नीलकण्ठः परस्वधी ॥ १० ॥

विशालाक्षो मृगव्याधः सुरेशः सूर्यतापनः ।
धर्मधाम क्षमाक्षेत्रं भगवान् भगनेत्रभित् ॥ ११ ॥

उग्रः पशुपतिस्तार्क्ष्यः प्रियभक्तः परंतपः ।
दाता दयाकरो दक्षः कपर्दी कामशासनः ॥ १२ ॥

श्मशाननिलयः सूक्ष्मः श्मशानस्थो महेश्वरः ।
लोककर्ता मृगपतिर्महाकर्ता महौषधिः ॥ १३ ॥

सोमपोऽमृतपः सौम्यो महातेजा महाद्युतिः ।
तेजोमयोऽमृतमयोऽन्नमयश्च सुधापतिः ॥ १४ ॥

उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः ।
नीतिः सुनीतिः शुद्धात्मा सोमः सोमरतः सुखी ॥ १५ ॥

अजातशत्रुरालोकसंभाव्यो हव्यवाहनः ।
लोकङ्करो वेदकरः सूत्रकारः सनातनः ॥ १६ ॥

महर्षिः कपिलाचार्य्यो विश्वदीप्तिस्त्रिलोचनः ।
पिनाकपाणिर्भूदेवः स्वस्तिदः स्वस्तिकृत्सुधीः ॥ १७ ॥

धातृधामा धामकरः सर्वगः सर्वगोचरः ।
ब्रह्मसृग्विश्वसृक्सर्गः कर्णिकारप्रियः कविः ॥ १८ ॥

शाखो विशाखो गोशाखः शिवो भिषगनुत्तमः ।
गंगाप्लवोदको भव्यः पुष्कलः स्थपतिः स्थिरः ॥ १९ ॥

विजितात्मा विधेयात्मा भूतवाहनसारथिः ।
सगणो गणकायश्च सुकीर्तिश्छिन्नसंशयः ॥ २० ॥

कामदेवः कामपालो भस्मोद्धूलितविग्रहः ।
भस्मप्रियो भस्मशायी कामी कान्तः कृतागमः ॥ २१ ॥

समावर्त्तो निवृत्तात्मा धर्मपुञ्जः सदाशिवः ।
अकल्मषश्च पुण्यात्मा चतुर्बाहुर्दुरासदः ॥ २२ ॥

दुर्लभो दुर्गमो दुर्गः सर्वायुधविशारदः ।
अध्यात्मयोगनिलयः सुतन्तुस्तन्तुवर्धनः ॥ २३ ॥

शुभाङ्गो लोकसारङ्गो जगदीशो जनार्दनः ।
भस्मशुद्धिकरोऽमेरुरोजस्वी शुद्धविग्रहः ॥ २४ ॥

असाध्यः साधुसाध्यश्च भृत्यमर्कटरूपधृक् ।
हिरण्यरेताः पौराणो रिपुजीवहरो बली: ॥ २५ ॥

महाह्रदो महागर्तः सिद्धो वृन्दारवन्दितः ।
व्याघ्रचर्माम्बरो व्याली महाभूतो महानिधिः ॥ २६ ॥

अमृतोऽमृतपः श्रीमान्पाञ्चजन्यः प्रभञ्जनः ।
पञ्चविंशतितत्त्वस्थः पारिजातः परात्परः ॥ २७ ॥

सुलभः सुव्रतः शूरो वाङ्मयैकनिधिर्निधिः ।
वर्णाश्रमगुरुर्वर्णी शत्रुजित्छत्रुतापनः ॥ २८ ॥

आश्रमः क्षपणः क्षामो ज्ञानवानचलेश्वरः ।
प्रमाणभूतो दुर्ज्ञेयः सुपर्णो वायुवाहनः ॥ २९ ॥

धनुर्धरो धनुर्वेदो गुणराशिर्गुणाकरः ।
सत्यः सत्यपरोऽदीनो धर्माङ्गो धर्मसाधनः ॥ ३० ॥

अनन्तदृष्टिरानन्दो दण्डो दमयिता दमः ।
अभिचार्यो महामायो विश्वकर्मविशारदः ॥ ३१ ॥

वीतरागो विनीतात्मा तपस्वी भूतभावनः ।
उन्मत्तवेषः प्रच्छन्नो जितकामो जितप्रियः ॥ ३२ ॥

कल्याणप्रकृतिः कल्पः सर्वलोकप्रजापतिः ।
तरस्वी तारको धीमान् प्रधानः प्रभुरव्ययः ॥ ३३ ॥

लोकपालोऽन्तर्हितात्मा कल्पादिः कमलेक्षणः ।
वेदशास्त्रार्थतत्त्वज्ञोऽनियमो नियताश्रयः ॥ ३४ ॥

चन्द्रः सूर्यः शनिः केतुर्वरांगो विद्रुमच्छविः ।
भक्तिवश्यः परं ब्रह्म मृगबाणार्पणोऽनघः ॥ ३५ ॥

अद्रिरद्र्यालयः कान्तः परमात्मा जगद्गुरुः ।
सर्वकर्मालयस्तुष्टो मङ्गल्यो मङ्गलावृतः ॥ ३६ ॥

महातपा दीर्घतपाः स्थविष्ठः स्थविरो ध्रुवः ।
अहः संवत्सरो व्याप्तिः प्रमाणं परमं तपः ॥ ३७ ॥

संवत्सरकरो मन्त्रः प्रत्ययः सर्वतापनः ।
अजः सर्वेश्वरः सिद्धो महातेजा महाबलः ॥ ३८ ॥

योगी योग्यो महारेताः सिद्धिः सर्वादिरग्रहः ।
वसुर्वसुमनाः सत्यः सर्वपापहरो हरः ॥ ३९ ॥

सुकीर्तिः शोभनः स्रग्वी वेदांगो वेदविन्मुनिः ।
भ्राजिष्णुर्भोजनं भोक्ता लोकनाथो दुराधरः ॥ ४० ॥

अमृतः शाश्वतः शान्तो बाणहस्तः प्रतापवान् ।
कमण्डलुधरो धन्वी ह्यवाङ्मनसगोचरः ॥ ४१ ॥

अतीन्द्रियो महामायः सर्वावासश्चतुष्पथः ।
कालयोगी महानादो महोत्साहो महाबलः ॥ ४२ ॥

महाबुद्धिर्महावीर्यो भूतचारी पुरन्दरः ।
निशाचरः प्रेतचारी महाशक्तिर्महाद्युतिः ॥ ४३ ॥

अनिर्देश्यवपुः श्रीमान् सर्वाचार्यो मनोगतिः ।
बहुश्रुतिर्महामायो नियतात्मा ध्रुवोऽध्रुवः ॥ ४४ ॥

तेजस्तेजो द्युतिधरो जनकः सर्वशासकः ।
नृत्यप्रियो नित्यनृत्यः प्रकाशात्मा प्रकाशकः ॥ ४५ ॥

स्पष्टाक्षरो बुधो मन्त्रः समानः सारसंप्लवः ।
युगादिकृद्युगावर्तो गंभीरो वृषवाहनः ॥ ४६ ॥

इष्टो विशिष्टः शिष्टेष्टः सुलभः सारशोधनः ।
तीर्थरूपस्तीर्थनामा तीर्थदृश्यस्तु तीर्थदः ॥ ४७ ॥

अपां निधिरधिष्ठानं विजयो जयकालवित् ।
प्रतिष्ठितः प्रमाणज्ञो हिरण्यकवचो हरिः ॥ ४८ ॥

विमोचन सुरगणो विद्येशो बिन्दुसंश्रयः ।
वातरूपोऽमलोन्मायी विकर्ता गहनो गुहः ॥ ४९ ॥

करणं कारणं कर्त्ता सर्वबन्धविमोचनः ।
व्यवसायो व्यवस्थानः स्थानदो जगदादिजः ॥ ५० ॥

गुरुदो ललितो भेदो भावात्मात्मनिसंस्थितः ।
वीरेश्वरो वीरभद्रो वीरासनविधिर्गुरुः ॥ ५१ ॥

वीरचूडामणिर्वेत्ता चिदानन्दो नदीधरः ।
आज्ञाधारस्त्रिशूली च शिपिविष्टः शिवालयः ॥ ५२ ॥

बालखिल्यो महावीरस्तिग्मांशुर्बधिरः खगः ।
अभिरामः सुशरणः सुब्रह्मण्यः सुधापतिः ॥ ५३ ॥

मघवान्कौशिको गोमान्विरामः सर्वसाधनः ।
ललाटाक्षो विश्वदेहः सारः संसारचक्रभृत् ॥ ५४ ॥

अमोघदण्डी मध्यस्थो हिरण्यो ब्रह्मवर्चसः ।
परमार्थः परमायः शंबरो व्याघ्रलोचनः ॥ ५५ ॥

रुचिर्बहुरुचिर्वैद्यो वाचस्पतिरहस्पतिः ।
रविर्विरोचनः स्कन्दः शास्ता वैवस्वतो यमः ॥ ५६ ॥

युक्तिरुन्नतकीर्तिश्च सानुरागः पुरञ्जनः ।
कैलासाधिपतिः कान्तः सविता रविलोचनः ॥ ५७ ॥

विश्वोत्तमो वीतभयो विश्वभर्ता निवारितः ।
नित्यो नियतकल्याणः पुण्यश्रवणकीर्तनः ॥ ५८ ॥

दूरश्रवो विश्वसहो ध्येयो दुःस्वप्ननाशनः ।
उत्तारणो दुष्कृतिहा विज्ञेयो दुःसहो धवः ॥ ५९ ॥

अनादिर्भूर्भुवोलक्ष्मीः किरीटी त्रिदशाधिपः ।
विश्वगोप्ता विश्वकर्ता सुवीरोरुचिरांगदः ॥ ६० ॥

जननो जनजन्मादिः प्रीतिमान् नीतिमान् ध्रुवः ।
वशिष्ठः कश्यपो भानुर्भीमो भीमपराक्रमः ॥ ६१ ॥

प्रणवः सत्पथाचारो महाकोशो महाधनः ।
जन्माधिपो महादेवः सकलागमपारगः ॥ ६२ ॥

तत्त्वं तत्त्वविदेकात्मा विभुर्विष्णुविभूषणः ।
ऋषिर्ब्राह्मण ऐश्वर्यं जन्ममृत्युजरातिगः ॥ ६३ ॥

पञ्चयज्ञसमुत्पत्तिर्विश्वेशो विमलोदयः ।
अनाद्यन्तो ह्यात्मयोनिर्वत्सलो भूतलोकधृक् ॥ ६४ ॥

गायत्रीवल्लभः प्रांशु र्विश्वावासः प्रभाकरः ।
शिशुर्गिरिरतः सम्राट् सुषेणः सुरशत्रुहा ॥ ६५ ॥

अनेमिरिष्टनेमिश्च मुकुन्दो विगतज्वरः ।
स्वयं ज्योतिर्महाज्योतिस्तनुज्योतिरचंचलः ॥ ६६ ॥

पिङ्गलः कपिलश्मश्रुर्भालनेत्रस्त्रयीतनुः ।
ज्ञानस्कन्दो महानीतिर्विश्वोत्पत्तिरुपप्लवः ॥ ६७ ॥

भगो विवस्वानादित्यो गतपारो बृहस्पतिः ।
कल्याणगुणनामा च पापहा पुण्यदर्शनः ॥ ६८ ॥

उदारकीर्तिरुद्योगी सद्योगी सदसत्त्रपः ।
नक्षत्रमाली नाकेशः स्वाधिष्ठानः षडाश्रयः ॥ ६९ ॥

पवित्रः पापनाशश्च मणिपूरो नभोगतिः ।
हृत्पुण्डरीकमासीनः शक्रः शांतो वृषाकपिः ॥ ७० ॥

उष्णो गृहपतिः कृष्णः समर्थोऽनर्थनाशनः ।
अधर्मशत्रुरज्ञेयः पुरुहूतः पुरुश्रुतः ॥ ७१ ॥

ब्रह्मगर्भो बृहद्गर्भो धर्मधेनुर्धनागमः ।
जगद्धितैषी सुगतः कुमारः कुशलागमः ॥ ७२ ॥

हिरण्यवर्णो ज्योतिष्मान् नानाभूतरतो ध्वनिः ।
आरोग्यो नमनाध्यक्षो विश्वामित्रो धनेश्वरः ॥ ७३ ॥

ब्रह्मज्योतिर्वसुर्धामा महाज्योतिरनुत्तमः ।
मातामहो मातरिश्वा नभस्वान्नागहारधृक् ॥ ७४ ॥

पुलस्त्यः पुलहोऽगस्त्यो जातूकर्ण्यः पराशरः ।
निरावरणनिर्वारो वैरञ्च्यो विष्टरश्रवा ॥ ७५ ॥

आत्मभूरनिरुद्धोऽत्रिर्ज्ञानमूर्तिर्महायशाः ।
लोकवीराग्रणीर्वीरश्चण्डः सत्यपराक्रमः ॥ ७६ ॥

व्यालकल्पो महाकल्पः कल्पवृक्षः कलाधरः ।
अलङ्करिष्णुरचलो रोचिष्णुर्विक्रमोन्नतः ॥ ७७ ॥

आयुः शब्दपतिर्वाग्मी प्लवनः शिखिसारथिः ।
असंसृष्टोऽतिथिः शत्रुः प्रमाथी पादपासनः ॥ ७८ ॥

वसुश्रवाः कव्यवाहः प्रतप्तो विश्वभोजनः ।
जप्यो जरादिशमनो लोहितश्च तनूनपात् ॥ ७९ ॥

पृषदश्वो नभोयोनिः सुप्रतीकस्तमिस्रहा ।
निदाघस्तपनो मेघभक्षः परपुरञ्जयः ॥ ८० ॥

सुखानिलः सुनिष्पन्नः सुरभिः शिशिरात्मकः ।
वसन्तो माधवो ग्रीष्मो नभस्यो बीजवाहनः ॥ ८१ ॥

अंगिरागुरुरात्रेयो विमलो विश्वपावनः ।
पावनः पुरजिच्छक्रस्त्रैविद्यो नववारणः ॥ ८२ ॥

मनोबुद्धिरहंकारः क्षेत्रज्ञः क्षेत्रपालकः ।
जमदग्निर्बलनिधिर्विगालो विश्वगालवः ॥ ८३ ॥

अघोरोऽनुत्तरो यज्ञः श्रेयो निःश्रेयसप्रदः ।
शैलो गगनकुन्दाभो दानवारिररिन्दमः ॥ ८४ ॥

चामुण्डो जनकश्चारुर्निःशल्यो लोकशल्यधृक् ।
चतुर्वेदश्चतुर्भावश्चतुरश्चतुरप्रियः ॥ ८५ ॥

आम्नायोऽथ समाम्नायस्तीर्थदेवः शिवालयः ।
बहुरूपो महारूपः सर्वरूपश्चराचरः ॥ ८६ ॥

न्यायनिर्मायको नेयो न्यायगम्यो निरञ्जनः ।
सहस्रमूर्द्धा देवेन्द्रः सर्वशस्त्रप्रभञ्जनः ॥ ८७ ॥

मुण्डी विरूपो विकृतो दण्डी नादी गुणोत्तमः ।
पिंगलाक्षो हि बह्वक्षो नीलग्रीवो निरामयः ॥ ८८ ॥

सहस्रबाहुः सर्वेशः शरण्यः सर्वलोकधृक् ।
पद्मासनः परंज्योतिः पारम्पर्यफलप्रदः ॥ ८९ ॥

पद्मगर्भो महागर्भो विश्वगर्भो विचक्षणः ।
परावरज्ञो वरदो वरेण्यश्च महास्वनः ॥ ९० ॥

देवासुरगुरुर्देवो देवासुरनमस्कृतः ।
देवासुरमहामित्रो देवासुरमहेश्वरः ॥ ९१ ॥

देवासुरेश्वरो दिव्यो देवासुरमहाश्रयः ।
देवदेवोऽनयोऽचिन्त्यो देवतात्मात्मसम्भवः ॥ ९२ ॥

सद्यो महासुरव्याधो देवसिंहो दिवाकरः ।
विबुधाग्रचरः श्रेष्ठः सर्वदेवोत्तमोत्तमः ॥ ९३ ॥

शिवज्ञानरतः श्रीमान् शिखिश्रीपर्वतप्रियः ।
वज्रहस्तस्सिद्धखड्गो नरसिंहनिपातनः ॥ ९४ ॥

ब्रह्मचारी लोकचारी धर्मचारी धनाधिपः ।
नन्दी नन्दीश्वरोऽनन्तो नग्नव्रतधरः शुचिः ॥ ९५ ॥

लिङ्गाध्यक्षः सुराध्यक्षो युगाध्यक्षो युगापहः ।
स्वधामा स्वगतः स्वर्गी स्वरः स्वरमयस्वनः ॥ ९६ ॥

बाणाध्यक्षो बीजकर्ता कर्मकृद्धर्मसम्भवः ।
दम्भो लोभोऽथ वै शम्भुः सर्वभूतमहेश्वरः ॥ ९७ ॥

श्मशाननिलयस्त्र्यक्षः सेतुरप्रतिमाकृतिः ।
लोकोत्तरस्फुटालोकस्त्र्यम्बको नागभूषणः ॥ ९८ ॥

अन्धकारिर्मखद्वेषी विष्णुकन्धरपातनः ।
हीनदोषोऽक्षयगुणो दक्षारिः पूषदन्तभित् ॥ ९९ ॥

पूर्णः पूरयिता पुण्यः सुकुमारः सुलोचनः ।
सन्मार्गपः प्रियो धूर्त्तः पुण्यकीर्तिरनामयः ॥ १०० ॥

मनोजवस्तीर्थकरो जटिलो नियमेश्वरः ।
जीवितान्तकरो नित्यो वसुरेता वसुप्रदः ॥ १०१ ॥

सद्गतिः सिद्धिदः सिद्धिः सज्जातिः खलकण्टकः ।
कलाधरो महाकालभूतः सत्यपरायणः ॥ १०२ ॥

लोकलावण्यकर्ता च लोकोत्तरसुखालयः ।
चन्द्रसञ्जीवनः शास्ता लोकग्राहो महाधिपः ॥ १०३ ॥

लोकबन्धुर्लोकनाथः कृतज्ञः कृत्तिभूषितः ।
अनपायोऽक्षरः कान्तः सर्वशस्त्रभृताम्वरः ॥ १०४ ॥

तेजोमयो द्युतिधरो लोकमानी घृणार्णवः ।
शुचिस्मितः प्रसन्नात्मा ह्यजेयो दुरतिक्रमः ॥ १०५ ॥

ज्योतिर्मयो जगन्नाथो निराकारो जलेश्वरः ।
तुम्बवीणो महाकायो विशोकः शोकनाशनः ॥ १०६ ॥

त्रिलोकपस्त्रिलोकेशः सर्वशुद्धिरधोक्षजः ।
अव्यक्तलक्षणो देवो व्यक्तोऽव्यक्तो विशांपतिः ॥ १०७ ॥

वरशीलो वरगुणः सारो मानधरो यमः ।
ब्रह्मा विष्णुः प्रजापालो हंसो हंसगतिर्वयः ॥ १०८ ॥

वेधा विधाता धाता च स्रष्टा हर्त्ता चतुर्मुखः ।
कैलासशिखरावासी सर्वावासी सदागतिः ॥ १०९ ॥

हिरण्यगर्भो द्रुहिणो भूतपालोऽथ भूपतिः ।
सद्योगी योगविद्योगी वरदो ब्राह्मणप्रियः ॥ ११० ॥
देवप्रियो देवनाथो देवको देवचिन्तकः ।
विषमाक्षो विरूपाक्षो वृषदो वृषवर्द्धनः ॥ १११ ॥

निर्ममो निरहंकारो निर्मोहो निरुपद्रवः ।
दर्पहा दर्पदो दृप्तः सर्वार्थपरिवर्तकः ॥ ११२ ॥

सहस्रार्चिर्भूतिभूषः स्निग्धाकृतिरदक्षिणः ।
भूतभव्यभवन्नाथो विभवो भूतिनाशनः ॥ ११३ ॥

अर्थोऽनर्थो महाकोशः परकार्यैकपण्डितः ।
निष्कण्टकः कृतानन्दो निर्व्याजो व्याजमर्दनः ॥ ११४ ॥

सत्त्ववान्सात्त्विकः सत्यः कृतस्नेहः कृतागमः ।
अकम्पितो गुणग्राही नैकात्मा नैककर्मकृत् ॥ ११५ ॥

सुप्रीतः सुखदः सूक्ष्मः सुकरो दक्षिणानिलः ।
नन्दिस्कन्धधरो धुर्य्यः प्रकटः प्रीतिवर्द्धनः ॥ ११६ ॥

अपराजितः सर्वसहो गोविन्दः सत्त्ववाहनः ।
अधृतः स्वधृतः सिद्धः पूतमूर्तिर्यशोधनः ॥ ११७ ॥

वाराहशृङ्गधृक्शृंगी बलवानेकनायकः ।
श्रुतिप्रकाशः श्रुतिमानेकबन्धुरनेकधृक् ॥ ११८ ॥

श्रीवत्सलशिवारम्भः शान्तभद्रः समो यशः ।
भूशयो भूषणो भूतिर्भूतिकृद्भूतभावनः ॥ ११९ ॥

अकम्पो भक्तिकायस्तु कालहानिः कलाविभुः ।
सत्यव्रतमहात्यागी नित्यशान्तिपरायणः ॥ १२० ॥

परार्थवृत्तिर्वरदो विरक्तस्तु विशारदः ।
शुभदः शुभकर्ता च शुभनामा शुभः स्वयम् ॥ १२१ ॥

अनर्थितो गुणग्राही ह्यकर्ता कनकप्रभः ।
स्वभावभद्रो मध्यस्थः शत्रुघ्नो विघ्ननाशनः ॥ १२२ ॥

शिखण्डी कवची शूली जटी मुण्डी च कुण्डली ।
अमृत्युः सर्वदृक् सिंहस्तेजोराशिर्महामणिः ॥ १२३ ॥

असंख्येयोऽप्रमेयात्मा वीर्य्यवान् वीर्य्यकोविदः ।
वेद्यश्च वै वियोगात्मा सप्तावरमुनीश्वरः ॥ १२४ ॥

अनुत्तमो दुराधर्षो मधुरप्रियदर्शनः ।
सुरेशः स्मरणः शर्वः शब्दः प्रतपतां वरः ॥ १२५ ॥

कालपक्षः कालकालः कंकणीकृतवासुकिः ।
महेष्वासो महीभर्ता निष्कलङ्को विशृंखलः ॥ १२६ ॥

द्युमणिस्तरणिर्धन्यः सिद्धिदः सिद्धिसाधनः ।
विश्वतः सम्प्रवृत्तस्तु व्यूढोरस्को महाभुजः ॥ १२७ ॥

सर्वयोनिर्निरातंको नरनारायणप्रियः ।
निर्लेपो यतिसंगात्मा निर्व्यङ्गो व्यङ्गनाशनः ॥ १२८ ॥

स्तव्यः स्तवप्रियः स्तोता व्यासमूर्तिर्निराकुलः ।
निरवद्यमयोपायो विद्याराशिश्च सत्कृतः ॥ १२९ ॥

प्रशान्तबुद्धिरक्षुण्णः संग्रहो नित्यसुन्दरः ।
वैयाघ्रधुर्य्यो धात्रीशः संकल्पः शर्वरीपतिः ॥ १३० ॥

परमार्थगुरुर्दत्तः सूरिराश्रितवत्सलः ।
सोमो रसज्ञो रसदः सर्वसत्त्वावलम्बनः ॥ १३१ ॥

एवं नाम्नां सहस्रेण तुष्टाव हि हरं हरिः ।
प्रार्थयामास शम्भुं वै पूजयामास पंकजैः ॥ १३२ ॥

ततः स कौतुकी शम्भुश्चकार चरितं द्विजाः ।
महाद्भूतं सुखकरं तदेव शृणुतादरात् ॥ १३३ ॥

॥ इति श्रीशिवमहापुराणे चतुर्थ्यां कोटिरुद्रसंहितायां
शिवसहस्रनामवर्णनं नाम पञ्चत्रिंशोऽध्यायः ॥

## अथ फलम्
(षट्त्रिंशाऽध्याये)

अन्ये च ये पठिष्यन्ति पाठयिष्यन्ति नित्यशः ।
तेषां दुःखं न स्वप्नेऽपि जायते नात्र संशयः ॥ १ ॥

राज्ञा च संकटे प्राप्ते शतावृत्तिं चरेद्यदा ।
साङ्गं च विधिसंयुक्तं कल्याणं लभते नरः ॥ २ ॥

रोगनाशकरं ह्येतद् विद्यावित्तदमुत्तमम् ।
सर्वकामप्रदं पुण्यं शिवभक्तिप्रदं सदा ॥ ३ ॥

यदुद्दिश्य फलं श्रेष्ठं पठिष्यन्ति नरास्त्विह ।
लप्स्यन्ते नात्र सन्देहः फलं तत्सत्यमुत्तमम् ॥ ४ ॥

यश्च प्रातस्समुत्थाय पूजां कृत्वा मदीयिकाम् ।
पठतो मत्समक्षं वै नित्यं सिद्धिर्न दूरतः ॥ ५ ॥

ऐहिकीं सिद्धिमाप्नोति निखिलां सर्वकामिकाम् ।
अन्ते सायुज्यमुक्तिं वै प्राप्नोत्यत्र न संशयः ॥ ६ ॥



## ॥ अथ नामावलिः ॥

१. ॐ शिवाय नमः ।

२. ॐ हराय नमः ।

३. ॐ मृडाय नमः ।

४. ॐ रुद्राय नमः ।

५. ॐ पुष्कराय नमः ।

६. ॐ पुष्पलोचनाय नमः ।

७. ॐ अर्थिगम्याय नमः ।

८. ॐ सदाचाराय नमः ।

९. ॐ शर्वाय नमः ।

१०. ॐ शम्भवे नमः ।

११. ॐ महेश्वराय नमः ।

१२. ॐ चन्द्रापीडाय नमः ।

१३. ॐ चन्द्रमौलये नमः ।

१४. ॐ विश्वाय नमः ।

१५. ॐ विश्वम्भरेश्वराय नमः ।

१६. ॐ वेदान्तसारसन्दोहाय नमः ।

१७. ॐ कपालिने नमः ।

१८. ॐ नीललोहिताय नमः ।

१९. ॐ ध्यानाधाराय नमः ।

२०. ॐ अपरिच्छेद्याय नमः ।

२१. ॐ गौरीभर्त्रे नमः ।

२२. ॐ गणेश्वराय नमः ।

२३. ॐ अष्टमूर्तये नमः ।

२४. ॐ विश्वमूर्तये नमः ।

२५. ॐ त्रिवर्गस्वर्गसाधनाय नमः ।

२६. ॐ ज्ञानगम्याय नमः ।

२७. ॐ दृढप्रज्ञाय नमः ।

२८. ॐ देवदेवाय नमः ।

२९. ॐ त्रिलोचनाय नमः ।

३०. ॐ वामदेवाय नमः ।

३१. ॐ महादेवाय नमः ।

३२. ॐ पटवे नमः ।

३३. ॐ परिवृढाय नमः ।

३४. ॐ दृढाय नमः ।

३५. ॐ विश्वरूपाय नमः ।

३६. ॐ विरूपाक्षाय नमः ।

३७. ॐ वागीशाय नमः ।

३८. ॐ शुचिसत्तमाय नमः ।

३९. ॐ सर्वप्रमाणसंवादिने नमः ।

४०. ॐ वृषाङ्काय नमः ।

४१. ॐ वृषवाहनाय नमः ।

४२. ॐ ईशाय नमः ।

४३. ॐ पिनाकिने नमः ।

४४. ॐ खट्वाङ्गिने नमः ।

४५. ॐ चित्रवेषाय नमः ।

४६. ॐ चिरन्तनाय नमः ।

४७. ॐ तमोहराय नमः ।

४८. ॐ महायोगिने नमः ।

४९. ॐ गोप्त्रे नमः ।

५०. ॐ ब्रह्मणे नमः ।

५१. ॐ धूर्जटये नमः ।

५२. ॐ कालकालाय नमः ।

५३. ॐ कृत्तिवाससे नमः ।

५४. ॐ सुभगाय नमः ।

५५. ॐ प्रणवात्मकाय नमः ।

५६. ॐ उन्नध्राय नमः ।

५७. ॐ पुरुषाय नमः ।

५८. ॐ जुष्याय नमः ।

५९. ॐ दुर्वाससे नमः ।

६०. ॐ पुरशासनाय नमः ।

६१. ॐ दिव्यायुधाय नमः ।

६२. ॐ स्कन्दगुरवे नमः ।

६३. ॐ परमेष्ठिने नमः ।

६४. ॐ परात्पराय नमः ।

६५. ॐ अनादिमध्यनिधनाय नमः ।

६६. ॐ गिरीशाय नमः ।

६७. ॐ गिरिजाधवाय नमः ।

६८. ॐ कुबेरबन्धवे नमः ।

६९. ॐ श्रीकण्ठाय नमः ।

७०. ॐ लोकवर्णोत्तमाय नमः ।

७१. ॐ मृदवे नमः ।

७२. ॐ समाधिवेद्याय नमः ।

७३. ॐ कोदण्डिने नमः ।

७४. ॐ नीलकण्ठाय नमः ।

७५. ॐ परस्वधिने नमः ।

७६. ॐ विशालाक्षाय नमः ।

७७. ॐ मृगव्याधाय नमः ।

७८. ॐ सुरेशाय नमः ।

७९. ॐ सूर्यतापनाय नमः ।

८०. ॐ धर्मधाम्ने नमः ।

८१. ॐ क्षमाक्षेत्राय नमः ।

८२. ॐ भगवते नमः ।

८३. ॐ भगनेत्रभिदे नमः ।

८४. ॐ उग्राय नमः ।

८५. ॐ पशुपतये नमः ।

८६. ॐ तार्क्ष्याय नमः ।

८७. ॐ प्रियभक्ताय नमः ।

८८. ॐ परंतपाय नमः ।

८९. ॐ दात्रे नमः ।

९०. ॐ दयाकराय नमः ।

९१. ॐ दक्षाय नमः ।

९२. ॐ कपर्दिने नमः ।

९३. ॐ कामशासनाय नमः ।

९४. ॐ श्मशाननिलयाय नमः ।

९५. ॐ सूक्ष्माय नमः ।

९६. ॐ श्मशानस्थाय नमः ।

९७. ॐ महेश्वराय नमः ।

९८. ॐ लोककर्त्रे नमः ।

९९. ॐ मृगपतये नमः ।

**१००. ॐ महाकर्त्रे नमः ।**

१०१. ॐ महौषधये नमः ।

१०२. ॐ सोमपाय नमः ।

१०३. ॐ अमृतपाय नमः ।

१०४. ॐ सौम्याय नमः ।

१०५. ॐ महातेजसे नमः ।

१०६. ॐ महाद्युतये नमः ।

१०७. ॐ तेजोमयाय नमः ।

१०८. ॐ अमृतमयाय नमः ।

१०९. ॐ अन्नमयाय नमः ।

११०. ॐ सुधापतये नमः ।

१११. ॐ उत्तराय नमः ।

११२. ॐ गोपतये नमः ।

११३. ॐ गोप्त्रे नमः ।

११४. ॐ ज्ञानगम्याय नमः ।

११५. ॐ पुरातनाय नमः ।

११६. ॐ नीतये नमः ।

११७. ॐ सुनीतये नमः ।

११८. ॐ शुद्धात्मने नमः ।

११९. ॐ सोमाय नमः ।

१२०. ॐ सोमरताय नमः ।

१२१. ॐ सुखिने नमः ।

१२२. ॐ अजातशत्रवे नमः ।

१२३. ॐ आलोकसंभाव्याय नमः ।

१२४. ॐ हव्यवाहनाय नमः ।

१२५. ॐ लोकङ्कराय नमः ।

१२६. ॐ वेदकराय नमः ।

१२७. ॐ सूत्रकाराय नमः ।

१२८. ॐ सनातनाय नमः ।

१२९. ॐ महर्षिकपिलाचार्याय नमः ।

१३०. ॐ विश्वदीप्तये नमः ।

१३१. ॐ त्रिलोचनाय नमः ।

१३२. ॐ पिनाकपाणये नमः ।

१३३. ॐ भूदेवाय नमः ।

१३४. ॐ स्वस्तिदाय नमः ।

१३५. ॐ स्वस्तिकृते नमः ।

१३६. ॐ सुधिये नमः ।

१३७. ॐ धातृधाम्ने नमः ।

१३८. ॐ धामकराय नमः ।

१३९. ॐ सर्वगाय नमः ।

१४०. ॐ सर्वगोचराय नमः ।

१४१. ॐ ब्रह्मसृजे नमः ।

१४२. ॐ विश्वसृजे नमः ।

१४३. ॐ सर्गाय नमः ।

१४४. ॐ कर्णिकारप्रियाय नमः ।

१४५. ॐ कवये नमः ।

१४६. ॐ शाखाय नमः ।

१४७. ॐ विशाखाय नमः ।

१४८. ॐ गोशाखाय शिवाय नमः।[1]

१४९. ॐ भिषगनुत्तमाय नमः ।

१५०. ॐ गंगाप्लवोदकाय नमः।

१५१. ॐ भव्याय नमः ।

१५२. ॐ पुष्कलाय नमः ।

१५३. ॐ स्थपतये स्थिराय नमः।

१५४. ॐ विजितात्मने नमः ।

१५५. ॐ विधेयात्मने नमः ।

१५६. ॐ भूतवाहनसारथये नमः ।

---

[1] पण्डित ज्वालाप्रसादकृत व्याख्यानुसार दो शब्दों वाले एक नाम स्वीकारे हैं ।

१५७. ॐ सगणाय नमः ।

१५८. ॐ गणकायाय नमः ।

१५९. ॐ सुकीर्तये नमः ।

१६०. ॐ छिन्नसंशयाय नमः ।

१६१. ॐ कामदेवाय नमः ।

१६२. ॐ कामपालाय नमः ।

१६३. ॐ भस्मोद्धूलितविग्रहाय नमः।

१६४. ॐ भस्मप्रियाय भस्मशायिने नमः ।

१६५. ॐ कामिने नमः ।

१६६. ॐ कान्ताय नमः ।

१६७. ॐ कृतागमाय नमः ।

१६८. ॐ समावर्त्ताय नमः ।

१६९. ॐ निवृत्तात्मने नमः ।

१७०. ॐ धर्मपुञ्जाय नमः ।

१७१. ॐ सदाशिवाय नमः ।

१७२. ॐ अकल्मषाय नमः ।

१७३. ॐ पुण्यात्मने नमः ।

१७४. ॐ चतुर्बाहवे नमः ।

१७५. ॐ दुरासदाय नमः ।

१७६. ॐ दुर्लभाय नमः ।

१७७. ॐ दुर्गमाय नमः ।

१७८. ॐ दुर्गाय नमः ।

१७९. ॐ सर्वायुधविशारदाय नमः।

१८०. ॐ अध्यात्मयोगनिलयाय नमः।

१८१. ॐ सुतन्तवे नमः ।

१८२. ॐ तन्तुवर्द्धनाय नमः ।

१८३. ॐ शुभाङ्गाय नमः ।

१८४. ॐ लोकसारङ्गाय नमः ।

१८५. ॐ जगदीशाय नमः ।

१८६. ॐ जनार्दनाय नमः ।

१८७. ॐ भस्मशुद्धिकराय नमः।

१८८. ॐ अमेरवे नमः ।

१८९. ॐ ओजस्विने नमः ।

१९०. ॐ शुद्धविग्रहाय नमः ।

१९१. ॐ असाध्याय नमः ।

१९२. ॐ साधुसाध्याय नमः ।

१९३. ॐ भृत्यमर्कटरूपधृषे नमः।

१९४. ॐ हिरण्यरेतसे नमः ।

१९५. ॐ पौराणाय नमः ।

१९६. ॐ रिपुजीवहराय नमः ।

१९७. ॐ बल्ये नमः ।

१९८. ॐ महाह्रदाय नमः ।

१९९. ॐ महागर्ताय नमः ।

**२००. ॐ सिद्धवृन्दारवन्दिताय नमः ।**

२०१. ॐ व्याघ्रचर्माम्बराय नमः।

२०२. ॐ व्यालिने नमः ।

२०३. ॐ महाभूताय नमः ।

२०४. ॐ महानिधये नमः ।

२०५. ॐ अमृताय नमः ।

२०६. ॐ अमृतपाय नमः ।

२०७. ॐ श्रीमते नमः ।

२०८. ॐ पाञ्चजन्याय नमः ।

२०९. ॐ प्रभञ्जनाय नमः ।

२१०. ॐ पञ्चविंशतितत्त्वस्थाय नमः।

२११. ॐ पारिजाताय नमः ।

२१२. ॐ परात्पराय नमः ।

२१३. ॐ सुलभाय नमः ।

२१४. ॐ सुव्रताय शूराय नमः ।

२१५. ॐ वाङ्मयैकनिधये नमः।

२१६. ॐ निधये नमः ।

२१७. ॐ वर्णाश्रमगुरवे नमः ।

२१८. ॐ वर्णिने नमः ।

२१९. ॐ शत्रुजिते शत्रुतापनाय नमः।

२२०. ॐ आश्रमाय नमः ।

२२१. ॐ क्षपणाय नमः ।

२२२. ॐ क्षामाय नमः ।

२२३. ॐ ज्ञानवते नमः ।

२२४. ॐ अचलेश्वराय नमः ।

२२५. ॐ प्रमाणभूताय नमः ।

२२६. ॐ दुर्ज्ञेयाय नमः ।

२२७. ॐ सुपर्णाय नमः ।

२२८. ॐ वायुवाहनाय नमः ।

२२९. ॐ धनुर्धराय धनुर्वेदाय नमः।

२३०. ॐ गुणराशिगुणाकराय नमः ।

२३१. ॐ सत्याय सत्यपराय नमः।

२३२. ॐ अदीनाय नमः ।

२३३. ॐ धर्मांगधर्मसाधनाय नमः।

२३४. ॐ अनन्तदृष्टये नमः ।

२३५. ॐ आनन्दाय नमः ।

२३६. ॐ दण्डाय दमयित्रे नमः ।

२३७. ॐ दमाय नमः ।

२३८. ॐ अभिचार्याय महामायाय नमः ।

२३९. ॐ विश्वकर्मविशारदाय नमः।

२४०. ॐ वीतरागाय नमः ।

२४१. ॐ विनीतात्मने नमः ।

२४२. ॐ तपस्विने नमः ।

२४३. ॐ भूतभावनाय नमः ।

२४४. ॐ उन्मत्तमवेषाय प्रच्छन्नाय नमः ।

२४५. ॐ जितकामाय नमः ।

२४६. ॐ जितप्रियाय नमः ।

२४७. ॐ कल्याणप्रकृतये नमः ।

२४८. ॐ कल्पाय नमः ।

२४९. ॐ सर्वलोकप्रजापतये नमः।

२५०. ॐ तरस्विने नमः ।

२५१. ॐ तारकाय नमः ।

२५२. ॐ धीमते नमः ।

२५३. ॐ प्रधानप्रभवे नमः ।

२५४. ॐ अव्ययाय नमः ।

२५५. ॐ लोकपालाय नमः ।

२५६. ॐ अन्तर्हितात्मने नमः ।

२५७. ॐ कल्पादये नमः ।

२५८. ॐ कमलेक्षणाय नमः ।

२५९. ॐ वेदशास्त्रार्थतत्त्वज्ञाय नमः।

२६०. ॐ अनियमाय नमः ।

२६१. ॐ नियताश्रयाय नमः ।

२६२. ॐ चन्द्राय नमः ।

२६३. ॐ सूर्याय नमः ।

२६४. ॐ शनये नमः ।

२६५. ॐ केतवे नमः ।

२६६. ॐ वराङ्गाय नमः ।

२६७. ॐ विद्रुमच्छवये नमः ।

२६८. ॐ भक्तिवश्याय नमः ।

२६९. ॐ पराय ब्रह्मणे नमः ।

२७०. ॐ मृगबाणार्पणाय नमः ।

२७१. ॐ अनघाय नमः ।

२७२. ॐ अद्रयेऽद्र्यालयाय नमः।

२७३. ॐ कान्ताय नमः ।

२७४. ॐ परमात्मने नमः ।

२७५. ॐ जगद्गुरवे नमः ।

२७६. ॐ सर्वकर्मालयाय नमः ।

२७७. ॐ तुष्टाय नमः ।

२७८. ॐ मङ्गल्याय मङ्गलावृताय नमः ।

२७९. ॐ महातपसे नमः ।

२८०. ॐ दीर्घतपसे नमः ।

२८१. ॐ स्थविष्ठाय नमः ।

२८२. ॐ स्थविराय नमः ।

२८३. ॐ ध्रुवाय नमः ।

२८४. ॐ अह्ने नमः ।

२८५. ॐ संवत्सराय नमः ।

२८६. ॐ व्याप्तये नमः ।

२८७. ॐ प्रमाणाय नमः ।

२८८. ॐ परमाय नमः ।

२८९. ॐ तपसे नमः ।

२९०. ॐ संवत्सरकराय नमः ।

२९१. ॐ मन्त्रप्रत्ययाय नमः ।

२९२. ॐ सर्वतापनाय नमः ।

२९३. ॐ अजाय नमः ।

२९४. ॐ सर्वेश्वराय नमः ।

२९५. ॐ सिद्धाय नमः ।

२९६. ॐ महातेजसे नमः ।

२९७. ॐ महाबलाय नमः ।

२९८. ॐ योगिने योग्याय नमः ।

२९९. ॐ महारेतसे नमः ।

**३००. ॐ सिद्धये नमः ।**

३०१. ॐ सर्वादये नमः ।

३०२. ॐ अग्रहाय नमः ।

३०३. ॐ वसवे नमः ।

३०४. ॐ वसुमनसे नमः ।

३०५. ॐ सत्याय नमः ।

३०६. ॐ सर्वपापहराय हराय नमः।

३०७. ॐ सुकीर्तये नमः ।

३०८. ॐ शोभनाय नमः ।

३०९. ॐ स्रग्विणे नमः ।

३१०. ॐ वेदाङ्गाय नमः ।

३११. ॐ वेदविदे मुनये नमः ।

३१२. ॐ भ्राजिष्णवे नमः ।

३१३. ॐ भोजनाय नमः ।

३१४. ॐ भोक्त्रे नमः ।

३१५. ॐ लोकनाथाय नमः ।

३१६. ॐ दुराधराय नमः ।

३१७. ॐ अमृताय शाश्वताय नमः।

३१८. ॐ शान्ताय नमः ।

३१९. ॐ बाणहस्ताय प्रतापवते नमः ।

३२०. ॐ कमण्डलुधराय नमः ।

३२१. ॐ धन्विने नमः ।

३२२. ॐ अवाङ्मनसगोचराय नमः।

३२३. ॐ अतीन्द्रियाय महामायाय नमः ।

३२४. ॐ सर्वावासाय नमः ।

३२५. ॐ चतुष्पथाय नमः ।

३२६. ॐ कालयोगिने नमः ।

३२७. ॐ महानादाय नमः ।

३२८. ॐ महोत्साहाय नमः ।

३२९. ॐ महाबलाय नमः ।

३३०. ॐ महाबुद्धये नमः ।

३३१. ॐ महावीर्याय नमः ।

३३२. ॐ भूतचारिणे नमः ।

३३३. ॐ पुरन्दराय नमः ।

३३४. ॐ निशाचराय नमः ।

३३५. ॐ प्रेतचारिणे नमः ।

३३६. ॐ महाशक्तये महाद्युतये नमः ।

३३७. ॐ अनिर्देश्यवपुषे नमः ।

३३८. ॐ श्रीमते नमः ।

३३९. ॐ सर्वाचार्याय मनोगतये नमः ।

३४०. ॐ बहुश्रुतये नमः ।

३४१. ॐ महामायाय नमः ।

३४२. ॐ नियतात्मने ध्रुवाय नमः।

३४३. ॐ अध्रुवाय नमः ।

३४४. ॐ तेजस्तेजसे नमः ।

३४५. ॐ द्युतिधराय नमः ।

३४६. ॐ जनकाय नमः ।

३४७. ॐ सर्वशासकाय नमः ।

३४८. ॐ नित्यप्रियाय नित्यनृत्याय नमः ।

३४९. ॐ प्रकाशात्मने प्रकाशकाय नमः ।

३५०. ॐ स्पष्टाक्षराय नमः ।

३५१. ॐ बुधाय नमः ।

३५२. ॐ मन्त्राय नमः ।

३५३. ॐ समानाय नमः ।

३५४. ॐ सारसंप्लवाय नमः ।

३५५. ॐ युगादिकृते नमः ।

३५६. ॐ युगावर्ताय नमः ।

३५७. ॐ गंभीराय नमः ।

३५८. ॐ वृषवाहनाय नमः ।

३५९. ॐ इष्टाय नमः ।

३६०. ॐ विशिष्टाय नमः ।

३६१. ॐ शिष्टेष्टाय नमः ।

३६२. ॐ सुलभाय नमः ।

३६३. ॐ सारशोधनाय नमः ।

३६४. ॐ तीर्थरूपाय नमः ।

३६५. ॐ तीर्थनाम्ने नमः ।

३६६. ॐ तीर्थदृश्याय नमः ।

३६७. ॐ तीर्थदाय नमः ।

३६८. ॐ अपांनिधये नमः ।

३६९. ॐ अधिष्ठानाय नमः ।

३७०. ॐ विजयाय नमः ।

३७१. ॐ जयकालविदे नमः ।

३७२. ॐ प्रतिष्ठिताय नमः ।

३७३. ॐ प्रमाणज्ञाय नमः ।

३७४. ॐ हिरण्यकवचाय नमः ।

३७५. ॐ हरये नमः ।

३७६. ॐ विमोचनाय नमः ।

३७७. ॐ सुरगणाय नमः ।

३७८. ॐ विद्येशाय नमः ।

३७९. ॐ बिन्दुसंश्रयाय नमः ।

३८०. ॐ वातरूपाय नमः ।

३८१. ॐ अमलोन्मायिने नमः ।

३८२. ॐ विकर्त्रे नमः ।

३८३. ॐ गहनाय नमः ।

३८४. ॐ गुहाय नमः ।

३८५. ॐ करणाय नमः ।

३८६. ॐ कारणाय नमः ।

३८७. ॐ कर्त्रे नमः ।

३८८. ॐ सर्वबन्धविमोचनाय नमः।

३८९. ॐ व्यवसायाय नमः ।

३९०. ॐ व्यवस्थानाय नमः ।

३९१. ॐ स्थानदाय नमः ।

३९२. ॐ जगदादिजाय नमः ।

३९३. ॐ गुरुदाय नमः ।

३९४. ॐ ललिताय नमः ।

३९५. ॐ भेदाय नमः ।

३९६. ॐ भावात्मने आत्मनि संस्थिताय नमः।

३९७. ॐ वीरेश्वराय नमः ।

३९८. ॐ वीरभद्राय नमः ।

३९९. ॐ वीरासनविधये नमः ।

४००. ॐ गुरवे नमः ।

४०१. ॐ वीरचूडामणये नमः ।

४०२. ॐ वेत्रे नमः ।

४०३. ॐ चिदानन्दाय नमः ।

४०४. ॐ नदीधराय नमः ।

४०५. ॐ आज्ञाधाराय नमः ।

४०६. ॐ त्रिशूलिने नमः ।

४०७. ॐ शिपिविष्टाय नमः ।

४०८. ॐ शिवालयाय नमः ।

४०९. ॐ बालखिल्याय नमः ।

४१०. ॐ महावीराय नमः ।

४११. ॐ तिग्मांशवे नमः ।

४१२. ॐ बधिराय नमः ।

४१३. ॐ खगाय नमः ।

४१४. ॐ अभिरामाय नमः ।

४१५. ॐ सुशरणाय नमः ।

४१६. ॐ सुब्रह्मण्याय नमः ।

४१७. ॐ सुधापतये नमः ।

४१८. ॐ मघवते कौशिकाय नमः।

४१९. ॐ गोमते नमः ।

४२०. ॐ विरामाय नमः ।

४२१. ॐ सर्वसाधनाय नमः ।

४२२. ॐ ललाटाक्षाय नमः ।

४२३. ॐ विश्वदेहाय नमः ।

४२४. ॐ साराय नमः ।

४२५. ॐ संसारचक्रभृते नमः ।

४२६. ॐ अमोघदण्डिने नमः ।

४२७. ॐ मध्यस्थाय नमः ।

४२८. ॐ हिरण्याय नमः ।

४२९. ॐ ब्रह्मवर्चसाय नमः ।

४३०. ॐ परमार्थाय नमः ।

४३१. ॐ परमायाय नमः ।

४३२. ॐ शंबराय नमः ।

४३३. ॐ व्याघ्रलोचनाय नमः ।

४३४. ॐ रुचये नमः ।

४३५. ॐ बहुरुचये नमः ।

४३६. ॐ वैद्याय नमः ।

४३७. ॐ वाचस्पतये नमः ।

४३८. ॐ अहस्पतये नमः ।

४३९. ॐ रवये नमः ।

४४०. ॐ विरोचनाय नमः ।

४४१. ॐ स्कन्दाय नमः ।

४४२. ॐ शास्त्रे वैवस्वताय यमाय नमः ।

४४३. ॐ युक्तये उन्नतकीर्तये नमः।

४४४. ॐ सानुरागाय नमः ।

४४५. ॐ पुरञ्जनाय नमः ।

४४६. ॐ कैलासाधिपतये नमः ।

४४७. ॐ कान्ताय नमः ।

४४८. ॐ सवित्रे नमः ।

४४९. ॐ रविलोचनाय नमः ।

४५०. ॐ विश्वोत्तमाय नमः ।

४५१. ॐ वीतभयाय नमः ।

४५२. ॐ विश्वभर्त्रे नमः ।

४५३. ॐ निवारिताय नमः ।

४५४. ॐ नित्याय नमः ।

४५५. ॐ नियतकल्याणाय नमः।

४५६. ॐ पुण्यश्रवणकीर्तनाय नमः।

४५७. ॐ दूरश्रवाय नमः ।

४५८. ॐ विश्वसहाय नमः ।

४५९. ॐ ध्येयाय नमः ।

४६०. ॐ दुःस्वप्ननाशनाय नमः।

४६१. ॐ उत्तारणाय नमः ।

४६२. ॐ दुष्कृतिघ्ने नमः ।

४६३. ॐ विज्ञेयाय नमः ।

४६४. ॐ दुःसहाय नमः ।

४६५. ॐ धवाय नमः ।

४६६. ॐ अनादये नमः ।

४६७. ॐ भूर्भुवोलक्ष्म्यै नमः ।

४६८. ॐ किरीटिने नमः ।

४६९. ॐ त्रिदशाधिपाय नमः ।

४७०. ॐ विश्वगोप्त्रे नमः ।

४७१. ॐ विश्वकर्त्रे नमः ।

४७२. ॐ सुवीराय नमः ।

४७३. ॐ रुचिराङ्गदाय नमः ।

४७४. ॐ जननाय नमः ।

४७५. ॐ जनजन्मादये नमः ।

४७६. ॐ प्रीतिमते नमः ।

४७७. ॐ नीतिमते नमः ।

४७८. ॐ ध्रुवाय नमः ।

४७९. ॐ वशिष्ठाय नमः ।

४८०. ॐ कश्यपाय नमः ।

४८१. ॐ भानवे नमः ।

४८२. ॐ भीमाय नमः ।

४८३. ॐ भीमपराक्रमाय नमः ।

४८४. ॐ प्रणवाय नमः ।

४८५. ॐ सत्पथाचाराय नमः ।

४८६. ॐ महाकोशाय नमः ।

४८७. ॐ महाधनाय नमः ।

४८८. ॐ जन्माधिपाय नमः ।

४८९. ॐ महादेवाय नमः ।

४९०. ॐ सकलागमपारगाय नमः।

४९१. ॐ तत्त्वाय नमः ।

४९२. ॐ तत्त्वविदेकात्मने नमः ।

४९३. ॐ विभवे नमः ।

४९४. ॐ विष्णुविभूषणाय नमः।

४९५. ॐ ऋषये नमः ।

४९६. ॐ ब्राह्मणाय नमः ।

४९७. ॐ ऐश्वर्याय नमः ।

४९८. ॐ जन्ममृत्युजरातिगाय नमः।

४९९. ॐ पंचयज्ञसमुत्पत्तये नमः।

**५००. ॐ विश्वेशाय नमः ।**

५०१. ॐ विमलोदयाय नमः ।

५०२. ॐ अनाद्यन्ताय नमः ।

५०३. ॐ आत्मयोनये नमः ।

५०४. ॐ वत्सलाय नमः ।

५०५. ॐ भूतलोकधृषे नमः ।

५०६. ॐ गायत्रीवल्लभाय नमः ।

५०७. ॐ प्रांशवे नमः ।

५०८. ॐ विश्वावासाय नमः ।

५०९. ॐ प्रभाकराय नमः ।

५१०. ॐ शिशवे नमः ।

५११. ॐ गिरिरताय नमः ।

५१२. ॐ सम्राजे नमः ।

५१३. ॐ सुषेणाय सुरशत्रुघ्ने नमः।

५१४. ॐ अनेमये नमः ।

५१५. ॐ इष्टनेमये नमः ।

५१६. ॐ मुकुन्दाय नमः ।

५१७. ॐ विगतज्वराय नमः ।

५१८. ॐ स्वयं ज्योतिषे नमः ।

५१९. ॐ महाज्योतिषे नमः ।

५२०. ॐ तनुज्योतिषे नमः ।

५२१. ॐ अचञ्चलाय नमः ।

५२२. ॐ पिंगलाय नमः ।

५२३. ॐ कपिलश्मश्रवे नमः ।

५२४. ॐ भालनेत्राय नमः ।

५२५. ॐ त्रयीतनवे नमः ।

५२६. ॐ ज्ञानस्कन्दाय नमः ।

५२७. ॐ महानीतये नमः ।

५२८. ॐ विश्वोत्पत्तये नमः ।

५२९. ॐ उपप्लवाय नमः ।

५३०. ॐ भगाय नमः ।

५३१. ॐ विवस्वते नमः ।

५३२. ॐ आदित्याय नमः ।

५३३. ॐ गतपाराय नमः ।

५३४. ॐ बृहस्पतये नमः ।

५३५. ॐ कल्याणगुणनाम्ने नमः।

५३६. ॐ पापघ्ने नमः ।

५३७. ॐ पुण्यदर्शनाय नमः ।

५३८. ॐ उदारकीर्तये नमः ।

५३९. ॐ उद्योगिने नमः ।

५४०. ॐ सद्योगिने नमः ।

५४१. ॐ सदसत्त्रपाय नमः ।

५४२. ॐ नक्षत्रमालिने नमः ।

५४३. ॐ नाकेशाय नमः ।

५४४. ॐ स्वाधिष्ठानषडाश्रयाय नमः ।

५४५. ॐ पवित्राय पापनाशाय नमः।

५४६. ॐ मणिपूराय नमः ।

५४७. ॐ नभोगतये नमः ।

५४८. ॐ हृत्पुण्डरीकमासीनाय नमः।

५४९. ॐ शक्राय नमः ।

५५०. ॐ शान्ताय नमः ।

५५१. ॐ वृषाकपये नमः ।

५५२. ॐ उष्णाय नमः ।

५५३. ॐ गृहपतये नमः ।

५५४. ॐ कृष्णाय नमः ।

५५५. ॐ समर्थाय नमः ।

५५६. ॐ अनर्थनाशनाय नमः ।

५५७. ॐ अधर्मशत्रवे नमः ।

५५८. ॐ अज्ञेयाय नमः ।

५५९. ॐ पुरुहूताय पुरुश्रुताय नमः।

५६०. ॐ ब्रह्मगर्भाय नमः ।

५६१. ॐ बृहद्गर्भाय नमः ।

५६२. ॐ धर्मधेनवे नमः ।

५६३. ॐ धनागमाय नमः ।

५६४. ॐ जगद्धितैषिणे नमः ।

५६५. ॐ सुगताय नमः ।

५६६. ॐ कुमाराय नमः ।

५६७. ॐ कुशलागमाय नमः ।

५६८. ॐ हिरण्यवर्णाय ज्योतिष्मते नमः ।

५६९. ॐ नानाभूतरताय नमः ।

५७०. ॐ ध्वनये नमः ।

५७१. ॐ आरोग्याय नमः ।

५७२. ॐ नमनाध्यक्षाय नमः ।

५७३. ॐ विश्वामित्राय नमः ।

५७४. ॐ धनेश्वराय नमः ।

५७५. ॐ ब्रह्मज्योतिषे नमः ।

५७६. ॐ वसवे नमः ।

५७७. ॐ धाम्ने नमः ।

५७८. ॐ अनुत्तममहाज्योतिषे नमः।

५७९. ॐ मातामहाय नमः ।

५८०. ॐ मातरिश्वने नमः ।

५८१. ॐ नभस्वते नमः ।

५८२. ॐ नागहारधृषे नमः ।

५८३. ॐ पुलस्त्याय नमः ।

५८४. ॐ पुलहाय नमः ।

५८५. ॐ अगस्त्याय नमः ।

५८६. ॐ जातूकर्ण्याय नमः ।

५८७. ॐ पराशराय नमः ।

५८८. ॐ निरावरणनिर्वाराय नमः।

५८९. ॐ वैरञ्च्याय नमः ।

५९०. ॐ विष्टरश्रवसे नमः ।

५९१. ॐ आत्मभुवे नमः ।

५९२. ॐ अनिरुद्धाय नमः ।

५९३. ॐ अत्रये नमः ।

५९४. ॐ ज्ञानमूर्तये नमः ।

५९५. ॐ महायशसे नमः ।

५९६. ॐ लोकवीराग्रण्ये नमः ।

५९७. ॐ वीराय नमः ।

५९८. ॐ चण्डाय नमः ।

५९९. ॐ सत्यपराक्रमाय नमः ।

**६००. ॐ व्यालकल्पाय नमः ।**

६०१. ॐ महाकल्पाय नमः ।

६०२. ॐ कल्पवृक्षाय नमः ।

६०३. ॐ कलाधराय नमः ।

६०४. ॐ अलंकरिष्णवे नमः ।

६०५. ॐ अचलाय नमः ।

६०६. ॐ रोचिष्णवे नमः ।

६०७. ॐ विक्रमोन्नताय नमः ।

६०८. ॐ आयुषे नमः ।

६०९. ॐ शब्दपतये नमः ।

६१०. ॐ वाग्मिने नमः ।

६११. ॐ प्लवनाय नमः ।

६१२. ॐ शिखिसारथये नमः ।

६१३. ॐ असंसृष्टाय नमः ।

६१४. ॐ अतिथये नमः ।

६१५. ॐ शत्रवे नमः ।

६१६. ॐ प्रमाथिने नमः ।

६१७. ॐ पादपासनाय नमः ।

६१८. ॐ वसुश्रवसे नमः ।

६१९. ॐ कव्यवाहाय नमः ।

६२०. ॐ प्रतप्ताय नमः ।

६२१. ॐ विश्वभोजनाय नमः ।

६२२. ॐ जप्याय नमः ।

६२३. ॐ जरादिशमनाय नमः ।

६२४. ॐ लोहिताय तनूनपते नमः।

६२५. ॐ पृषदश्वाय नमः ।

६२६. ॐ नभोयोनये नमः ।

६२७. ॐ सुप्रतीकाय नमः ।

६२८. ॐ तमिस्रघ्ने नमः ।

६२९. ॐ निदाघाय तपनाय नमः।

६३०. ॐ मेघभक्षाय नमः ।

६३१. ॐ परपुरञ्जयाय नमः ।

६३२. ॐ सुखानिलाय नमः ।

६३३. ॐ सुनिष्पन्नाय नमः ।

६३४. ॐ सुरभये शिशिरात्मकाय नमः ।

६३५. ॐ वसन्ताय माधवाय नमः।

६३६. ॐ ग्रीष्माय नमः ।

६३७. ॐ नभस्याय नमः ।

६३८. ॐ बीजवाहनाय नमः ।

६३९. ॐ अङ्गिरागुरवे नमः ।

६४०. ॐ आत्रेयाय नमः ।

६४१. ॐ विमलाय नमः ।

६४२. ॐ विश्वपावनाय नमः ।

६४३. ॐ पावनाय नमः ।

६४४. ॐ पुरजिते नमः ।

६४५. ॐ शक्राय नमः ।

६४६. ॐ त्रैविद्याय नमः ।

६४७. ॐ नववारणाय नमः ।

६४८. ॐ मनोबुद्धये नमः ।

६४९. ॐ अहंकाराय नमः ।

६५०. ॐ क्षेत्रज्ञाय नमः ।

६५१. ॐ क्षेत्रपालकाय नमः ।

६५२. ॐ जमदग्नये नमः ।

६५३. ॐ बलनिधये नमः ।

६५४. ॐ विगालाय नमः ।

६५५. ॐ विश्वगालवाय नमः ।

६५६. ॐ अघोराय नमः ।

६५७. ॐ अनुत्तराय नमः ।

६५८. ॐ यज्ञाय नमः ।

६५९. ॐ श्रेयसे नमः ।

६६०. ॐ निःश्रेयसप्रदाय नमः ।

६६१. ॐ शैलाय नमः ।

६६२. ॐ गगनकुन्दाभाय नमः ।

६६३. ॐ दानवारये नमः ।

६६४. ॐ अरिन्दमाय नमः ।

६६५. ॐ चामुण्डाय नमः ।

६६६. ॐ जनकाय नमः ।

६६७. ॐ चारुनिःशल्याय नमः ।

६६८. ॐ लोकशल्यधृषे नमः ।

६६९. ॐ चतुर्वेदाय नमः ।

६७०. ॐ चतुर्भावाय नमः ।

६७१. ॐ चतुराय नमः ।

६७२. ॐ चतुरप्रियाय नमः ।

६७३. ॐ आम्नायाय नमः ।

६७४. ॐ समाम्नायाय नमः ।

६७५. ॐ तीर्थदेवाय शिवालयाय नमः ।

६७६. ॐ बहुरूपाय नमः ।

६७७. ॐ महारूपाय नमः ।

६७८. ॐ सर्वरूपाय नमः ।

६७९. ॐ चराचराय नमः ।

६८०. ॐ न्यायनिर्मायकाय नमः।

६८१. ॐ नेयाय नमः ।

६८२. ॐ न्यायगम्याय नमः ।

६८३. ॐ निरञ्जनाय नमः ।

६८४. ॐ सहस्रमूर्ध्ने नमः ।

६८५. ॐ देवेन्द्राय नमः ।

६८६. ॐ सर्वशस्त्रप्रभञ्जनाय नमः।

६८७. ॐ मुण्डिने नमः ।

६८८. ॐ विरूपाय नमः ।

६८९. ॐ विकृताय नमः ।

६९०. ॐ दण्डिने नमः ।

६९१. ॐ नादिने नमः ।

६९२. ॐ गुणोत्तमाय नमः ।

६९३. ॐ पिंगलाक्षाय नमः ।

६९४. ॐ बह्वक्षाय नमः ।

६९५. ॐ नीलग्रीवाय नमः ।

६९६. ॐ निरामयाय नमः ।

६९७. ॐ सहस्रबाहवे नमः ।

६९८. ॐ सर्वेशाय नमः ।

६९९. ॐ शरण्याय नमः ।

**७००. ॐ सर्वलोकधृषे नमः ।**

७०१. ॐ पद्मासनाय नमः ।

७०२. ॐ परंज्योतिषे नमः ।

७०३. ॐ पारम्पर्यफलप्रदाय नमः।

७०४. ॐ पद्मगर्भाय नमः ।

७०५. ॐ महागर्भाय नमः ।

७०६. ॐ विश्वगर्भाय नमः ।

७०७. ॐ विचक्षणाय नमः ।

७०८. ॐ परावरज्ञाय नमः ।

७०९. ॐ वरदाय नमः ।

७१०. ॐ वरेण्याय नमः ।

७११. ॐ महास्वनाय नमः ।

७१२. ॐ देवासुरगुरुदेवाय नमः ।

७१३. ॐ देवासुरनमस्कृताय नमः।

७१४. ॐ देवासुरमहामित्राय नमः।

७१५. ॐ देवासुरमहेश्वराय नमः।

७१६. ॐ देवासुरेश्वराय नमः ।

७१७. ॐ दिव्याय नमः ।

७१८. ॐ देवासुरमहाश्रयाय नमः।

७१९. ॐ देवदेवाय नमः ।

७२०. ॐ अनयाय नमः ।

७२१. ॐ अचिन्त्याय नमः ।

७२२. ॐ देवतात्मने नमः ।

७२३. ॐ आत्मसंभवाय नमः ।

७२४. ॐ सद्याय नमः ।

७२५. ॐ महासुरव्याधाय नमः ।

७२६. ॐ देवसिंहाय नमः ।

७२७. ॐ दिवाकराय नमः ।

७२८. ॐ विबुधाग्रचराय श्रेष्ठाय नमः ।

७२९. ॐ सर्वदेवोत्तमोत्तमाय नमः।

७३०. ॐ शिवज्ञानरताय नमः ।

७३१. ॐ श्रीमते नमः ।

७३२. ॐ शिखिश्रीपर्वतप्रियाय नमः ।

७३३. ॐ वज्रहस्ताय नमः ।

७३४. ॐ सिद्धखड्गाय नमः ।

७३५. ॐ नरसिंहनिपातनाय नमः।

७३६. ॐ ब्रह्मचारिणे नमः ।

७३७. ॐ लोकचारिणे नमः ।

७३८. ॐ धर्मचारिणे नमः ।

७३९. ॐ धनाधिपाय नमः ।

७४०. ॐ नन्दिने नमः ।

७४१. ॐ नन्दीश्वराय नमः ।

७४२. ॐ अनन्ताय नमः ।

७४३. ॐ नग्नव्रतधराय नमः ।

७४४. ॐ शुचये नमः ।

७४५. ॐ लिंगाध्यक्षाय नमः ।

७४६. ॐ सुराध्यक्षाय नमः ।

७४७. ॐ युगाध्यक्षाय नमः ।

७४८. ॐ युगापहाय नमः ।

७४९. ॐ स्वधाम्ने नमः ।

७५०. ॐ स्वगताय नमः ।

७५१. ॐ स्वर्गिणे नमः ।

७५२. ॐ स्वराय नमः ।

७५३. ॐ स्वरमयस्वनाय नमः ।

७५४. ॐ बाणाध्यक्षाय नमः ।

७५५. ॐ बीजकर्त्रे नमः ।

७५६. ॐ कर्मकृते नमः ।

७५७. ॐ धर्मसम्भवाय नमः ।

७५८. ॐ दम्भाय नमः ।

७५९. ॐ लोभाय नमः ।

७६०. ॐ शम्भवे नमः ।

७६१. ॐ सर्वभूतमहेश्वराय नमः।

७६२. ॐ श्मशाननिलयाय नमः।

७६३. ॐ त्र्यक्षाय नमः ।

७६४. ॐ सेतवे नमः ।

७६५. ॐ अप्रतिमाकृतये नमः ।

७६६. ॐ लोकोत्तरस्फुटालोकाय नमः ।

७६७. ॐ त्र्यम्बकाय नमः ।

७६८. ॐ नागभूषणाय नमः ।

७६९. ॐ अन्धकारये नमः ।

७७०. ॐ मखद्वेषिणे नमः ।

७७१. ॐ विष्णुकन्धरपातनाय नमः।

७७२. ॐ हीनदोषाय नमः ।

७७३. ॐ अक्षयगुणाय नमः ।

७७४. ॐ दक्षारये नमः ।

७७५. ॐ पूषदन्तभिदे नमः ।

७७६. ॐ पूर्णाय नमः ।

७७७. ॐ पूरयित्रे नमः ।

७७८. ॐ पुण्याय नमः ।

७७९. ॐ सुकुमाराय नमः ।

७८०. ॐ सुलोचनाय नमः ।

७८१. ॐ सन्मार्गपाय नमः ।

७८२. ॐ प्रियाय नमः ।

७८३. ॐ धूर्त्ताय नमः ।

७८४. ॐ पुण्यकीर्तये नमः ।

७८५. ॐ अनामयाय नमः ।

७८६. ॐ मनोजवाय नमः ।

७८७. ॐ तीर्थकराय नमः ।

७८८. ॐ जटिलाय नमः ।

७८९. ॐ नियमेश्वराय नमः ।

७९०. ॐ जीवितान्तकराय नित्याय नमः ।

७९१. ॐ वसुरेतसे नमः ।

७९२. ॐ वसुप्रदाय नमः ।

७९३. ॐ सद्गतये नमः ।

७९४. ॐ सिद्धिदाय नमः ।

७९५. ॐ सिद्धये नमः ।

७९६. ॐ सज्जातये नमः ।

७९७. ॐ खलकण्टकाय नमः ।

७९८. ॐ कलाधराय नमः ।

७९९. ॐ महाकालभूताय नमः।

**८००. ॐ सत्यपरायणाय नमः।**

८०१. ॐ लोकलावण्यकर्त्रे नमः।

८०२. ॐ लोकोत्तरसुखालयाय नमः।

८०३. ॐ चन्द्रसंजीवनाय नमः ।

८०४. ॐ शास्त्रे नमः ।

८०५. ॐ लोकग्राहाय नमः ।

८०६. ॐ महाधिपाय नमः ।

८०७. ॐ लोकबन्धवे नमः ।

८०८. ॐ लोकनाथाय नमः ।

८०९. ॐ कृतज्ञाय नमः ।

८१०. ॐ कृत्तिभूषिताय नमः ।

८११. ॐ अनपायाय नमः ।

८१२. ॐ अक्षराय नमः ।

८१३. ॐ कान्ताय नमः ।

८१४. ॐ सर्वशस्त्रभृतांवराय नमः।

८१५. ॐ तेजोमयाय द्युतिधराय नमः ।

८१६. ॐ लोकमानिने नमः ।

८१७. ॐ घृणार्णवाय नमः ।

८१८. ॐ शुचिस्मिताय नमः ।

८१९. ॐ प्रसन्नात्मने नमः ।

८२०. ॐ अजेयाय नमः ।

८२१. ॐ दुरतिक्रमाय नमः ।

८२२. ॐ ज्योतिर्मयाय नमः ।

८२३. ॐ जगन्नाथाय नमः ।

८२४. ॐ निराकाराय नमः ।

८२५. ॐ जलेश्वराय नमः ।

८२६. ॐ तुम्बवीणाय नमः ।

८२७. ॐ महाकायाय नमः ।

८२८. ॐ विशोकाय नमः ।

८२९. ॐ शोकनाशनाय नमः ।

८३०. ॐ त्रिलोकपाय नमः ।

८३१. ॐ त्रिलोकेशाय नमः ।

८३२. ॐ सर्वशुद्धये नमः ।

८३३. ॐ अधोक्षजाय नमः ।

८३४. ॐ अव्यक्तलक्षणाय देवाय नमः ।

८३५. ॐ व्यक्ताव्यक्ताय नमः ।

८३६. ॐ विशांपतये नमः ।

८३७. ॐ वरशीलाय नमः ।

८३८. ॐ वरगुणाय नमः ।

८३९. ॐ साराय मानधराय नमः।

८४०. ॐ यमाय नमः ।

८४१. ॐ ब्रह्मणे नमः ।

८४२. ॐ विष्णवे प्रजापालाय नमः ।

८४३. ॐ हंसाय नमः ।

८४४. ॐ हंसगतये नमः ।

८४५. ॐ वयाय नमः ।

८४६. ॐ वेधसे नमः ।

८४७. ॐ विधात्रे नमः ।

८४८. ॐ धात्रे नमः ।

८४९. ॐ स्रष्ट्रे नमः ।

८५०. ॐ हर्त्रे नमः ।

८५१. ॐ चतुर्मुखाय नमः ।

८५२. ॐ कैलासशिखरावासिने नमः।

८५३. ॐ सर्वावासिने नमः ।

८५४. ॐ सदागतये नमः ।

८५५. ॐ हिरण्यगर्भाय नमः ।

८५६. ॐ द्रुहिणाय नमः ।

८५७. ॐ भूतपालाय नमः ।

८५८. ॐ भूपतये नमः ।

८५९. ॐ सद्योगिने नमः ।

८६०. ॐ योगविद्योगिने नमः ।

८६१. ॐ वरदाय नमः ।

८६२. ॐ ब्राह्मणप्रियाय नमः ।

८६३. ॐ देवप्रियाय नमः ।

८६४. ॐ देवनाथाय नमः ।

८६५. ॐ देवकाय नमः ।

८६६. ॐ देवचिन्तकाय नमः ।

८६७. ॐ विषमाक्षाय नमः ।

८६८. ॐ विरूपाक्षाय नमः ।

८६९. ॐ वृषदाय वृषवर्द्धनाय नमः।

८७०. ॐ निर्ममाय नमः ।

८७१. ॐ निरहंकाराय नमः ।

८७२. ॐ निर्मोहाय नमः ।

८७३. ॐ निरुपद्रवाय नमः ।

८७४. ॐ दर्पघ्ने नमः ।

८७५. ॐ दर्पदाय नमः ।

८७६. ॐ दृप्ताय नमः ।

८७७. ॐ सर्वार्थपरिवर्त्तकाय नमः।

८७८. ॐ सहस्रार्चये नमः ।

८७९. ॐ भूतिभूषाय नमः ।

८८०. ॐ स्निग्धाकृतये नमः ।

८८१. ॐ अदक्षिणाय नमः ।

८८२. ॐ भूतभव्यभवन्नाथाय नमः।

८८३. ॐ विभवाय नमः ।

८८४. ॐ भूतिनाशनाय नमः ।

८८५. ॐ अर्थाय नमः ।

८८६. ॐ अनर्थाय नमः ।

८८७. ॐ महाकोशाय नमः ।

८८८. ॐ परकार्यैकपण्डिताय नमः।

८८९. ॐ निष्कण्टकाय नमः ।

८९०. ॐ कृतानन्दाय नमः ।

८९१. ॐ निर्व्याजाय
व्याजमर्दनाय
नमः ।

८९२. ॐ सत्त्ववते नमः ।

८९३. ॐ सात्त्विकाय नमः ।

८९४. ॐ सत्याय नमः ।

८९५. ॐ कृतस्नेहाय नमः ।

८९६. ॐ कृतागमाय नमः ।

८९७. ॐ अकम्पिताय नमः ।

८९८. ॐ गुणग्राहिणे नमः ।

८९९. ॐ नैकात्मने नमः ।

**९००. ॐ नैककर्मकृते नमः ।**

९०१. ॐ सुप्रीताय नमः ।

९०२. ॐ सुखदाय नमः ।

९०३. ॐ सूक्ष्माय नमः ।

९०४. ॐ सुकराय नमः ।

९०५. ॐ दक्षिणानिलाय नमः ।

९०६. ॐ नन्दिस्कन्धधराय नमः।

९०७. ॐ धुर्य्याय नमः ।

९०८. ॐ प्रकटाय नमः ।

९०९. ॐ प्रीतिवर्द्धनाय नमः ।

९१०. ॐ अपराजिताय नमः ।

९११. ॐ सर्वसहाय नमः ।

९१२. ॐ गोविन्दाय नमः ।

९१३. ॐ सत्त्ववाहनाय नमः ।

९१४. ॐ अधृताय नमः ।

९१५. ॐ स्वधृताय नमः ।

९१६. ॐ सिद्धाय नमः ।

९१७. ॐ पूतमूर्तये नमः ।

९१८. ॐ यशोधनाय नमः ।

९१९. ॐ वाराहशृङ्गधृक्शृङ्गिणे
नमः।

९२०. ॐ बलवते नमः ।

९२१. ॐ एकनायकाय नमः ।

९२२. ॐ श्रुतिप्रकाशाय नमः ।

९२३. ॐ श्रुतिमते नमः ।

९२४. ॐ एकबन्धवे नमः ।

९२५. ॐ अनेकधृषे नमः ।

९२६. ॐ श्रीवत्सलशिवारम्भाय नमः ।

९२७. ॐ शान्तभद्राय नमः ।

९२८. ॐ समाय यशसे नमः ।

९२९. ॐ भूशयाय नमः ।

९३०. ॐ भूषणाय नमः ।

९३१. ॐ भूतये नमः ।

९३२. ॐ भूतिकृते नमः ।

९३३. ॐ भूतभावनाय नमः ।

९३४. ॐ अकम्पाय नमः ।

९३५. ॐ भक्तिकायाय नमः।

९३६. ॐ कालहानये नमः ।

९३७. ॐ कलाविभवे नमः ।

९३८. ॐ सत्यव्रतमहात्यागिने नमः ।

९३९. ॐ नित्यशान्तिपरायणाय नमः ।

९४०. ॐ परार्थवृत्तये वरदाय नमः।

९४१. ॐ विरक्ताय नमः ।

९४२. ॐ विशारदाय नमः ।

९४३. ॐ शुभदाय नमः ।

९४४. ॐ शुभकर्त्रे नमः ।

९४५. ॐ शुभनाम्ने नमः ।

९४६. ॐ स्वयं शुभाय नमः ।

९४७. ॐ अनर्थिताय नमः ।

९४८. ॐ गुणग्राहिणे नमः ।

९४९. ॐ अकर्त्रे नमः ।

९५०. ॐ कनकप्रभाय नमः ।

९५१. ॐ स्वभावभद्राय नमः ।

९५२. ॐ मध्यस्थाय नमः ।

९५३. ॐ शत्रुघ्नाय नमः ।

९५४. ॐ विघ्ननाशनाय नमः ।

९५५. ॐ शिखण्डिने नमः ।

९५६. ॐ कवचिने नमः ।

९५७. ॐ शूलिने नमः ।

९५८. ॐ जटिने नमः ।

९५९. ॐ मुण्डिने नमः ।

९६०. ॐ कुण्डलिने नमः ।

९६१. ॐ अमृत्यवे नमः ।

९६२. ॐ सर्वदृशे सिंहाय नमः ।

९६३. ॐ तेजोराशये महामणये नमः ।

९६४. ॐ असंख्येयाय नमः ।

९६५. ॐ अप्रमेयात्मने नमः ।

९६६. ॐ वीर्यवते नमः ।

९६७. ॐ वीर्यकोविदाय नमः ।

९६८. ॐ वेद्याय नमः ।

९६९. ॐ वियोगात्मने नमः ।

९७०. ॐ सप्तावरमुनीश्वराय नमः।

९७१. ॐ अनुत्तमाय दुराधर्षाय नमः ।

९७२. ॐ मधुरप्रियदर्शनाय नमः।

९७३. ॐ सुरेशाय नमः ।

९७४. ॐ स्मरणाय नमः ।

९७५. ॐ शर्वाय नमः ।

९७६. ॐ शब्दाय नमः ।

९७७. ॐ प्रतपतां वराय नमः ।

९७८. ॐ कालपक्षाय नमः ।

९७९. ॐ कालकालाय नमः ।

९८०. ॐ कंकणीकृतवासुकये नमः ।

९८१. ॐ महेष्वासाय नमः ।

९८२. ॐ महीभर्त्रे नमः ।

९८३. ॐ निष्कलङ्काय नमः ।

९८४. ॐ विशृङ्खलाय नमः ।

९८५. ॐ द्युमणये तरणये नमः ।

९८६. ॐ धन्याय नमः ।

९८७. ॐ सिद्धिदाय नमः ।

९८८. ॐ सिद्धिसाधनाय नमः ।

९८९. ॐ विश्वतः सम्प्रवृत्ताय नमः ।

९९०. ॐ व्यूढोरस्काय नमः ।

९९१. ॐ महाभुजाय नमः ।

९९२. ॐ सर्वयोनये नमः ।

९९३. ॐ निरातङ्काय नमः ।

९९४. ॐ नरनारायणप्रियाय नमः।

९९५. ॐ निर्लेपाय नमः ।

९९६. ॐ यतिसंगात्मने नमः ।

९९७. ॐ निर्व्यङ्गाय नमः ।

९९८. ॐ व्यङ्गनाशनाय नमः ।

९९९. ॐ स्तव्याय नमः ।

**१०००. ॐ स्तवप्रियाय नमः ।**

१००१. ॐ स्तोत्रे नमः ।

१००२. ॐ व्यासमूर्तये नमः ।

१००३. ॐ निराकुलाय नमः ।

१००४. ॐ निरवद्यमयोपायाय नमः।

१००५. ॐ विद्याराशये नमः ।

१००६. ॐ सत्कृताय नमः ।

१००७. ॐ प्रशान्तबुद्धये नमः ।

१००८. ॐ अक्षुण्णाय नमः ।

१००९. ॐ संग्रहाय नमः ।

१०१०. ॐ नित्यसुन्दराय नमः ।

१०११. ॐ वैयाघ्रधुर्याय नमः ।

१०१२. ॐ धात्रीशाय नमः ।

१०१३. ॐ संकल्पाय नमः ।

१०१४. ॐ शर्वरीपतये नमः ।

१०१५. ॐ परमार्थगुरवे नमः ।

१०१६. ॐ दत्ताय नमः ।

१०१७. ॐ सूरये नमः ।

१०१८. ॐ आश्रितवत्सलाय नमः।

१०१९. ॐ सोमाय नमः ।

१०२०. ॐ रसज्ञाय रसदाय नमः।

१०२१. ॐ सर्वसत्त्वावलम्बनाय नमः।

ॐ

लिङ्गपुराणान्तर्गतं (अध्याय : ६५)

## श्रीशिवसहस्रनामस्तोत्रम्

ॐ स्थिरः स्थाणुः प्रभुर्भानुः प्रवरो वरदो वरः ।
सर्वात्मा सर्वविख्यातः सर्वः सर्वकरो भवः ।
जटी दण्डी शिखण्डी च सर्वगः सर्वभावनः ॥ १ ॥

हरिश्च हरिणाक्षश्च सर्वभूतहरः स्मृतः ।
प्रवृत्तिश्च निवृत्तिश्च शान्तात्मा शाश्वतो ध्रुवः ॥ २ ॥

श्मशानवासी भगवान् खचरो गोचरोऽर्दनः ।
अभिवाद्यो महाकर्मा तपस्वी भूतधारणः ॥ ३ ॥

उन्मत्तवेशः प्रच्छन्नः सर्वलोकः प्रजापतिः ।
महारूपो महाकायः सर्वरूपो महायशाः ॥ ४ ॥

महात्मा सर्वभूतश्च विरूपो वामनो नरः ।
लोकपालोऽन्तर्हितात्मा प्रसादोऽभयदो विभुः ॥ ५ ॥

पवित्रश्च महांश्चैव नियतो नियताश्रयः ।
स्वयम्भूः सर्वकर्मा च आदिरादिकरो निधिः ॥ ६ ॥

सहस्राक्षो विशालाक्षः सोमो नक्षत्रसाधकः ।
चन्द्रः सूर्य शनिः केतुर्ग्रहो ग्रहपतिर्मतः ॥ ७ ॥

राजा राज्योदयः कर्ता मृगबाणार्पणो घनः ।
महातपा दीर्घतपा अदृश्यो धनसाधकः ॥ ८ ॥

संवत्सरः कृतो मन्त्रः प्राणायामः परन्तपः ।
योगी योगो महाबीजो महारेता महाबलः ॥ ९ ॥

सुवर्णरेताः सर्वज्ञः सुबीजो वृषवाहनः ।
दशबाहुस्त्वनिमिषो नीलकण्ठ उमापतिः ॥ १० ॥

विश्वरूपः स्वयंश्रेष्ठो बलवीरो बलाग्रणीः ।
गणकर्ता गणपतिर्दिग्वासाः काम्य एव च ॥ ११ ॥

मन्त्रवित् परमो मन्त्रः सर्वभावकरो हरः ।
कमण्डलुधरो धन्वी बाणहस्तः कपालवान् ॥ १२ ॥

शरी शतघ्नी खड्गी च पट्टिशी चायुधी महान् ।
अजश्च मृगरूपश्च तेजस्तेजस्करो विधिः ॥ १३ ॥

उष्णीषी च सुवक्त्रश्च उदग्रो विनतस्तथा ।
दीर्घश्च हरिकेशश्च सुतीर्थः कृष्ण एव च ॥ १४ ॥

शृगालरूपः सर्वार्थो मुण्डः सर्वशुभङ्करः ।
सिंहशार्दूलरूपश्च गन्धकारी कपर्द्यपि ॥ १५ ॥

ऊर्ध्वरेतोर्ध्वलिंगी च ऊर्ध्वशायी नभस्तलः ।
त्रिजटी चीरवासाश्च रुद्रः सेना पतिर्विभुः ॥ १६ ॥

अहोरात्रञ्च नक्तञ्च तिग्ममन्युः सुवर्चसः ।
गजहा दैत्यहा कालो लोकधाता गुणाकरः ॥ १७ ॥

सिंहशार्दूलरूपाणामार्द्रचर्म्माम्बरंधरः ।
कालयोगी महानादः सर्वावासश्चतुष्पथः ॥ १८ ॥

निशाचरः प्रेतचारी सर्वदर्शी महेश्वरः ।
बहु भूतो बहुधनः सर्वसारोऽमृतेश्वरः ॥ १९ ॥

नृत्यप्रियो नित्यनृत्यो नर्त्तनः सर्वसाधकः ।
सकार्मुको महाबाहुर्महाघोरो महातपाः ॥ २० ॥

महाशरो महापाशो नित्यो गिरिचरोऽमतः ।
सहस्रहस्तो विजयो व्यवसायो ह्यनिन्दितः ॥ २१ ॥

अमर्षणो मर्षणात्मा यज्ञहा कामनाऽशनः ।
दक्षहा परिचारी च प्रहसो मध्यमस्तथा ॥ २२ ॥

तेजोपहारी बलवान् विदितोऽभ्युदितोऽबहुः ।
गंभीरघोषो योगात्मा यज्ञहा कामनाऽशनः ॥ २३ ॥

गंभीररोषो गंभीरो गंभीरबलवाहनः ।
न्यग्रोधरूपो न्यग्रोधो विश्वकर्मा च विश्वभुक् ॥ २४ ॥

तीक्ष्णोपायश्च हर्यश्वः सहायः कर्मकालवित् ।
विष्णुः प्रसादितो यज्ञः समुद्रो वडवामुखः ॥ २५ ॥

हुताशनसहायश्च प्रशांतात्मा हुताशनः ।
उग्रतेजा महातेजा जयो विजयकालवित् ॥ २६ ॥

ज्योतिषामयनं सिद्धिः सन्धिर्विग्रह एव च ।
खड्गी शंखी जटी ज्वाली खचरो द्युचरो बली ॥ २७ ॥

वैणवी पणवी कालः कालकण्ठः कटङ्कटः ।
नक्षत्रविग्रहो भावो निभावः सर्वतोमुखः ॥ २८ ॥

विमोचनस्तु शरणो हिरण्यकवचोद्भवः ।
मेखलाकृतिरूपश्च जलाचारः स्तुतस्तथा ॥ २९ ॥

वीणी च पणवी ताली नाली कलिकटुस्तथा ।
सर्वतूर्यनिनादी च सर्वव्याप्यपरिग्रहः ॥ ३० ॥

व्यालरूपी बिलावासी गुहावासी तरंगवित् ।
वृक्षः श्रीमालकर्मा च सर्वबन्धविमोचनः ॥ ३१ ॥

बन्धनस्तु सुरेन्द्राणां युधि शत्रुविनाशनः ।
सखा प्रवासो दुर्वापः सर्वसाधुनिषेवितः ॥ ३२ ॥

प्रस्कन्दोप्यविभावश्च तुल्यो यज्ञविभागवित् ।
सर्ववासः सर्वचारी दुर्वासा वासवो मतः ॥ ३३ ॥

हैमो हेमकरो यज्ञः सर्वधारी धरोत्तमः ।
आकाशो निर्विरूपश्च विवासा उरगः खगः ॥ ३४ ॥

भिक्षुश्च भिक्षुरूपी च रौद्ररूपः सुरूपवान् ।
वसुरेताः सुवर्चस्वी वसुवेगो महाबलः ॥ ३५ ॥

मनो वेगो निशाचारः सर्वलोकशुभप्रदः ।
सर्वावासी त्रयीवासी उपदेशकरो धरः ॥ ३६ ॥

मुनिरात्मा मुनिर्लोकः सभाग्यश्च सहस्रभुक् ।
पक्षी च पंक्षरूपश्च अतिदीप्तो निशाकरः ॥ ३७ ॥

समीरो दमनाकारो ह्यर्थो ह्यर्थकरो वशः ।
वासुदेवश्च देवश्च वामदेवश्च वामनः ॥ ३८ ॥

सिद्धियोगापहारी च सिद्धः सर्वार्थसाधकः ।
अक्षुण्णः क्षुण्णरूपश्च वृषणो मृदुरव्ययः ॥ ३९ ॥

महासेनो विशाखश्च षष्टिभागो गवांपतिः ।
चक्रहस्तस्तु विष्टम्भी मूलस्तम्भन एव च ॥ ४० ॥

ऋतुर्ऋतुकरस्तालो मधुर्मधुकरो वरः ।
वानस्पत्यो वाजसनो नित्यमाश्रमपूजितः ॥ ४१ ॥

ब्रह्मचारी लोकचारी सर्वचारी सुचारवित् ।
ईशान ईश्वरः कालो निशाचारी ह्यनेकदृक् ॥ ४२ ॥

निमित्तस्थो निमित्तं च नन्दिर्नन्दिकरो हरः ।
नन्दीश्वरः सुनन्दी च नन्दनो विषमर्दनः ॥ ४३ ॥

भगहारी नियन्ता च कालो लोकपितामहः ।
चतुर्मुखो महालिङ्गश्चारुलिङ्गस्तथैव च ॥ ४४ ॥

लिङ्गाध्यक्षः सुराध्यक्षः कालाध्यक्षो युगावहः ।
बीजाध्यक्षो बीजकर्ता अध्यात्मानुगतो बलः ॥ ४५ ॥

इतिहासश्च कल्पश्च दमनो जगदीश्वरः ।
दम्भो दम्भकरो दाता वंशो वंशकरः कलिः ॥ ४६ ॥

लोककर्त्ता पशुपतिर्महाकर्त्ता ह्यधोक्षजः ।
अक्षरं परमं ब्रह्म बलवाञ्छुक्र एव च ॥ ४७ ॥

नित्यो ह्यनीशः शुद्धात्मा शुद्धो मानो गतिर्हविः ।
प्रासादस्तु बलो दर्पो दर्पणो हव्य इन्द्रजित् ॥ ४८ ॥

वेदकारः सूत्रकारो विद्वांश्च परमर्दनः ।
महामेघनिवासी च महाघोरो वशी करः ॥ ४९ ॥

अग्निज्वालो महाज्वालः परिधूम्रावृतो रविः ।
धिषणः शंकरो नित्यो वर्चस्वी धूम्रलोचनः ॥ ५० ॥

नीलस्तथाङ्गलुप्तश्च शोभनो नरविग्रहः ।
स्वस्ति स्वस्तिस्वभावश्च भोगी भोगकरो लघुः ॥ ५१ ॥

उत्सङ्गश्च महाङ्गश्च महागर्भः प्रतापवान् ।
कृष्णवर्णः सुवर्णश्च इन्द्रियः सर्ववर्णिकः ॥ ५२ ॥

महापादो महाहस्तो महाकायो महायशाः ।
महामूर्धा महामात्रो महामित्रो नगालयः ॥ ५३ ॥

महास्कन्धो महाकर्णो महोष्ठश्च महाहनुः ।
महानासो महाकण्ठो महाग्रीवः श्मशानवान् ॥ ५४ ॥

महाबलो महातेजा ह्यन्तरात्मा मृगालयः ।
लम्बितोष्ठश्च निष्ठश्च महामायः पयोनिधिः ॥ ५५ ॥

महादन्तो महादंष्ट्रो महाजिह्वो महामुखः ।
महानखो महारोमा महाकेशो महाजटः ॥ ५६ ॥

असपत्नः प्रसादश्च प्रत्ययो गीतसाधकः ।
प्रस्वेदनोऽस्वहेनश्च आदिकश्च महामुनिः ॥ ५७ ॥

वृषको वृषकेतुश्च अनलो वायुवाहनः ।
मण्डली मेरुवासश्च देववाहन एव च ॥ ५८ ॥

अथर्वशीर्षः सामास्य ऋक्सहस्रोर्जितेक्षणः ।
यजुः पादभुजो गुह्यः प्रकाशौजास्तथैव च ॥ ५९ ॥

अमोघार्थप्रसादश्च अन्तर्भाव्यः सुदर्शनः ।
उपहारः प्रियः सर्वः कनकः काञ्चनस्थितः ॥ ६० ॥

नाभिर्नन्दिकरो हर्म्यः पुष्करः स्थपतिः स्थितः ।
सर्वशास्त्रो धनश्चाद्यो यज्ञो यज्वा समाहितः ॥ ६१ ॥

नगो नीलः कविः कालो मकरः कालपूजितः ।
सगणो गणकारश्च भूतभावनसारथिः ॥ ६२ ॥

भस्मशायी भस्मगोप्ता भस्मभूततनुर्गणः ।
आगमश्च विलोपश्च महात्मा सर्वपूजितः ॥ ६३ ॥

शुक्लः स्त्रीरूपसम्पन्नः शुचिर्भूतनिषेवितः ।
आश्रमस्थः कपोतस्थो विश्वकर्मा पतिर्विराट् ॥ ६४ ॥

विशालशाखस्ताम्रोष्ठो ह्यम्बुजालः सुनिश्चितः ।
कपिलः कलशः स्थूल आयुधश्चैव रोमशः ॥ ६५ ॥

गन्धर्वो ह्यदितिस्तार्क्ष्यो ह्यविज्ञेयः सुशारदः ।
परश्वधायुधो देवो ह्यर्थकारी सुबान्धवः ॥ ६६ ॥

तुम्बवीणो महाकोप ऊर्ध्वरेता जलेशयः ।
उग्रो वंशकरो वंशो वंशवादी ह्यनिन्दितः ॥ ६७ ॥

सर्वाङ्गरूपी मायावी सुहृदो ह्यनिलो बलः ।
बन्धनो बन्धकर्ता च सुबन्धनविमोचनः ॥ ६८ ॥

राक्षसघ्नोऽथ कामारिर्महादंष्ट्रो महायुधः ।
लम्बितो लम्बितोष्ठश्च लम्बहस्तो वरप्रदः ॥ ६९ ॥

बाहुस्त्वनिन्दितः सर्वः शङ्करोऽथाप्यकोपनः ।
अमरेशो महाघोरो विश्वदेवः सुरारिहा ॥ ७० ॥

अहिर्बुध्न्यो निर्ऋतिश्च चेकितानो हली तथा ।
अजैकपाच्च कापाली शं कुमारो महागिरिः ॥ ७१ ॥

धन्वन्तरिर्धूमकेतुः सूर्यो वैश्रवणस्तथा ।
धाता विष्णुश्च शक्रश्च मित्रस्त्वष्टा धरो ध्रुवः ॥ ७२ ॥

प्रभासः पर्वतो वायुरर्यमा सविता रविः ।
धृतिश्चैव विधाता च मान्धाता भूतभावनः ॥ ७३ ॥

नीरस्तीर्थश्च भीमश्च सर्वकर्मा गुणोद्वहः ।
पद्मगर्भो महागर्भश्चन्द्रवक्रो नभोऽनघः ॥ ७४ ॥

बलवांश्चोपशान्तश्च पुराणः पुण्यकृत्तमः ।
क्रूरकर्ता क्रूरवासी तनुरात्मा महौषधः ॥ ७५ ॥

सर्वाशयः सर्वचारी प्राणेशः प्राणिनां पतिः ।
देवदेवः सुखोत्सिक्तः सदसत्सर्वरत्नवित् ॥ ७६ ॥

कैलासस्थो गुहावासी हिमवद् गिरिसंश्रयः ।
कुलहारी कुलकर्ता बहुवित्तो बहुप्रजः ॥ ७७ ॥

प्राणेशो बन्धकी वृक्षो नकुलश्चाद्रिकस्तथा ।
ह्रस्वग्रीवो महाजानुरलोलश्च महौषधिः ॥ ७८ ॥

सिद्धान्तकारी सिद्धार्थश्छन्दो व्याकरणोद्भवः ।
सिंहनादः सिंहदंष्ट्रः सिंहास्यः सिंहवाहनः ॥ ७९ ॥

प्रभावात्मा जगत्कालः कालः कम्पी तरुस्तनुः ।
सारङ्गो भूतचक्राङ्कः केतुमाली सुवेधकः ॥ ८० ॥

भूतालयो भूतपतिरहोरात्रो मलोऽमलः ।
वसुभृत् सर्वभूतात्मा निश्चलः सुविदुर्बुधः ॥ ८१ ॥

असुहृत् सर्वभूतानां निश्चलश्चलविद् बुधः ।
अमोघः संयमो हृष्टो भोजनः प्राणधारणः ॥ ८२ ॥

धृतिमान् मतिमांस्त्र्यक्षः सुकृतस्तु युधां पतिः ।
गोपालो गोपतिर्ग्रामो गोचर्मवसनो हरः ॥ ८३ ॥

हिरण्यबाहुश्च तथा गुहावासः प्रवेशनः ।
महामना महाकामो चित्तकामो जितेन्द्रियः ॥ ८४ ॥

गान्धारश्च सुरापश्च तापकर्मरतो हितः ।
महाभूतो भूतवृतो ह्यप्सरो गणसेवितः ॥ ८५ ॥

महाकेतुर्धराधाता नैकतानरतः स्वरः ।
अवेदनीय आवेद्यः सर्वगश्च सुखावहः ॥ ८६ ॥

तारणश्चरणो धाता परिधा परिपूजितः ।
संयोगी वर्धनो वृद्धो गणिकोऽथ गणाधिपः ॥ ८७ ॥

नित्यो धाता सहायश्च देवासुरपतिः पतिः ।
युक्तश्च युक्तबाहुश्च सुदेवोऽपि सुपर्वणः ॥ ८८ ॥

आषाढश्च सुषाढश्च स्कन्धदो हरितो हरः ।
वपुरावर्त्तमानोऽन्यो वपुः श्रेष्ठो महावपुः ॥ ८९ ॥

शिरो विमर्शनः संर्व-लक्ष्यलक्षणभूषितः ।
अक्षयो रथगीतश्च सर्वभोगी महाबलः ॥ ९० ॥

साम्नायोऽथ महाम्नायस्तीर्थदेवो महायशाः ।
निर्जीवो जीवनो मन्त्रः सुभगो बहुकर्कशः ॥ ९१ ॥

रत्नभूतोऽथ रत्नांगः महार्णवनिपातवित् ।
मूलं विशालो ह्यमृतं व्यक्ताव्यक्तस्तपोनिधिः ॥ ९२ ॥

आरोहणोऽधिरोहश्च शीलधारी महातपाः ।
महाकण्ठो महायोगी युगो युगकरो हरिः ॥ ९३ ॥

युगरूपो महारूपो वहनो गहनो नगः ।
न्यायो निर्वापणोऽपादः पण्डितो ह्यचलोपमः ॥ ९४ ॥

बहुमालो महामालः शिपिविष्टः सुलोचनः ।
विस्तारो लवणः कूपः कुसुमाङ्गः फलोदयः ॥ ९५ ॥

ऋषभो वृषभो भंगो मणिबिम्बजटाधरः ।
इन्दुर्विसर्गः सुमुखः शूरः सर्वायुधः सहः ॥ ९६ ॥

निवेदनः सुधाजातः स्वर्गद्वारो महाधनुः ।
गिरिवासो विसर्गश्च सर्वलक्षणलक्षवित् ॥ ९७ ॥

गन्धमाली च भगवान् अनन्तः सर्वलक्षणः ।
सन्तानो बहुलो बाहुः सकलः सर्वपावनः ॥ ९८ ॥

करस्थाली कपाली च ऊर्ध्वसंहननो युवा ।
यन्त्रतन्त्रसुविख्यातो लोकः सर्वाश्रयो मृदुः ॥ ९९ ॥

मुण्डो विरूपो विकृतो दण्डी कुण्डी विकुर्वणः ।
वार्यक्षः ककुभो वज्री दीप्ततेजा सहस्रपात् ॥ १०० ॥

सहस्रमूर्धा देवेन्द्रः सर्वदेवमयो गुरुः ।
सहस्रबाहुः सर्वाङ्गः शरण्यः सर्वलोककृत् ॥ १०१ ॥

पवित्रं त्रिमधुर्मन्त्रः कनिष्ठः कृष्णपिंगलः ।
ब्रह्मदण्डविनिर्माता शतघ्नः शतपाशधृक् ॥ १०२ ॥

कला काष्ठा लवो मात्रा मुहूर्तोहः क्षपा क्षणः ।
विश्वक्षेत्रप्रदो बीजं लिंगमाद्यस्तु निर्मुखः ॥ १०३ ॥

सदसद्व्यक्तमव्यक्तं पिता माता पितामहः ।
स्वर्गद्वारं मोक्षद्वारं प्रजाद्वारं त्रिविष्टपः ॥ १०४ ॥

निर्वाणं हृदयश्चैव ब्रह्मलोकः परा गतिः ।
देवासुरविनिर्माता देवासुरपरायणः ॥ १०५ ॥

देवासुरगुरुर्देवो देवासुरनमस्कृतः ।
देवासुरमहामात्रो देवासुरगणाश्रयः ॥ १०६ ॥

 

देवासुरगणाध्यक्षो देवासुरगणाग्रणी: ।
देवाधिदेवो देवर्षिर्देवासुरवरप्रद: ॥ १०७ ॥

देवासुरेश्वरो विष्णुर्देवासुरमहेश्वर: ।
सर्वदेवमयोऽचिन्त्यो देवतात्मा स्वयम्भव: ॥ १०८ ॥

उद्गतस्त्रिक्रमो वैद्यो वरदोऽवरजोऽम्बर: ।
इज्यो हस्ती तथा व्याघ्रो देवसिंहो महर्षभ: ॥ १०९ ॥

विबुधाग्र्य: सुर: श्रेष्ठ: स्वर्गदेवस्तथोत्तम: ।
संयुक्त: शोभनो वक्ता आशानां प्रभवोव्यय: ॥ ११० ॥

गुरु: कान्तो निज: सर्ग: पवित्र: सर्ववाहन: ।
शृङ्गी शृङ्गप्रियो बभ्रूराजराजो निरामय: ॥ १११ ॥

अभिराम: सुशरणो निराम: सर्वसाधन: ।
ललाटाक्षो विश्वदेहो हरिणो ब्रह्मवर्चस: ॥ ११२ ॥

स्थावराणां पतिश्चैव नियतेन्द्रियवर्तन: ।
सिद्धार्थ: सर्वभूतार्थोऽचिन्त्य: सत्य: शुचिव्रत: ॥ ११३ ॥

व्रताधिप: परं ब्रह्म मुक्तानां परमा गति: ।
विमुक्तो मुक्तकेशश्च श्रीमाञ्छ्रीवर्धनो जगत् ॥ ११४ ॥

यथाप्रधानं भगवानिति भक्त्या स्तुतो मया ।
भक्तिमेवं पुरस्कृत्य मया यज्ञपतिर्विभु: ॥ ११५ ॥

ततो ह्यनुज्ञां प्राप्यैवं स्तुतो भक्तिमतां गतिः ।
तस्माल्लब्ध्वा स्तवं शम्भोर्नृपस्त्रैलोक्यविश्रुतः ॥ ११६ ॥

अश्वमेधसहस्रस्य फलं प्राप्य महायशाः ।
गणाधिपत्यं सम्प्राप्तस्तण्डिनस्तेजसा प्रभोः ॥ ११७ ॥

यः पठेच्छृणुयाद्वापि श्रावयेद् ब्राह्मणानपि ।
अश्वमेधसहस्रस्य फलं प्राप्नोति वै द्विजाः ॥ ११८ ॥

ब्रह्मघ्नश्च सुरापश्च स्तेयी च गुरुतल्पगः ।
शरणागतघाती च मित्रविश्वासघातकः ॥ ११९ ॥

मातृहा पितृहा चैव वीरहा भ्रूणहा तथा ।
संवत्सरं क्रमाज्जप्त्वा त्रिसंध्यं शंकराश्रमे ।
देवमिष्ट्वा त्रिसंध्यं च सर्वपापैः प्रमुच्यते ॥ १२० ॥

**॥ इति श्रीलिङ्गमहापुराणे पूर्वभागे रुद्रसहस्रनामकथनं नाम पञ्चषष्टितमोऽध्यायः ॥**

# ॥ अथ नामावलिः ॥

१. ॐ स्थिराय नमः ।
२. ॐ स्थाणवे नमः ।
३. ॐ प्रभवे नमः ।
४. ॐ भानवे नमः ।
५. ॐ प्रवराय नमः ।
६. ॐ वरदाय नमः ।
७. ॐ वराय नमः ।
८. ॐ सर्वात्मने नमः ।
९. ॐ सर्वविख्याताय नमः ।
१०. ॐ सर्वस्मै नमः ।
११. ॐ सर्वकराय नमः ।
१२. ॐ भवाय नमः ।
१३. ॐ जटिने नमः ।
१४. ॐ दण्डिने नमः ।
१५. ॐ शिखण्डिने नमः ।
१६. ॐ सर्वगाय नमः ।
१७. ॐ सर्वभावनाय नमः ।
१८. ॐ हरये नमः ।
१९. ॐ हरिणाक्षाय नमः ।
२०. ॐ सर्वभूतहराय नमः ।
२१. ॐ स्मृताय नमः ।
२२. ॐ प्रवृत्तये नमः ।
२३. ॐ निवृत्तये नमः ।
२४. ॐ शान्तात्मने नमः ।
२५. ॐ शाश्वताय नमः ।
२६. ॐ ध्रुवाय नमः ।
२७. ॐ श्मशानवासिने नमः ।
२८. ॐ भगवते नमः ।
२९. ॐ खचराय नमः ।
३०. ॐ गोचराय नमः ।
३१. ॐ अर्दनाय नमः ।
३२. ॐ अभिवाद्याय नमः ।
३३. ॐ महाकर्मणे नमः ।
३४. ॐ तपस्विने नमः ।
३५. ॐ भूतधारणाय नमः ।
३६. ॐ उन्मत्तवेषाय नमः ।
३७. ॐ प्रच्छन्नाय नमः ।
३८. ॐ सर्वलोकाय नमः ।
३९. ॐ प्रजापतये नमः ।
४०. ॐ महारूपाय नमः ।
४१. ॐ महाकायाय नमः ।
४२. ॐ सर्वरूपाय नमः ।
४३. ॐ महायशसे नमः ।
४४. ॐ महात्मने नमः ।

४५. ॐ सर्वभूताय नमः ।
४६. ॐ विरूपाय नमः ।
४७. ॐ वामनाय नमः ।
४८. ॐ नराय नमः ।
४९. ॐ लोकपालाय नमः ।
५०. ॐ अन्तर्हितात्मने नमः ।
५१. ॐ प्रसादाय नमः ।
५२. ॐ अभयदाय नमः ।
५३. ॐ विभवे नमः ।
५४. ॐ पवित्राय नमः ।
५५. ॐ महते नमः ।
५६. ॐ नियताय नमः ।
५७. ॐ नियताश्रयाय नमः ।
५८. ॐ स्वयंभुवे नमः ।
५९. ॐ सर्वकर्मणे नमः ।
६०. ॐ आदये नमः ।
६१. ॐ आदिकराय नमः ।
६२. ॐ निधये नमः ।
६३. ॐ सहस्राक्षाय नमः ।
६४. ॐ विशालाक्षाय नमः ।
६५. ॐ सोमाय नमः ।
६६. ॐ नक्षत्रसाधकाय नमः ।
६७. ॐ चन्द्राय नमः ।
६८. ॐ सूर्याय नमः ।
६९. ॐ शनये नमः ।
७०. ॐ केतवे नमः ।
७१. ॐ ग्रहाय नमः ।
७२. ॐ ग्रहपतये नमः ।
७३. ॐ मताय नमः ।
७४. ॐ राज्ञे नमः ।
७५. ॐ राज्योदयाय नमः ।
७६. ॐ कर्त्रे नमः ।
७७. ॐ मृगबाणार्पणाय नमः ।
७८. ॐ घनाय नमः ।
७९. ॐ महातपसे नमः ।
८०. ॐ दीर्घतपसे नमः ।
८१. ॐ अदृश्याय नमः ।
८२. ॐ धनसाधकाय नमः ।
८३. ॐ सम्वत्सराय नमः ।
८४. ॐ कृताय नमः ।
८५. ॐ मन्त्राय नमः ।
८६. ॐ प्राणायामाय नमः ।
८७. ॐ परंतपाय नमः ।
८८. ॐ योगिने नमः ।
८९. ॐ योगाय नमः ।
९०. ॐ महाबीजाय नमः ।

९१. ॐ महारेतसे नमः ।
९२. ॐ महाबलाय नमः ।
९३. ॐ सुवर्णरेतसे नमः ।
९४. ॐ सर्वज्ञाय नमः ।
९५. ॐ सुबीजाय नमः ।
९६. ॐ वृषवाहनाय नमः ।
९७. ॐ दशबाहवे नमः ।
९८. ॐ अनिमिषाय नमः ।
९९. ॐ नीलकण्ठाय नमः ।
**१००. ॐ उमापतये नमः ।**
१०१. ॐ विश्वरूपाय नमः ।
१०२. ॐ स्वयंश्रेष्ठाय नमः ।
१०३. ॐ बलवीराय नमः ।
१०४. ॐ बलाग्रण्ये नमः ।
१०५. ॐ गणकर्त्रे नमः ।
१०६. ॐ गणपतये नमः ।
१०७. ॐ दिग्वाससे नमः ।
१०८. ॐ काम्याय नमः ।
१०९. ॐ मन्त्रविदे नमः ।
११०. ॐ परमाय नमः ।
१११. ॐ मन्त्राय नमः ।
११२. ॐ सर्वभावकराय नमः ।
११३. ॐ हराय नमः ।
११४. ॐ कमण्डलुधराय नमः ।
११५. ॐ धन्विने नमः ।
११६. ॐ बाणहस्ताय नमः ।
११७. ॐ कपालवते नमः ।
११८. ॐ शरिणे नमः ।
११९. ॐ शतघ्निने नमः ।
१२०. ॐ खड्गिने नमः ।
१२१. ॐ पट्टिशिने नमः ।
१२२. ॐ आयुधिने नमः ।
१२३. ॐ महते नमः ।
१२४. ॐ अजाय नमः ।
१२५. ॐ मृगरूपाय नमः ।
१२६. ॐ तेजसे नमः ।
१२७. ॐ तेजस्कराय नमः ।
१२८. ॐ विधये नमः ।
१२९. ॐ उष्णीषिणे नमः ।
१३०. ॐ सुवक्त्राय नमः ।
१३१. ॐ उदग्राय नमः ।
१३२. ॐ विनताय नमः ।
१३३. ॐ दीर्घाय नमः ।
१३४. ॐ हरिकेशाय नमः ।
१३५. ॐ सुतीर्थाय नमः ।
१३६. ॐ कृष्णाय नमः ।

१३७. ॐ शृगालरूपाय नमः ।
१३८. ॐ सर्वार्थाय नमः ।
१३९. ॐ मुण्डाय नमः ।
१४०. ॐ सर्वशुभङ्कराय नमः ।
१४१. ॐ सिंहशार्दूलरूपाय नमः।
१४२. ॐ गन्धकारिणे नमः ।
१४३. ॐ कपर्दिने नमः ।
१४४. ॐ ऊर्ध्वरितसे नमः ।
१४५. ॐ ऊर्ध्वलिङ्गिने नमः ।
१४६. ॐ ऊर्ध्वशायिने नमः ।
१४७. ॐ नभसे नमः ।
१४८. ॐ तलाय नमः ।
१४९. ॐ त्रिजटिने नमः ।
१५०. ॐ चीरवाससे नमः ।
१५१. ॐ रुद्राय नमः ।
१५२. ॐ सेनायै नमः ।
१५३. ॐ पत्ये नमः ।
१५४. ॐ विभवे नमः ।
१५५. ॐ अहोरात्राय नमः ।
१५६. ॐ नक्ताय नमः ।
१५७. ॐ तिग्ममन्यवे नमः ।
१५८. ॐ सुवर्चसाय नमः ।
१५९. ॐ गजघ्ने नमः ।
१६०. ॐ दैत्यघ्ने नमः ।
१६१. ॐ कालाय नमः ।
१६२. ॐ लोकधात्रे नमः ।
१६३. ॐ गुणाकराय नमः ।
१६४. ॐ सिंहशार्दूलरूपाणा-
मार्द्रचर्माम्बरंधराय नमः ।
१६५. ॐ कालयोगिने नमः ।
१६६. ॐ महानादाय नमः ।
१६७. ॐ सर्वावासाय नमः ।
१६८. ॐ चतुष्पथाय नमः ।
१६९. ॐ निशाचराय नमः ।
१७०. ॐ प्रेतचारिणे नमः ।
१७१. ॐ सर्वदर्शिने नमः ।
१७२. ॐ महेश्वराय नमः ।
१७३. ॐ बहुने नमः ।
१७४. ॐ भूताय नमः ।
१७५. ॐ बहुधनाय नमः ।
१७६. ॐ सर्वसाराय नमः ।
१७७. ॐ अमृतेश्वराय नमः ।
१७८. ॐ नृत्यप्रियाय नमः ।
१७९. ॐ नित्यनृत्याय नमः ।
१८०. ॐ नर्तनाय नमः ।
१८१. ॐ सर्वसाधकाय नमः ।

१८२.ॐ सकार्मुकाय नमः ।
१८३.ॐ महाबाहवे नमः ।
१८४.ॐ महाघोराय नमः ।
१८५.ॐ महातपसे नमः ।
१८६.ॐ महाशराय नमः ।
१८७.ॐ महापाशाय नमः ।
१८८.ॐ नित्याय नमः ।
१८९.ॐ गिरिचराय नमः ।
१९०.ॐ अमताय नमः ।
१९१.ॐ सहस्रहस्ताय नमः ।
१९२.ॐ विजयाय नमः ।
१९३.ॐ व्यवसायाय नमः ।
१९४.ॐ अनिन्दिताय नमः ।
१९५.ॐ अमर्षणाय नमः ।
१९६.ॐ मर्षणात्मने नमः ।
१९७.ॐ यज्ञघ्ने नमः ।
१९८.ॐ कामनाशनाय नमः ।
१९९.ॐ दक्षघ्ने नमः ।
**२००. ॐ परिचारिणे नमः ।**
२०१. ॐ प्रहसाय नमः ।
२०२.ॐ मध्यमाय नमः ।
२०३.ॐ तेजसे नमः ।
२०४.ॐ अपहारिणे नमः ।
२०५.ॐ बलवते नमः ।
२०६.ॐ विदिताय नमः ।
२०७.ॐ अभ्युदिताय नमः ।
२०८.ॐ अबहवे नमः ।
२०९.ॐ गम्भीरघोषाय नमः ।
२१०.ॐ योगात्मने नमः ।
२११.ॐ यज्ञघ्ने नमः ।
२१२.ॐ कामनायै नमः ।
२१३.ॐ अशनाय नमः ।
२१४.ॐ गम्भीररोषाय नमः ।
२१५.ॐ गम्भीराय नमः ।
२१६.ॐ गम्भीरबलवाहनाय नमः।
२१७.ॐ न्यग्रोधरूपाय नमः ।
२१८.ॐ न्यग्रोधाय नमः ।
२१९.ॐ विश्वकर्मणे नमः ।
२२०.ॐ विश्वभुजे नमः ।
२२१.ॐ तीक्ष्णाय नमः ।
२२२.ॐ अपायाय नमः ।
२२३.ॐ हर्यश्वाय नमः ।
२२४.ॐ सहायाय नमः ।
२२५.ॐ कर्मणे नमः ।
२२६.ॐ कालविदे नमः ।
२२७.ॐ विष्णवे नमः ।
२२८.ॐ प्रसादिताय नमः ।

२२९. ॐ यज्ञाय नमः ।
२३०. ॐ समुद्राय नमः ।
२३१. ॐ वडवामुखाय नमः ।
२३२. ॐ हुताशनसहायाय नमः ।
२३३. ॐ प्रशान्तात्मने नमः ।
२३४. ॐ हुताशनाय नमः ।
२३५. ॐ उग्रतेजसे नमः ।
२३६. ॐ महातेजसे नमः ।
२३७. ॐ जयाय नमः ।
२३८. ॐ विजयकालविदे नमः ।
२३९. ॐ ज्योतिषामयनाय नमः ।
२४०. ॐ सिद्धये नमः ।
२४१. ॐ सन्धये नमः ।
२४२. ॐ विग्रहाय नमः ।
२४३. ॐ खड्गिने नमः ।
२४४. ॐ शङ्खिने नमः ।
२४५. ॐ जटिने नमः ।
२४६. ॐ ज्वालिने नमः ।
२४७. ॐ खचराय नमः ।
२४८. ॐ द्युचराय नमः ।
२४९. ॐ बलिने नमः ।
२५०. ॐ वैणविने नमः ।
२५१. ॐ पणविने नमः ।
२५२. ॐ कालाय नमः ।
२५३. ॐ कालकण्ठाय नमः ।
२५४. ॐ कटङ्कटाय नमः ।
२५५. ॐ नक्षत्रविग्रहाय नमः ।
२५६. ॐ भावाय नमः ।
२५७. ॐ निभावाय नमः ।
२५८. ॐ सर्वतोमुखाय नमः ।
२५९. ॐ विमोचनाय नमः ।
२६०. ॐ शरणाय नमः ।
२६१. ॐ हिरण्यकवचोद्भवाय नमः ।
२६२. ॐ मेखलायै नमः ।
२६३. ॐ कृतिरूपाय नमः ।
२६४. ॐ जलाचाराय नमः ।
२६५. ॐ स्तुताय नमः ।
२६६. ॐ वीणिने नमः ।
२६७. ॐ पणविने नमः ।
२६८. ॐ तालिने नमः ।
२६९. ॐ नालिने नमः ।
२७०. ॐ कलिकटवे नमः ।
२७१. ॐ सर्वतूर्यनिनादिने नमः ।
२७२. ॐ सर्वव्याप्यपरिग्रहाय नमः ।
२७३. ॐ व्यालरूपिणे नमः ।
२७४. ॐ बिलावासिने नमः ।

२७५. ॐ गुहावासिने नमः ।
२७६. ॐ तरङ्गविदे नमः ।
२७७. ॐ वृक्षाय नमः ।
२७८. ॐ श्रीमालकर्मणे नमः ।
२७९. ॐ सर्वबन्धविमोचनाय नमः।
२८०. ॐ बन्धनाय नमः ।
२८१. ॐ सुरेन्द्राणां युधि शत्रुविनाशाय नमः ।
२८२. ॐ सख्ये नमः ।
२८३. ॐ प्रवासाय नमः ।
२८४. ॐ दुर्वापाय नमः ।
२८५. ॐ सर्वसाधुनिषेविताय नमः।
२८६. ॐ प्रस्कन्दाय नमः ।
२८७. ॐ अविभावाय नमः ।
२८८. ॐ तुल्याय नमः ।
२८९. ॐ यज्ञविभागविदे नमः ।
२९०. ॐ सर्ववासाय नमः ।
२९१. ॐ सर्वचारिणे नमः ।
२९२. ॐ दुर्वाससे नमः ।
२९३. ॐ वासवाय नमः ।
२९४. ॐ मताय नमः ।
२९५. ॐ हैमाय नमः ।
२९६. ॐ हेमकराय नमः ।
२९७. ॐ यज्ञाय नमः ।
२९८. ॐ सर्वधारिणे नमः ।
२९९. ॐ धरोत्तमाय नमः ।
**३००. ॐ आकाशाय नमः ।**
३०१. ॐ निर्विरूपाय नमः ।
३०२. ॐ विवाससे नमः ।
३०३. ॐ उरगाय नमः ।
३०४. ॐ खगाय नमः ।
३०५. ॐ भिक्षवे नमः ।
३०६. ॐ भिक्षुरूपिणे नमः ।
३०७. ॐ रौद्ररूपाय नमः ।
३०८. ॐ सुरूपवते नमः ।
३०९. ॐ वसुरेतसे नमः ।
३१०. ॐ सुवर्चस्विने नमः ।
३११. ॐ वसुवेगाय नमः ।
३१२. ॐ महाबलाय नमः ।
३१३. ॐ मनसे नमः ।
३१४. ॐ वेगाय नमः ।
३१५. ॐ निशायै नमः ।
३१६. ॐ चाराय नमः ।
३१७. ॐ सर्वलोकशुभप्रदाय नमः।
३१८. ॐ सर्वावासिने नमः ।
३१९. ॐ त्रयीवासिने नमः ।

३२०. ॐ उपदेशकराय नमः ।
३२१. ॐ अधराय नमः ।
३२२. ॐ मुनये नमः ।
३२३. ॐ आत्मने नमः ।
३२४. ॐ मुनये नमः ।
३२५. ॐ लोकाय नमः ।
३२६. ॐ सभाग्याय नमः ।
३२७. ॐ सहस्रभुजे नमः ।
३२८. ॐ पक्षिणे नमः ।
३२९. ॐ पक्षरूपाय नमः ।
३३०. ॐ अतिदीप्ताय नमः ।
३३१. ॐ निशाकराय नमः ।
३३२. ॐ समीराय नमः ।
३३३. ॐ दमनाकाराय नमः ।
३३४. ॐ अर्थाय नमः ।
३३५. ॐ अर्थकराय नमः ।
३३६. ॐ वशाय नमः ।
३३७. ॐ वासुदेवाय नमः ।
३३८. ॐ देवाय नमः ।
३३९. ॐ वामदेवाय नमः ।
३४०. ॐ वामनाय नमः ।
३४१. ॐ सिद्धयोगापहारिणे नमः।
३४२. ॐ सिद्धाय नमः ।
३४३. ॐ सर्वार्थसाधकाय नमः ।
३४४. ॐ अक्षुण्णाय नमः ।
३४५. ॐ क्षुण्णरूपाय नमः ।
३४६. ॐ वृषणाय नमः ।
३४७. ॐ मृदवे नमः ।
३४८. ॐ अव्ययाय नमः ।
३४९. ॐ महासेनाय नमः ।
३५०. ॐ विशाखाय नमः ।
३५१. ॐ षष्टिभागाय नमः ।
३५२. ॐ गवांपत्ये नमः ।
३५३. ॐ चक्रहस्ताय नमः ।
३५४. ॐ विष्टम्भिने नमः ।
३५५. ॐ मूलस्तंभनाय नमः ।
३५६. ॐ ऋतवे नमः ।
३५७. ॐ ऋतुकराय नमः ।
३५८. ॐ तालाय नमः ।
३५९. ॐ मधवे नमः ।
३६०. ॐ मधुकराय नमः ।
३६१. ॐ वराय नमः ।
३६२. ॐ वानस्पत्याय नमः ।
३६३. ॐ वाजसनाय नमः ।
३६४. ॐ नित्याय नमः ।
३६५. ॐ आश्रमपूजिताय नमः ।
३६६. ॐ ब्रह्मचारिणे नमः ।

३६७. ॐ लोकचारिणे नमः ।
३६८. ॐ सर्वचारिणे नमः ।
३६९. ॐ सुचारविदे नमः ।
३७०. ॐ ईशानाय नमः ।
३७१. ॐ ईश्वराय नमः ।
३७२. ॐ कालाय नमः ।
३७३. ॐ निशाचारिणे नमः ।
३७४. ॐ अनेकदृशे नमः ।
३७५. ॐ निमित्तस्थाय नमः ।
३७६. ॐ निमित्ताय नमः ।
३७७. ॐ नन्दये नमः ।
३७८. ॐ नन्दिकराय नमः ।
३७९. ॐ हराय नमः ।
३८०. ॐ नन्दिने नमः ।
३८१. ॐ ईश्वराय नमः ।
३८२. ॐ सुनन्दिने नमः ।
३८३. ॐ नन्दनाय नमः ।
३८४. ॐ विषमर्दनाय नमः ।
३८५. ॐ भगहारिणे नमः ।
३८६. ॐ नियन्त्रे नमः ।
३८७. ॐ कालाय नमः ।
३८८. ॐ लोकपितामहाय नमः ।
३८९. ॐ चतुर्मुखाय नमः ।
३९०. ॐ महालिङ्गाय नमः ।
३९१. ॐ चारुलिङ्गाय नमः ।
३९२. ॐ लिङ्गाध्यक्षाय नमः ।
३९३. ॐ सुराध्यक्षाय नमः ।
३९४. ॐ कालाध्यक्षाय नमः ।
३९५. ॐ युगावहाय नमः ।
३९६. ॐ बीजाध्यक्षाय नमः ।
३९७. ॐ बीजकर्त्रे नमः ।
३९८. ॐ अध्यात्मने नमः ।
३९९. ॐ अनुगताय नमः ।
**४००. ॐ बलाय नमः ।**
४०१. ॐ इतिहासाय नमः ।
४०२. ॐ कल्पाय नमः ।
४०३. ॐ दमनाय नमः ।
४०४. ॐ जगदीश्वराय नमः ।
४०५. ॐ दम्भाय नमः ।
४०६. ॐ दम्भकराय नमः ।
४०७. ॐ दात्रे नमः ।
४०८. ॐ वंशाय नमः ।
४०९. ॐ वंशकराय नमः ।
४१०. ॐ कलये नमः ।
४११. ॐ लोककर्त्रे नमः ।
४१२. ॐ पशुपतये नमः ।
४१३. ॐ महाकर्त्रे नमः ।
४१४. ॐ अधोक्षजाय नमः ।

४१५. ॐ अक्षराय नमः ।
४१६. ॐ परमाय नमः ।
४१७. ॐ ब्रह्मणे नमः ।
४१८. ॐ बलवते नमः ।
४१९. ॐ शुक्राय नमः ।
४२०. ॐ नित्याय नमः ।
४२१. ॐ अनीशाय नमः ।
४२२. ॐ शुद्धात्मने नमः ।
४२३. ॐ शुद्धाय नमः ।
४२४. ॐ मानाय नमः ।
४२५. ॐ गतये नमः ।
४२६. ॐ हविषे नमः ।
४२७. ॐ प्रासादाय नमः ।
४२८. ॐ बलाय नमः ।
४२९. ॐ दर्पाय नमः ।
४३०. ॐ दर्पणाय नमः ।
४३१. ॐ हव्याय नमः ।
४३२. ॐ इन्द्रजिते नमः ।
४३३. ॐ वेदकाराय नमः ।
४३४. ॐ सूत्रकाराय नमः ।
४३५. ॐ विदुषे नमः ।
४३६. ॐ परमर्दनाय नमः ।
४३७. ॐ महामेघनिवासिने नमः ।
४३८. ॐ महाघोराय नमः ।
४३९. ॐ वशिने नमः ।
४४०. ॐ कराय नमः ।
४४१. ॐ अग्निज्वालाय नमः ।
४४२. ॐ महाज्वालाय नमः ।
४४३. ॐ परिधूम्रावृताय नमः ।
४४४. ॐ रवये नमः ।
४४५. ॐ धिषणाय नमः ।
४४६. ॐ शङ्कराय नमः ।
४४७. ॐ अनित्याय नमः ।
४४८. ॐ वर्चस्विने नमः ।
४४९. ॐ धूम्रलोचनाय नमः ।
४५०. ॐ नीलाय नमः ।
४५१. ॐ अङ्गलुप्ताय नमः ।
४५२. ॐ शोभनाय नमः ।
४५३. ॐ नरविग्रहाय नमः ।
४५४. ॐ स्वस्ति नमः ।
४५५. ॐ स्वस्तिस्वभावाय नमः ।
४५६. ॐ भोगिने नमः ।
४५७. ॐ भोगकराय नमः ।
४५८. ॐ लघवे नमः ।
४५९. ॐ उत्सङ्गाय नमः ।
४६०. ॐ महाङ्गाय नमः ।
४६१. ॐ महाभर्गाय नमः ।
४६२. ॐ प्रतापवते नमः ।

४६३. ॐ कृष्णवर्णाय नमः ।
४६४. ॐ सुवर्णाय नमः ।
४६५. ॐ इन्द्रियाय नमः ।
४६६. ॐ सर्ववर्णिकाय नमः ।
४६७. ॐ महापादाय नमः ।
४६८. ॐ महाहस्ताय नमः ।
४६९. ॐ महाकायाय नमः ।
४७०. ॐ महायशसे नमः ।
४७१. ॐ महामूर्ध्ने नमः ।
४७२. ॐ महामात्राय नमः ।
४७३. ॐ महामित्राय नमः ।
४७४. ॐ नगालयाय नमः ।
४७५. ॐ महास्कन्धाय नमः ।
४७६. ॐ महाकर्णाय नमः ।
४७७. ॐ महोष्ठाय नमः ।
४७८. ॐ महाहनवे नमः ।
४७९. ॐ महानासाय नमः ।
४८०. ॐ महाकण्ठाय नमः ।
४८१. ॐ महाग्रीवाय नमः ।
४८२. ॐ श्मशानवते नमः ।
४८३. ॐ महाबलाय नमः ।
४८४. ॐ महातेजसे नमः ।
४८५. ॐ अन्तर्नमः ।
४८६. ॐ आत्मने नमः ।
४८७. ॐ मृगालयाय नमः ।
४८८. ॐ लम्बितोष्ठाय नमः ।
४८९. ॐ निष्ठाय नमः ।
४९०. ॐ महामायाय नमः ।
४९१. ॐ पयोनिधये नमः ।
४९२. ॐ महादन्ताय नमः ।
४९३. ॐ महादंष्ट्राय नमः ।
४९४. ॐ महाजिह्वाय नमः ।
४९५. ॐ महामुखाय नमः ।
४९६. ॐ महानखाय नमः ।
४९७. ॐ महारोम्णे नमः ।
४९८. ॐ महाकेशाय नमः ।
४९९. ॐ महाजटाय नमः ।
**५००. ॐ असपत्नाय नमः ।**
५०१. ॐ प्रसादाय नमः ।
५०२. ॐ प्रत्ययाय नमः ।
५०३. ॐ गीतसाधकाय नमः ।
५०४. ॐ प्रस्वेदनाय नमः ।
५०५. ॐ अस्वहेनाय नमः ।
५०६. ॐ आदिकाय नमः ।
५०७. ॐ महामुनये नमः ।
५०८. ॐ वृषकाय नमः ।
५०९. ॐ वृषकेतवे नमः ।
५१०. ॐ अनलाय नमः ।

५११. ॐ वायुवाहनाय नमः ।
५१२. ॐ मण्डलिने नमः ।
५१३. ॐ मेरुवासाय नमः ।
५१४. ॐ देववाहनाय नमः ।
५१५. ॐ अथर्वशीर्षाय नमः ।
५१६. ॐ सामास्याय नमः ।
५१७. ॐ ऋक्सहस्रोर्जितेक्षणाय नमः।
५१८. ॐ यजुः पादभुजाय नमः।
५१९. ॐ गुह्याय नमः ।
५२०. ॐ प्रकाशौजसे नमः ।
५२१. ॐ अमोघार्थप्रसादाय नमः।
५२२. ॐ अन्तर्भाव्याय नमः ।
५२३. ॐ सुदर्शनाय नमः ।
५२४. ॐ उपहाराय नमः ।
५२५. ॐ प्रियाय नमः ।
५२६. ॐ सर्वाय नमः ।
५२७. ॐ कनकाय नमः ।
५२८. ॐ काञ्चनस्थिताय नमः ।
५२९. ॐ नाभये नमः ।
५३०. ॐ नन्दिकराय नमः ।
५३१. ॐ हर्म्याय नमः ।
५३२. ॐ पुष्कराय नमः ।
५३३. ॐ स्थपतये नमः ।
५३४. ॐ स्थिताय नमः ।
५३५. ॐ सर्वशास्त्राय नमः ।
५३६. ॐ धनाय नमः ।
५३७. ॐ आद्याय नमः ।
५३८. ॐ यज्ञाय नमः ।
५३९. ॐ यज्वने नमः ।
५४०. ॐ समाहिताय नमः ।
५४१. ॐ नगाय नमः ।
५४२. ॐ नीलाय नमः ।
५४३. ॐ कवये नमः ।
५४४. ॐ कालाय नमः ।
५४५. ॐ मकराय नमः ।
५४६. ॐ कालपूजिताय नमः ।
५४७. ॐ सगणाय नमः ।
५४८. ॐ गणकाराय नमः ।
५४९. ॐ भूतभावनसारथये नमः।
५५०. ॐ भस्मशायिने नमः ।
५५१. ॐ भस्मगोप्त्रे नमः ।
५५२. ॐ भस्मभूततनवे नमः ।
५५३. ॐ गणाय नमः ।
५५४. ॐ आगमाय नमः ।
५५५. ॐ विलोपाय नमः ।
५५६. ॐ महात्मने नमः ।
५५७. ॐ सर्वपूजिताय नमः ।

५५८. ॐ शुक्लाय नमः ।
५५९. ॐ स्त्रीरूपसम्पन्नाय नमः।
५६०. ॐ शुचये नमः ।
५६१. ॐ भूतनिषेविताय नमः ।
५६२. ॐ आश्रमस्थाय नमः ।
५६३. ॐ कपोतस्थाय नमः ।
५६४. ॐ विश्वकर्मणे नमः ।
५६५. ॐ पत्ये नमः ।
५६६. ॐ विराजे नमः ।
५६७. ॐ विशालशाखाय नमः ।
५६८. ॐ ताम्रोष्ठाय नमः ।
५६९. ॐ अम्बुजालाय नमः ।
५७०. ॐ सुनिश्चिताय नमः ।
५७१. ॐ कपिलाय नमः ।
५७२. ॐ कलशाय नमः ।
५७३. ॐ स्थूलाय नमः ।
५७४. ॐ आयुधाय नमः ।
५७५. ॐ रोमशाय नमः ।
५७६. ॐ गन्धर्वाय नमः ।
५७७. ॐ अदितये नमः ।
५७८. ॐ तार्क्ष्याय नमः ।
५७९. ॐ अविज्ञेयाय नमः ।
५८०. ॐ सुशारदाय नमः ।
५८१. ॐ परश्वधायुधाय नमः ।
५८२. ॐ देवाय नमः ।
५८३. ॐ अर्थकारिणे नमः ।
५८४. ॐ सुबान्धवाय नमः ।
५८५. ॐ तुम्बवीणाय नमः ।
५८६. ॐ महाकोपाय नमः ।
५८७. ॐ ऊर्ध्वरेतसे नमः ।
५८८. ॐ जलेशयाय नमः ।
५८९. ॐ उग्राय नमः ।
५९०. ॐ वंशकराय नमः ।
५९१. ॐ वंशाय नमः ।
५९२. ॐ वंशवादिने नमः ।
५९३. ॐ अनिन्दिताय नमः ।
५९४. ॐ सर्वाङ्गरूपिणे नमः ।
५९५. ॐ मायाविने नमः ।
५९६. ॐ सुहृदाय नमः ।
५९७. ॐ अनिलाय नमः ।
५९८. ॐ बलाय नमः ।
५९९. ॐ बन्धनाय नमः ।
**६००. ॐ बन्धकर्त्रे नमः ।**
६०१. ॐ सुबन्धनविमोचनाय नमः।
६०२. ॐ राक्षसघ्नाय नमः ।
६०३. ॐ कामारये नमः ।

६०४. ॐ महादंष्ट्राय नमः ।
६०५. ॐ महायुधाय नमः ।
६०६. ॐ लम्बिताय नमः ।
६०७. ॐ लम्बितोष्ठाय नमः ।
६०८. ॐ लम्बहस्ताय नमः ।
६०९. ॐ वरप्रदाय नमः ।
६१०. ॐ बाहवे नमः ।
६११. ॐ अनिन्दिताय नमः ।
६१२. ॐ सर्वाय नमः ।
६१३. ॐ शङ्कराय नमः ।
६१४. ॐ अकोपनाय नमः ।
६१५. ॐ अमरेशाय नमः ।
६१६. ॐ महाघोराय नमः ।
६१७. ॐ विश्वदेवाय नमः ।
६१८. ॐ सुरारिघ्ने नमः ।
६१९. ॐ अहिर्बुध्न्याय नमः ।
६२०. ॐ निर्ऋतये नमः ।
६२१. ॐ चेकितानाय नमः ।
६२२. ॐ हलिने नमः ।
६२३. ॐ अजैकपदे नमः ।
६२४. ॐ कापालिने नमः ।
६२५. ॐ शम् नमः ।
६२६. ॐ कुमाराय नमः ।
६२७. ॐ महागिरये नमः ।
६२८. ॐ धन्वन्तरये नमः ।
६२९. ॐ धूमकेतवे नमः ।
६३०. ॐ सूर्याय नमः ।
६३१. ॐ वैश्रवणाय नमः ।
६३२. ॐ धात्रे नमः ।
६३३. ॐ विष्णवे नमः ।
६३४. ॐ शक्राय नमः ।
६३५. ॐ मित्राय नमः ।
६३६. ॐ त्वष्ट्रे नमः ।
६३७. ॐ धराय नमः ।
६३८. ॐ ध्रुवाय नमः ।
६३९. ॐ प्रभासाय नमः ।
६४०. ॐ पर्वताय नमः ।
६४१. ॐ वायवे नमः ।
६४२. ॐ अर्यम्णे नमः ।
६४३. ॐ सवित्रे नमः ।
६४४. ॐ रवये नमः ।
६४५. ॐ धृतये नमः ।
६४६. ॐ विधात्रे नमः ।
६४७. ॐ मान्धात्रे नमः ।
६४८. ॐ भूतभावनाय नमः ।
६४९. ॐ नीराय नमः ।
६५०. ॐ तीर्थाय नमः ।
६५१. ॐ भीमाय नमः ।

६५२. ॐ सर्वकर्मणे नमः ।
६५३. ॐ गुणोद्वहाय नमः ।
६५४. ॐ पद्मगर्भाय नमः ।
६५५. ॐ महागर्भाय नमः ।
६५६. ॐ चन्द्रवक्त्राय नमः ।
६५७. ॐ नभाय नमः ।
६५८. ॐ अनघाय नमः ।
६५९. ॐ बलवते नमः ।
६६०. ॐ उपशान्ताय नमः ।
६६१. ॐ पुराणाय नमः ।
६६२. ॐ पुण्यकृते नमः ।
६६३. ॐ तमसे नमः ।
६६४. ॐ क्रूरकर्त्रे नमः ।
६६५. ॐ क्रूरवासिने नमः ।
६६६. ॐ तनवे नमः ।
६६७. ॐ आत्मने नमः ।
६६८. ॐ महौषधाय नमः ।
६६९. ॐ सर्वाशयाय नमः ।
६७०. ॐ सर्वचारिणे नमः ।
६७१. ॐ प्राणेशाय नमः ।
६७२. ॐ प्राणिनां पत्ये नमः ।
६७३. ॐ देवदेवाय नमः ।
६७४. ॐ सुखोत्सिक्ताय नमः ।
६७५. ॐ सते नमः ।
६७६. ॐ असते नमः ।
६७७. ॐ सर्वरत्नविदे नमः ।
६७८. ॐ कैलासस्थाय नमः ।
६७९. ॐ गुहावासिने नमः ।
६८०. ॐ हिमवते नमः ।
६८१. ॐ गिरिसंश्रयाय नमः ।
६८२. ॐ कुलहारिणे नमः ।
६८३. ॐ कुलाकर्त्रे नमः ।
६८४. ॐ बहुवित्ताय नमः ।
६८५. ॐ बहुप्रजाय नमः ।
६८६. ॐ प्राणेशाय नमः ।
६८७. ॐ बन्धक्यै नमः ।
६८८. ॐ वृक्षाय नमः ।
६८९. ॐ नकुलाय नमः ।
६९०. ॐ अद्रिकाय नमः ।
६९१. ॐ ह्रस्वग्रीवाय नमः ।
६९२. ॐ महाजानवे नमः ।
६९३. ॐ अलोलाय नमः ।
६९४. ॐ महौषधये नमः ।
६९५. ॐ सिद्धान्तकारिणे नमः ।
६९६. ॐ सिद्धार्थाय नमः ।
६९७. ॐ छन्दसे नमः ।
६९८. ॐ व्याकरणोद्भवाय नमः ।

६९९. ॐ सिंहनादाय नमः ।

**७००. ॐ सिंहदंष्ट्राय नमः ।**

७०१. ॐ सिंहास्याय नमः ।

७०२. ॐ सिंहवाहनाय नमः ।

७०३. ॐ प्रभावात्मने नमः ।

७०४. ॐ जगत्कालाय नमः ।

७०५. ॐ कालाय नमः ।

७०६. ॐ कम्पिने नमः ।

७०७. ॐ तरवे नमः ।

७०८. ॐ तनवे नमः ।

७०९. ॐ सारङ्गाय नमः ।

७१०. ॐ भूतचक्राङ्काय नमः ।

७११. ॐ केतुमालिने नमः ।

७१२. ॐ सुवेधकाय नमः ।

७१३. ॐ भूतालयाय नमः ।

७१४. ॐ भूपतये नमः ।

७१५. ॐ अहोरात्राय नमः ।

७१६. ॐ अमलाय नमः ।

७१७. ॐ मलाय नमः ।

७१८. ॐ वसुभृते नमः ।

७१९. ॐ सर्वभूतात्मने नमः ।

७२०. ॐ निश्चलाय नमः ।

७२१. ॐ सुविदवे नमः ।

७२२. ॐ बुधाय नमः ।

७२३. ॐ सर्वभूतानामसुहृते नमः ।

७२४. ॐ निश्चलाय नमः ।

७२५. ॐ चलविदे नमः ।

७२६. ॐ बुधाय नमः ।

७२७. ॐ अमोघाय नमः ।

७२८. ॐ संयमाय नमः ।

७२९. ॐ हृष्टाय नमः ।

७३०. ॐ भोजनाय नमः ।

७३१. ॐ प्राणधारणाय नमः ।

७३२. ॐ धृतिमते नमः ।

७३३. ॐ मतिमते नमः ।

७३४. ॐ त्र्यक्षाय नमः ।

७३५. ॐ सुकृताय नमः ।

७३६. ॐ युधांपत्ये नमः ।

७३७. ॐ गोपालाय नमः ।

७३८. ॐ गोपतये नमः ।

७३९. ॐ ग्रामाय नमः ।

७४०. ॐ गोचर्मवसनाय नमः ।

७४१. ॐ हराय नमः ।

७४२. ॐ हिरण्यबाहवे नमः ।

७४३. ॐ गुहावासाय नमः ।

७४४. ॐ प्रवेशनाय नमः ।

७४५. ॐ महामनसे नमः ।
७४६. ॐ महाकामाय नमः ।
७४७. ॐ चित्तकामाय नमः ।
७४८. ॐ जितेन्द्रियाय नमः ।
७४९. ॐ गान्धाराय नमः ।
७५०. ॐ सुरापाय नमः ।
७५१. ॐ तापकर्मरताय नमः ।
७५२. ॐ हिताय नमः ।
७५३. ॐ महाभूताय नमः ।
७५४. ॐ भूतवृताय नमः ।
७५५. ॐ अप्सरसे नमः ।
७५६. ॐ गणसेविताय नमः ।
७५७. ॐ महाकेतवे नमः ।
७५८. ॐ धराधात्रे नमः ।
७५९. ॐ नैकतानरताय नमः ।
७६०. ॐ स्वराय नमः ।
७६१. ॐ अवेदनीयाय नमः ।
७६२. ॐ आवेद्याय नमः ।
७६३. ॐ सर्वगाय नमः ।
७६४. ॐ सुखावहाय नमः ।
७६५. ॐ तारणाय नमः ।
७६६. ॐ चरणाय नमः ।
७६७. ॐ धात्रे नमः ।
७६८. ॐ परिधायै नमः ।
७६९. ॐ परिपूजिताय नमः ।
७७०. ॐ संयोगिने नमः ।
७७१. ॐ वर्धनाय नमः ।
७७२. ॐ वृद्धाय नमः ।
७७३. ॐ गणिकाय नमः ।
७७४. ॐ गणाधिपाय नमः ।
७७५. ॐ नित्याय नमः ।
७७६. ॐ धात्रे नमः ।
७७७. ॐ सहायाय नमः ।
७७८. ॐ देवासुरपतये नमः ।
७७९. ॐ पत्ये नमः ।
७८०. ॐ युक्ताय नमः ।
७८१. ॐ युक्तबाहवे नमः ।
७८२. ॐ सुदेवाय नमः ।
७८३. ॐ सुपर्वणाय नमः ।
७८४. ॐ आषाढाय नमः ।
७८५. ॐ सुषाढाय नमः ।
७८६. ॐ स्कन्धदाय नमः ।
७८७. ॐ हरिताय नमः ।
७८८. ॐ हराय नमः ।
७८९. ॐ वपुषे नमः ।
७९०. ॐ आवर्तमानाय नमः ।
७९१. ॐ अन्याय नमः ।

७९२. ॐ वपुः श्रेष्ठाय नमः ।
७९३. ॐ महावपुषे नमः ।
७९४. ॐ शिरसे नमः ।
७९५. ॐ विमर्शनाय नमः ।
७९६. ॐ सर्वलक्ष्यलक्षणभूषिताय नमः।
७९७. ॐ अक्षयाय नमः ।
७९८. ॐ रथगीताय नमः ।
७९९. ॐ सर्वभोगिने नमः ।
**८००. ॐ महाबलाय नमः ।**
८०१. ॐ साम्नायाय नमः ।
८०२. ॐ महाम्नायाय नमः ।
८०३. ॐ तीर्थदेवाय नमः ।
८०४. ॐ महायशसे नमः ।
८०५. ॐ निर्जीवाय नमः ।
८०६. ॐ जीवनाय नमः ।
८०७. ॐ मन्त्राय नमः ।
८०८. ॐ सुभगाय नमः ।
८०९. ॐ बहुकर्कशाय नमः ।
८१०. ॐ रत्नभूताय नमः ।
८११. ॐ रत्नाङ्गाय नमः ।
८१२. ॐ महार्णवनिपातविदे नमः।
८१३. ॐ मूलाय नमः ।
८१४. ॐ विशालाय नमः ।
८१५. ॐ अमृताय नमः ।
८१६. ॐ व्यक्ताव्यक्ताय नमः ।
८१७. ॐ तपोनिधये नमः ।
८१८. ॐ आरोहणाय नमः ।
८१९. ॐ अधिरोहाय नमः ।
८२०. ॐ शीलधारिणे नमः ।
८२१. ॐ महातपसे नमः ।
८२२. ॐ महाकण्ठाय नमः ।
८२३. ॐ महायोगिने नमः ।
८२४. ॐ युगाय नमः ।
८२५. ॐ युगकराय नमः ।
८२६. ॐ हरये नमः ।
८२७. ॐ युगरूपाय नमः ।
८२८. ॐ महारूपाय नमः ।
८२९. ॐ वहनाय नमः ।
८३०. ॐ गहनाय नमः ।
८३१. ॐ नगाय नमः ।
८३२. ॐ न्यायाय नमः ।
८३३. ॐ निर्वापणाय नमः ।
८३४. ॐ अपादाय नमः ।
८३५. ॐ पण्डिताय नमः ।
८३६. ॐ अचलोपमाय नमः ।

८३७. ॐ बहुमालाय नमः ।

८३८. ॐ महामालाय नमः ।

८३९. ॐ शिपिविष्टाय नमः ।

८४०. ॐ सुलोचनाय नमः ।

८४१. ॐ विस्ताराय नमः ।

८४२. ॐ लवणाय नमः ।

८४३. ॐ कूपाय नमः ।

८४४. ॐ कुसुमाङ्गाय नमः ।

८४५. ॐ फलोदयाय नमः ।

८४६. ॐ ऋषभाय नमः ।

८४७. ॐ वृषभाय नमः ।

८४८. ॐ भङ्गाय नमः ।

८४९. ॐ मणिबिम्बजटाधराय नमः ।

८५०. ॐ इन्दवे नमः ।

८५१. ॐ विसर्गाय नमः ।

८५२. ॐ सुमुखाय नमः ।

८५३. ॐ शूराय नमः ।

८५४. ॐ सर्वायुधाय नमः ।

८५५. ॐ सहाय नमः ।

८५६. ॐ निवेदनाय नमः ।

८५७. ॐ सुधाजाताय नमः ।

८५८. ॐ स्वर्गद्वाराय नमः ।

८५९. ॐ महाधनुषे नमः ।

८६०. ॐ गिरावासाय नमः ।

८६१. ॐ विसर्गाय नमः ।

८६२. ॐ सर्वलक्षणलक्षविदे नमः।

८६३. ॐ गन्धमालिने नमः ।

८६४. ॐ भगवते नमः ।

८६५. ॐ अनन्ताय नमः ।

८६६. ॐ सर्वलक्षणाय नमः ।

८६७. ॐ सन्तानाय नमः ।

८६८. ॐ बहुलाय नमः ।

८६९. ॐ बाहवे नमः ।

८७०. ॐ सकलाय नमः ।

८७१. ॐ सर्वपावनाय नमः ।

८७२. ॐ करस्थालिने नमः ।

८७३. ॐ कपालिने नमः ।

८७४. ॐ ऊर्ध्वसंहननाय नमः ।

८७५. ॐ यूने नमः ।

८७६. ॐ यन्त्रतन्त्रसुविख्याताय नमः।

८७७. ॐ लोकाय नमः ।

८७८. ॐ सर्वाश्रयाय नमः ।

८७९. ॐ मृदवे नमः ।

८८०. ॐ मुण्डाय नमः ।

८८१. ॐ विरूपाय नमः ।
८८२. ॐ विकृताय नमः ।
८८३. ॐ दण्डिने नमः ।
८८४. ॐ कुण्डिने नमः ।
८८५. ॐ विकुर्वणाय नमः ।
८८६. ॐ वार्यक्षाय नमः ।
८८७. ॐ ककुभाय नमः ।
८८८. ॐ वज्रिणे नमः ।
८८९. ॐ दीप्ततेजसे नमः ।
८९०. ॐ सहस्रपदे नमः ।
८९१. ॐ सहस्रमूर्ध्ने नमः ।
८९२. ॐ देवेन्द्राय नमः ।
८९३. ॐ सर्वदेवमयाय नमः ।
८९४. ॐ गुरवे नमः ।
८९५. ॐ सहस्रबाहवे नमः ।
८९६. ॐ सर्वाङ्गाय नमः ।
८९७. ॐ शरण्याय नमः ।
८९८. ॐ सर्वलोककृते नमः ।
८९९. ॐ पवित्राय नमः ।
**९००. ॐ त्रिमधवे नमः ।**
९०१. ॐ मन्त्राय नमः ।
९०२. ॐ कनिष्ठाय नमः ।
९०३. ॐ कृष्णपिङ्गलाय नमः ।
९०४. ॐ ब्रह्मदण्डविनिर्मात्रे नमः ।
९०५. ॐ शतघ्नाय नमः ।
९०६. ॐ शतपाशधृषे नमः ।
९०७. ॐ कलायै नमः ।
९०८. ॐ काष्ठायै नमः ।
९०९. ॐ लवाय नमः ।
९१०. ॐ मात्रायै नमः ।
९११. ॐ मुहूर्ताय नमः ।
९१२. ॐ अह्ने नमः ।
९१३. ॐ क्षपायै नमः ।
९१४. ॐ क्षणाय नमः ।
९१५. ॐ विश्वक्षेत्रप्रदाय नमः ।
९१६. ॐ बीजाय नमः ।
९१७. ॐ लिङ्गाय नमः ।
९१८. ॐ आद्याय नमः ।
९१९. ॐ निर्मुखाय नमः ।
९२०. ॐ सदसते नमः ।
९२१. ॐ व्यक्ताय नमः ।
९२२. ॐ अव्यक्ताय नमः ।
९२३. ॐ पित्रे नमः ।
९२४. ॐ मात्रे नमः ।
९२५. ॐ पितामहाय नमः ।
९२६. ॐ स्वर्गद्वाराय नमः ।

९२७. ॐ मोक्षद्वाराय नमः ।
९२८. ॐ प्रजाद्वाराय नमः ।
९२९. ॐ त्रिविष्टपाय नमः ।
९३०. ॐ निर्वाणाय नमः ।
९३१. ॐ हृदयाय नमः ।
९३२. ॐ ब्रह्मलोकाय नमः ।
९३३. ॐ परागतये नमः ।
९३४. ॐ देवासुरविनिर्मात्रे नमः ।
९३५. ॐ देवासुरपरायणाय नमः ।
९३६. ॐ देवासुरगुरवे नमः ।
९३७. ॐ देवाय नमः ।
९३८. ॐ देवासुरनमस्कृताय नमः ।
९३९. ॐ देवासुरमहामात्राय नमः ।
९४०. ॐ देवासुरगणाश्रयाय नमः ।
९४१. ॐ देवासुरगणाध्यक्षाय नमः ।
९४२. ॐ देवासुरगणाग्रण्ये नमः ।
९४३. ॐ देवाधिदेवाय नमः ।
९४४. ॐ देवर्षये नमः ।
९४५. ॐ देवासुरवरप्रदाय नमः ।
९४६. ॐ देवासुरेश्वराय नमः ।
९४७. ॐ विष्णवे नमः ।
९४८. ॐ देवासुरमहेश्वराय नमः ।
९४९. ॐ सर्वदेवमयाय नमः ।
९५०. ॐ अचिन्त्याय नमः ।
९५१. ॐ देवतात्मने नमः ।
९५२. ॐ स्वयं भवाय नमः ।
९५३. ॐ उद्गताय नमः ।
९५४. ॐ त्रिक्रमाय नमः ।
९५५. ॐ वैद्याय नमः ।
९५६. ॐ वरदाय नमः ।
९५७. ॐ अवरजाय नमः ।
९५८. ॐ अम्बराय नमः ।
९५९. ॐ इज्याय नमः ।
९६०. ॐ हस्तिने नमः ।
९६१. ॐ व्याघ्राय नमः ।
९६२. ॐ देवसिंहाय नमः ।
९६३. ॐ महर्षभाय नमः ।
९६४. ॐ विबुधाग्राय नमः ।
९६५. ॐ सुराय नमः ।
९६६. ॐ श्रेष्ठाय नमः ।
९६७. ॐ स्वर्गदेवाय नमः ।
९६८. ॐ उत्तमाय नमः ।
९६९. ॐ संयुक्ताय नमः ।
९७०. ॐ शोभनाय नमः ।
९७१. ॐ वक्त्रे नमः ।

९७२. ॐ आशानां प्रभवाय नमः।
९७३. ॐ अव्ययाय नमः ।
९७४. ॐ गुरवे नमः ।
९७५. ॐ कान्ताय नमः ।
९७६. ॐ निजाय नमः ।
९७७. ॐ सर्गाय नमः ।
९७८. ॐ पवित्राय नमः ।
९७९. ॐ सर्ववाहनाय नमः ।
९८०. ॐ शृङ्गिणे नमः ।
९८१. ॐ शृङ्गप्रियाय नमः ।
९८२. ॐ बभ्रवे नमः ।
९८३. ॐ राजराजाय नमः ।
९८४. ॐ निरामयाय नमः ।
९८५. ॐ अभिरामाय नमः ।
९८६. ॐ सुशरणाय नमः ।
९८७. ॐ निरामाय नमः ।
९८८. ॐ सर्वसाधनाय नमः ।
९८९. ॐ ललाटाक्षाय नमः ।
९९०. ॐ विश्वदेहाय नमः ।
९९१. ॐ हरिणाय नमः ।
९९२. ॐ ब्रह्मवर्चसाय नमः ।
९९३. ॐ स्थावराणां पत्ये नमः ।
९९४. ॐ नियतेन्द्रियवर्तनाय नमः।
९९५. ॐ सिद्धार्थाय नमः ।
९९६. ॐ सर्वभूतार्थाय नमः ।
९९७. ॐ अचिन्त्याय नमः ।
९९८. ॐ सत्याय नमः ।
९९९. ॐ शुचिव्रताय नमः ।
**१०००. ॐ व्रताधिपाय नमः ।**
१००१. ॐ परस्मै नमः ।
१००२. ॐ ब्रह्मणे नमः ।
१००३. ॐ मुक्तानां परमायै गतये नमः।
१००४. ॐ विमुक्ताय नमः ।
१००५. ॐ मुक्तकेशाय नमः ।
१००६. ॐ श्रीमते नमः ।
१००७. ॐ श्रीवर्धनाय नमः ।
१००८. ॐ जगते नमः ।

ॐ

*लिङ्गपुराणान्तर्गतं (अध्याय : ९८)*

# श्रीशिवसहस्रनामस्तोत्रम्

## श्री विष्णुरुवाच

भवः शिवो हरो रुद्रः पुरुषः पद्मलोचनः ।

अर्थितव्यः सदाचारः सर्वशम्भुर्महेश्वरः ॥ १ ॥

ईश्वरः स्थाणुरीशानः सहस्राक्षः सहस्रपात् ।

वरीयान् वरदो वन्द्यः शङ्करः परमेश्वरः ॥ २ ॥

गङ्गाधरः शूलधरः परार्थैकप्रयोजनः ।

सर्वज्ञः सर्वदेवादिगिरिधन्वा जटाधरः ॥ ३ ॥

चन्द्रापीडश्चन्द्रमौलिर्विद्वान् विश्वामरेश्वरः ।

वेदान्तसारसन्दोहः कपाली नीललोहितः ॥ ४ ॥

ध्यानाधारोऽपरिच्छेद्यो गौरीभर्ता गणेश्वरः ।

अष्टमूर्तिर्विश्वमूर्तिस्त्रिवर्गः स्वर्गसाधनः ॥ ५ ॥

ज्ञानगम्यो दृढप्रज्ञो देवदेवस्त्रिलोचनः ।

वामदेवो महादेवः पाण्डुः परिदृढोऽदृढः ॥ ६ ॥

विश्वरूपो विरूपाक्षो वागीशः शुचिरन्तरः ।

सर्वप्रणयसंवादी वृषाङ्को वृषवाहनः ॥ ७ ॥

ईशः पिनाकी खट्वाङ्गी चित्रवेशश्चिरन्तनः ।

तमोहरो महायोगी गोप्ता ब्रह्माङ्गहृज्जटी ॥ ८ ॥

कालकालः कृत्तिवासाः सुभगः प्रणवात्मकः ।

उन्मत्तवेषश्चक्षुष्यो दुर्वासाः स्मरशासनः ॥ ९ ॥

दृढायुधः स्कन्दगुरुः परमेष्ठी परायणः ।

अनादि-मध्य-निधनो गिरिशो गिरिबान्धवः ॥ १० ॥

कुबेरबन्धुः श्रीकण्ठो लोकवर्णोत्तमोत्तमः ।

सामान्यदेवः कोदण्डी नीलकण्ठः परश्वधी ॥ ११ ॥

विशालाक्षो मृगव्याधः सुरेशः सूर्यतापनः ।

धर्मकर्माक्षमः क्षेत्रं भगवान् भगनेत्रभित् ॥ १२ ॥

उग्रः पशुपतिस्तार्क्ष्यप्रियभक्तः प्रियंवदः ।

दान्तो दयाकरो दक्षः कपर्दी कामशासनः ॥ १३ ॥

श्मशाननिलयः सूक्ष्मः श्मशानस्थो महेश्वरः ।
लोककर्ता भूतपतिर्महाकर्ता महौषधी ॥ १४ ॥

उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः ।
नीतिः सुनीतिः शुद्धात्मा सोमः सोमरतः सुखी ॥ १५ ॥

सोमपोऽमृतपः सोमो महानीतिर्महामतिः ।
अजातशत्रुरालोकः सम्भाव्यो हव्यवाहनः ॥ १६ ॥

लोककारो वेदकारः सूत्रकारः सनातनः ।
महर्षिः कपिलाचार्यो विश्वदीप्तिस्त्रिलोचनः ॥ १७ ॥

पिनाकपाणिभूर्देवः स्वस्तिदः स्वस्तिकृत् सदा ।
त्रिधामा सौभगः शर्वः सर्वज्ञः सर्वगोचरः ॥ १८ ॥

ब्रह्मधृग्विश्वसृक् स्वर्गः कर्णिकारः प्रियः कविः ।
शाखो विशाखो गोशाखः शिवो नैकः क्रतुः समः ॥ १९ ॥

गङ्गाप्लवोदको भावः सकलः स्थपतिः स्थिरः ।
विजितात्मा विधेयात्मा भूतवाहनसारथिः ॥ २० ॥

सगणो गणकार्यश्च सुकीर्तिश्छिन्नसंशयः ।
कामदेवः कामपालो भस्मोद्धूलितविग्रहः ॥ २१ ॥

भस्मप्रियो भस्मशायी कामी कान्तः कृतागमः।
समायुक्तो निवृत्तात्मा धर्मयुक्तः सदाशिवः ॥ २२ ॥

चतुर्मुखश्चतुर्बाहुर्दुरावासो दुरासदः ।
दुर्गमो दुर्लभो दुर्गः सर्वायुधविशारदः ॥ २३ ॥

अध्यात्मयोगनिलयः सुतन्तुस्तन्तुवर्द्धनः ।
शुभाङ्गो लोकसारङ्गो जगदीशोऽमृताशनः ॥ २४ ॥

भस्मशुद्धिकरो मेरुरोजस्वी शुद्धविग्रहः ।
हिरण्यरेतास्तरणिर्मरीचिर्महिमालयः ॥ २५ ॥

महाह्रदो महागर्भः सिद्धवृन्दारवन्दितः ।
व्याघ्रचर्मधरो व्याली महाभूतो महानिधिः ॥ २६ ॥

अमृताङ्गोऽमृतवपुः पञ्चयज्ञः प्रभञ्जनः ।
पञ्चविंशतितत्त्वज्ञः पारिजातः परावरः ॥ २७ ॥

सुलभः सुव्रतः शूरो वाङ्मयैकनिधिर्निधिः ।
वर्णाश्रमगुरुर्वर्णी शत्रुजिच्छत्रुतापनः ॥ २८ ॥

आश्रमः क्षपणः क्षामो ज्ञानवानचलाचलः ।
प्रमाणभूतो दुर्ज्ञेयः सुपर्णो वायुवाहनः ॥ २९ ॥

धनुर्द्धरो धनुर्वेदो गुणराशिर्गुणाकरः ।
अनन्तदृष्टिरानन्दो दण्डो दमयिता दमः ॥ ३० ॥

अभिवाद्यो महाचार्यो विश्वकर्मा विशारदः ।
वीतरागो विनीतात्मा तपस्वी भूतभावनः ॥ ३१ ॥

उन्मत्तवेषः प्रच्छन्नो जितकामो जितप्रियः ।
कल्याणप्रकृतिः कल्पः सर्वलोकप्रजापतिः ॥ ३२ ॥

तपस्वी तारको धीमान् प्रधानप्रभुरव्ययः ।
लोकपालोऽन्तर्हितात्मा कल्पादिः कमलेक्षणः ॥ ३३ ॥

वेदशास्त्रार्थतत्त्वज्ञो नियमो नियमाश्रयः ।
चन्द्रः सूर्यः शनिः केतुर्विरामो विद्रुमच्छविः ॥ ३४ ॥

भक्तिगम्यः परंब्रह्म मृगबाणार्पणोऽनघः ।
अद्रिराजालयः कान्तः परमात्मा जगद्गुरुः ॥ ३५ ॥

सर्वकर्माचलस्त्वष्टा मङ्गल्यो मङ्गलावृतः ।
महातपा दीर्घतपाः स्थविष्ठः स्थविरो ध्रुवः ॥ ३६ ॥

अहः सम्वत्सरो व्याप्तिः प्रमाणं परमं तपः ।
सम्वत्सरकरो मन्त्रः प्रत्ययः सर्वदर्शनः ॥ ३७ ॥

अजः सर्वेश्वरः स्निग्धो महारेता महाबलः ।
योगी योग्यो महारेताः सिद्धः सर्वादिरग्निदः ॥ ३८ ॥

वसुर्वसुमनाः सत्यः सर्वपापहरो हरः ।
अमृतः शाश्वतः शान्तो बाणहस्तः प्रतापवान् ॥ ३९ ॥

कमण्डलुधरो धन्वी वेदाङ्गो वेदविन्मुनिः ।
भ्राजिष्णुर्भोजनं भोक्ता लोकनेता दुराधरः ॥ ४० ॥

अतीन्द्रियो महामायः सर्वावासश्चतुष्पथः ।
कालयोगी महानादो महोत्साहो महाबलः ॥ ४१ ॥

महाबुद्धिर्महावीर्यो भूतचारी पुरन्दरः ।
निशाचरः प्रेतचारी महाशक्तिर्महाद्युतिः ॥ ४२ ॥

अनिर्देश्यवपुः श्रीमान् सर्वहार्यमितो गतिः ।
बहुश्रुतो बहुमयो नियतात्मा भवोद्भवः ॥ ४३ ॥

ओजस्तेजो द्युतिकरो नर्त्तकः सर्वकामकः ।
नृत्यप्रियो नृत्यनृत्यः प्रकाशात्मा प्रतापनः ॥ ४४ ॥

बुद्धस्पष्टाक्षरो मन्त्रः सम्मानः सारसंप्लवः ।
युगादिकृद् युगावर्तो गम्भीरो वृषवाहनः ॥ ४५ ॥

इष्टो विशिष्टः शिष्टेष्टः शरभः शरभो धनुः ।
अपां निधिरधिष्ठानं विजयो जयकालवित् ॥ ४६ ॥

प्रतिष्ठितः प्रमाणज्ञो हिरण्यकवचो हरिः ।
विरोचनः सुरगणो विद्येशो विबुधाश्रयः ॥ ४७ ॥

बालरूपो बलोन्माथी विवर्तो गहनो गुरुः ।
करणं कारणं कर्ता सर्वबन्धविमोचनः ॥ ४८ ॥

विद्वत्तमो वीतभयो विश्वभर्ता निशाकरः ।
व्यवसायो व्यवस्थानः स्थानदो जगदादिजः ॥ ४९ ॥

दुन्दुभो ललितो विश्वो भवात्मात्मनि संस्थितः ।
वीरेश्वरो वीरभद्रो वीरहा वीरभृद् विराट् ॥ ५० ॥

वीरचूडामणिर्वेत्ता तीव्रनादो नदीधरः ।
आज्ञाधारास्त्रिशूली च शिपिविष्टः शिवालयः ॥ ५१ ॥

बालखिल्यो महाचापस्तिग्मांशुर्निधिरव्ययः ।
अभिरामः सुशरणः सुब्रह्मण्यः सुधापतिः ॥ ५२ ॥

मघवान् कौशिको गोमान् विश्रामः सर्वशासनः।
ललाटाक्षो विश्वदेहः सारः संसारचक्रभृत् ॥ ५३ ॥

अमोघदण्डी मध्यस्थो हिरण्यो ब्रह्मवर्चसी ।
परमार्थः परमयः शम्बरो व्याघ्रकोऽनलः ॥ ५४ ॥

रुचिर्वररुचिर्वन्द्यो वाचस्पतिरहर्पतिः ।
रविर्विरोचनः स्कन्धः शास्ता वैवस्वतो जनः ॥ ५५ ॥

युक्तिरुन्नतकीर्तिश्च शान्तरागः पराजयः ।
कैलासपतिकामारिः सविता रविलोचनः ॥ ५६ ॥

विद्वत्तमो वीतभयो विश्वहर्ता निवारितः ।
नित्यो नियतकल्याणः पुण्यश्रवणकीर्त्तनः ॥ ५७ ॥

दूरश्रवा विश्वसहो ध्येयो दुःस्वप्ननाशनः ।
उत्तारको दुष्कृतिहा दुर्धर्षो दुःसहोऽभयः ॥ ५८ ॥

अनादिर्भूर्भुवो लक्ष्मीः किरीटी त्रिदशाधिपः ।
विश्वगोप्ता विश्वभर्त्ता सुधीरो रुचिराङ्गदः ॥ ५९ ॥

जननो जनजन्मादिः प्रीतिमान् नीतिमान् नयः ।
विशिष्टः काश्यपो भानुर्भीमो भीमपराक्रमः ॥ ६० ॥

प्रणवः सप्तधाचारो महाकायो महाधनुः ।
जन्माधिपो महादेवः सकलागमपारगः ॥ ६१ ॥

तत्त्वातत्त्वविवेकात्मा विभूष्णुर्भूतिभूषणः ।
ऋषिर्ब्राह्मणविज्जिष्णुर्जन्ममृत्युजरातिगः ॥ ६२ ॥

यज्ञो यज्ञपतिर्यज्वा यज्ञान्तोऽमोघविक्रमः ।
महेन्द्रो दुर्भरः सेनी यज्ञाङ्गो यज्ञवाहनः ॥ ६३ ॥

पञ्चब्रह्मसमुत्पत्तिर्विश्वेशो विमलोदयः ।
आत्मयोनिरनाद्यन्तो षड्विंशत्सप्तलोकधृक् ॥ ६४ ॥

गायत्रीवल्लभः प्रांशुर्विश्वावासः प्रभाकरः ।
शिशुर्गिरिरतः सम्राट्सुषेणः सुरशत्रुहा ॥ ६५ ॥

अमोघोऽरिष्टमथनो मुकुन्दो विगतज्वरः ।
स्वयंज्योतिरनुज्योतिरात्मज्योतिरचञ्चलः ॥ ६६ ॥

पिङ्गलः कपिलश्मश्रुः शास्त्रनेत्रत्रयीतनुः ।
ज्ञानस्कन्धो महाज्ञानी निरुत्पत्तिरुपप्लवः ॥ ६७ ॥

भगो विवस्वानादित्यो योगाचार्यो बृहस्पतिः ।
उदारकीर्तिरुद्योगी सद्योगी सदसन्मयः ॥ ६८ ॥

नक्षत्रमाली राकेशः साधिष्ठानः षडाश्रयः ।
पवित्रपाणिः पापारिर्मणिपूरो मनोगतिः ॥ ६९ ॥

हृत्पुण्डरीकमासीनः शुक्लः शान्तो वृषाकपिः ।
विष्णुर्ग्रहपतिः कृष्णः समर्थोऽनर्थनाशनः ॥ ७० ॥

अधर्मशत्रुरक्षय्यः पुरुहूतः पुरुष्टुतः ।
ब्रह्मगर्भो बृहद्गर्भो धर्मधेनुर्धनागमः ॥ ७१ ॥

जगद्धितैषिसुगतः कुमारः कुशलागमः ।
हिरण्यवर्णो ज्योतिष्मान् नानाभूतधरो ध्वनिः ॥ ७२ ॥

अरोगो नियमाध्यक्षो विश्वामित्रो द्विजोत्तमः ।
बृहज्ज्योतिः सुधामा च महाज्योतिरनुत्तमः ॥ ७३ ॥

मातामहो मातरिश्वा नभस्वान् नागहारधृक् ।
पुलस्त्यः पुलहोऽगस्त्यो जातूकर्ण्यः पराशरः ॥ ७४ ॥

निरावरणधर्मज्ञो विरिञ्चो विष्टरश्रवाः ।
आत्मभूरनिरुद्धोऽत्रिज्ञानमूर्तिर्महायशाः ॥ ७५ ॥

लोकचूडामणिर्वीरः चण्डसत्यपराक्रमः ।
व्यालकल्पो महाकल्पो महावृक्षः कलाधरः ॥ ७६ ॥

अलंकरिष्णुस्त्वचलो रोचिष्णुर्विक्रमोत्तमः ।
आशुशब्दपतिर्वेगी प्लवनः शिखिसारथिः ॥ ७७ ॥

असंसृष्टोऽतिथिः शक्रः प्रमाथी पापनाशनः ।
वसुश्रवाः कव्यवाहः प्रतप्तो विश्वभोजनः ॥ ७८ ॥

जर्यो जराधिशमनो लोहितश्च तनूनपात् ।
पृषदश्वो नभोयोनिः सुप्रतीकस्तमिस्रहा ॥ ७९ ॥

निदाघस्तपनो मेघः पक्षः परपुरञ्जयः ।
मुखानिलः सुनिष्पन्नः सुरभिः शिशिरात्मकः ॥ ८० ॥

वसन्तो माधवो ग्रीष्मो नभस्यो बीजवाहनः ।
अङ्गिरा मुनिरात्रेयो विमलो विश्ववाहनः ॥ ८१ ॥

पावनः पुरुजिच्छक्रस्त्रिविद्यो नरवाहनः ।
मनो बुद्धिरहङ्कारः क्षेत्रज्ञः क्षेत्रपालकः ॥ ८२ ॥

तेजोनिधिर्ज्ञाननिधिर्विपाको विघ्नकारकः ।
अधरोऽनुत्तरो ज्ञेयो ज्येष्ठो निःश्रेयसालयः ॥ ८३ ॥

शैलो नगस्तनुर्दोहो दानवारिररिन्दमः ।
चारुधीर्जनकश्चारुविशल्यो लोकशल्यकृत् ॥ ८४ ॥

चतुर्वेदश्चतुर्भावश्चतुरश्चतुरप्रियः ।
आम्नायोऽथ समाम्नायस्तीर्थदेवशिवालयः ॥ ८५ ॥

बहुरूपो महारूपः सर्वरूपश्चराचरः ।
न्यायनिर्वाहको न्यायो न्यायगम्यो निरञ्जनः ॥ ८६ ॥

सहस्रमूर्द्धा देवेन्द्रः सर्वशस्त्रप्रभञ्जनः ।
मुण्डो विरूपो विकृतो दण्डी दान्तो गुणोत्तमः ॥ ८७ ॥

पिङ्गलाक्षोऽथ हर्यक्षो नीलग्रीवो निरामयः ।
सहस्रबाहुः सर्वेशः शरण्यः सर्वलोकभृत् ॥ ८८ ॥

पद्मासनः परं ज्योतिः परावरपरंफलः ।
पद्मगर्भो महागर्भो विश्वगर्भो विचक्षणः ॥ ८९ ॥

परावरज्ञो बीजेशः सुमुखः सुमहास्वनः ।
देवासुरगुरुर्देवो देवासुरनमस्कृतः ॥ ९० ॥

देवासुरमहामात्रो देवासुरमहाश्रयः ।
देवादिदेवो देवर्षिदेवासुरवरप्रदः ॥ ९१ ॥

देवासुरेश्वरो दिव्यो देवासुरमहेश्वरः ।
सर्वदेवमयोऽचिन्त्यो देवतात्मात्मसम्भवः ॥ ९२ ॥

ईड्योऽनीशः सुरव्याघ्रो देवसिंहो दिवाकरः ।
विबुधाग्रवरश्रेष्ठः सर्वदेवोत्तमोत्तमः ॥ ९३ ॥

शिवज्ञानरतः श्रीमान् शिखिश्रीपर्वतप्रियः ।
जयस्तम्भो विशिष्टम्भो नरसिंहनिपातनः ॥ ९४ ॥

ब्रह्मचारी लोकचारी धर्मचारी धनाधिपः ।
नन्दी नन्दीश्वरो नग्नो नग्नव्रतधरः शुचिः ॥ ९५ ॥

लिङ्गाध्यक्षः सुराध्यक्षो युगाध्यक्षो युगावहः ।
स्ववशः सवशः स्वर्गः स्वरः स्वरमयस्वनः ॥ ९६ ॥

बीजाध्यक्षो बीजकर्ता धनकृद् धर्मवर्धनः ।
दम्भोऽदम्भो महादम्भः सर्वभूतमहेश्वरः ॥ ९७ ॥

श्मशाननिलयस्तिष्यः सेतुरप्रतिमाकृतिः ।
लोकोत्तरस्फुटालोकस्त्र्यंबको नागभूषणः ॥ ९८ ॥

अन्धकारिर्मखद्वेषी विष्णुकन्धरपातनः ।
वीतदोषोऽक्षयगुणो दक्षारिः पूषदन्तहृत् ॥ ९९ ॥

धूर्जटिः खण्डपरशुः सकलो निष्कलोऽनघः ।
आधारः सकलाधारः पाण्डुराभो मृडो नटः ॥ १०० ॥

पूर्णः पूरयिता पुण्यः सुकुमारः सुलोचनः ।
सामगेयः प्रियकरः पुण्यकीर्तिरनामयः ॥ १०१ ॥

मनोजवस्तीर्थकरो जटिलो जीवितेश्वरः ।
जीवितान्तकरो नित्यो वसुरेता वसुप्रियः ॥ १०२ ॥

सद्गतिः सत्कृतिः सक्तः कालकण्ठः कलाधरः ।
मानी मान्यो महाकालः सद्भूतिः सत्परायणः ॥ १०३ ॥

चन्द्रसञ्जीवनः शास्ता लोकगूढोऽमराधिपः ।
लोकबन्धुर्लोकनाथः कृतज्ञः कृतिभूषणः ॥ १०४ ॥

अनपाय्यक्षरः कान्तः सर्वशास्त्रभृतां वरः ।
तेजोमयो द्युतिधरो लोकमायोऽग्रणीरणुः ॥ १०५ ॥

शुचिस्मितः प्रसन्नात्मा दुर्जयो दुरतिक्रमः ।
ज्योतिर्मयो निराकारो जगन्नाथो जलेश्वरः ॥ १०६ ॥

तुम्बवीणी महाकायो विशोकः शोकनाशनः ।
त्रिलोकात्मा त्रिलोकेशः शुद्धः शुद्धी रथाक्षजः ॥ १०७ ॥

अव्यक्तलक्षणोऽव्यक्तो व्यक्ताव्यक्तो विशाम्पतिः ।
वरशीलो वरतुलो मानो मानधनो मयः ॥ १०८ ॥

ब्रह्मा विष्णुः प्रजापालो हंसो हंसगतिर्यमः ।
वेधा धाता विधाता च अत्ता हर्ता चतुर्मुखः ॥ १०९ ॥

कैलासशिखरावासी सर्वावासी सतां गतिः ।
हिरण्यगर्भो हरिणः पुरुषः पूर्वजः पिता ॥ ११० ॥

भूतालयो भूतपतिर्भूतिदो भुवनेश्वरः ।
संयोगी योगविद्ब्रह्मा ब्रह्मण्यो ब्राह्मणप्रियः ॥ १११ ॥

देवप्रियो देवनाथो देवज्ञो देवचिन्तकः ।
विषमाक्षः कलाध्यक्षो वृषाङ्को वृषवर्धनः ॥ ११२ ॥

निर्मदो निरहङ्कारो निर्मोहो निरुपद्रवः ।
दर्पहा दर्पितो दृप्तः सर्वर्तुपरिवर्तकः ॥ ११३ ॥

सप्तजिह्वः सहस्रार्चिः स्निग्धः प्रकृतिदक्षिणः ।
भूतभव्यभवन्नाथः प्रभवो भ्रान्तिनाशनः ॥ ११४ ॥

अर्थोऽनर्थो महाकोशो परकार्यैकपण्डितः ।
निष्कण्टकः कृतानन्दो निर्व्याजो व्याजमर्दनः ॥ ११५ ॥

सत्त्ववान् सात्त्विकः सत्यकीर्त्तिस्तम्भकृतागमः ।
अकम्पितो गुणग्राही नैकात्मा नैककर्मकृत् ॥ ११६ ॥

सुप्रीतः सुमुखः सूक्ष्मः सुकरो दक्षिणोऽनलः ।
स्कन्धः स्कन्धधरो धुर्यः प्रकटः प्रीतिवर्धनः ॥ ११७ ॥

अपराजितः सर्वसहो विदग्धः सर्ववाहनः ।
अधृतः स्वधृतः साध्यः पूर्तमूर्तिर्यशोधरः ॥ ११८ ॥

वराहशृङ्गधृग्वायुर्बलवानेकनायकः ।
श्रुतिप्रकाशः श्रुतिमानेकबन्धुरनेकधृक् ॥ ११९ ॥

श्रीवल्लभशिवारम्भः शान्तभद्रः समञ्जसः ।
भूशयो भूतिकृद्भूतिर्भूषणो भूतवाहनः ॥ १२० ॥

अकायो भक्तकायस्थः कालज्ञानी कलावपुः ।
सत्यव्रतमहात्यागी निष्ठाशान्तिपरायणः ॥ १२१ ॥

परार्थवृत्तिर्वरदो विविक्तः श्रुतिसागरः ।
अनिर्विण्णो गुणग्राही कलङ्काङ्कः कलङ्कहा ॥ १२२ ॥

स्वभावरुद्रो मध्यस्थः शत्रुघ्नो मध्यनाशकः ।
शिखण्डी कवची शूली चण्डी मुण्डी च कुण्डली ॥ १२३ ॥

मेखली कवची खड्गी मायी संसारसारथिः ।
अमृत्युः सर्वदृक् सिंहस्तेजोराशिर्महामणिः ॥ १२४ ॥

असंख्येयोऽप्रमेयात्मा वीर्यवान् कार्यकोविदः ।
वेद्यो वेदार्थविद्गोप्ता सर्वाचारो मुनीश्वरः ॥ १२५ ॥

अनुत्तमो दुराधर्षो मधुरः प्रियदर्शनः ।
सुरेशः शरणं सर्वः शब्दब्रह्म सतां गतिः ॥ १२६ ॥

कालभक्षः कलङ्कारिः कङ्कणीकृतवासुकिः ।
महेष्वासो महीभर्ता निष्कलङ्को विशृङ्खलः ॥ १२७ ॥

द्युमणिस्तरणिर्धन्यः सिद्धिदः सिद्धिसाधनः ।
निवृत्तः संवृतः शिल्पो व्यूढोरस्को महाभुजः ॥ १२८ ॥

एकज्योतिर्निरातङ्को नरो नारायणप्रियः ।
निर्लेपो निष्प्रपञ्चात्मा निर्व्यग्रो व्यग्रनाशनः ॥ १२९ ॥

स्तव्यस्तवप्रियः स्तोता व्यासमूर्तिरनाकुलः ।
निरवद्यपदोपायो विद्याराशिरविक्रमः ॥ १३० ॥

प्रशान्तबुद्धिरक्षुद्रः क्षुद्रहा नित्यसुन्दरः ।
धैर्याग्र्यधुर्यो धात्रीशः शाकल्यः शर्वरीपतिः ॥ १३१ ॥

परमार्थगुरुर्दृष्टिर्गुरुराश्रितवत्सलः ।
रसो रसज्ञः सर्वज्ञः सर्वसत्त्वावलम्बनः ॥ १३२ ॥

## अथ फलस्तुतिः

जनार्दनोऽपि भगवान् देवानामपि सन्निधौ ।
अयाचत महादेवं ब्रह्माणं मुनिभिः समम् ॥ १ ॥

मया प्रोक्तं स्तवं दिव्यं पद्मयोने सुशोभनम् ।
यः पठेच्छृणुयाद्वापि श्रावयेद्वा द्विजोत्तमान् ॥ २ ॥

प्रतिनाम्नि हिरण्यस्य दत्तस्य फलमाप्नुयात् ।
अश्वमेधसहस्रेण फलं भवति तस्य वै ॥ ३ ॥

घृताद्यैः स्नापयेद्रुद्रं स्थाल्या वै कलशैः शुभैः ।
नाम्नां सहस्रेणानेन श्रद्धया शिवमीश्वरम् ॥ ४ ॥

सोऽपि यज्ञसहस्रस्य फलं लब्ध्वा सुरेश्वरैः ।
पूज्यो भवति रुद्रस्य प्रीतिर्भवति तस्य वै ॥ ५ ॥

तथास्त्विति तथा प्राह पद्मयोनेर्जनार्दनम् ।
जग्मतुः प्रणिपत्यैनं देवदेवं जगद्गुरुम् ॥ ६ ॥

तस्मान्नाम्नां सहस्रेण पूजयेदनघो द्विजाः ।
जपेन्नाम्नां सहस्रं च स याति परमां गतिम् ॥ ७ ॥

**॥ इति श्रीलिङ्गमहापुराणे पूर्वभागे सहस्रनामभिः पूजनाद्विष्णुचक्रलाभो नामाष्टनवतितमोऽध्यायः ॥**

# ॥ अथ नामावलिः ॥

१. ॐ भवाय शिवाय नमः ।[१]
२. ॐ हराय रुद्राय नमः ।
३. ॐ पुरुषाय नमः ।
४. ॐ पद्मलोचनाय नमः ।
५. ॐ अर्थितव्याय नमः ।
६. ॐ सदाचाराय नमः ।
७. ॐ सर्वशम्भुमहेश्वराय नमः ।
८. ॐ ईश्वराय नमः ।
९. ॐ स्थाणवे नमः ।
१०. ॐ ईशानाय नमः ।
११. ॐ सहस्राक्षाय सहस्रपदे नमः ।
१२. ॐ वरीयसे नमः ।
१३. ॐ वरदाय वन्द्याय नमः ।
१४. ॐ शङ्कराय नमः ।
१५. ॐ परमेश्वराय नमः ।
१६. ॐ गङ्गाधराय नमः ।
१७. ॐ शूलधराय नमः ।
१८. ॐ परार्थैकप्रयोजनाय नमः ।
१९. ॐ सर्वज्ञाय नमः ।
२०. ॐ सर्वदेवादिगिरिधन्वने नमः ।
२१. ॐ जटाधराय नमः ।
२२. ॐ चन्द्रापीडाय नमः ।
२३. ॐ चन्द्रमौलये नमः ।
२४. ॐ विदुषे नमः ।
२५. ॐ विश्वामरेश्वराय नमः ।
२६. ॐ वेदान्तसारसन्दोहाय नमः ।
२७. ॐ कपालिने नीललोहिताय नमः ।
२८. ॐ ध्यानाधाराय नमः ।
२९. ॐ अपरिच्छेद्याय नमः ।
३०. ॐ गौरीभर्त्रे नमः ।
३१. ॐ गणेश्वराय नमः ।
३२. ॐ अष्टमूर्तिविश्वमूर्तये नमः ।
३३. ॐ त्रिवर्गाय नमः ।
३४. ॐ स्वर्गसाधनाय नमः ।
३५. ॐ ज्ञानगम्याय नमः ।
३६. ॐ दृढप्रज्ञाय नमः ।
३७. ॐ देवदेवाय नमः ।
३८. ॐ त्रिलोचनाय नमः ।
३९. ॐ वामदेवाय नमः ।
४०. ॐ महादेवाय नमः ।
४१. ॐ पाण्डवे नमः ।
४२. ॐ परिदृढाय नमः ।
४३. ॐ अदृढाय नमः ।
४४. ॐ विश्वरूपाय नमः ।
४५. ॐ विरूपाक्षाय नमः ।
४६. ॐ वागीशाय नमः ।
४७. ॐ शुचये नमः ।
४८. ॐ अन्तराय नमः ।

१. शिवतोषिणी टीकानुसार दो शब्दों के एक नाम स्वीकारे हैं।

४९. ॐ सर्वप्रणयसंवादिने नमः ।
५०. ॐ वृषाङ्काय नमः ।
५१. ॐ वृषवाहनाय नमः ।
५२. ॐ ईशाय पिनाकिने नमः ।
५३. ॐ खट्वाङ्गिने नमः ।
५४. ॐ चित्रवेषाय नमः ।
५५. ॐ चिरन्तनाय नमः ।
५६. ॐ तमोहराय नमः ।
५७. ॐ महायोगिने गोप्त्रे नमः ।
५८. ॐ ब्रह्माङ्गहृज्जटिने नमः ।
५९. ॐ कालकालाय नमः ।
६०. ॐ कृत्तिवाससे नमः ।
६१. ॐ सुभगाय नमः ।
६२. ॐ प्रणवात्मकाय नमः ।
६३. ॐ उन्मत्तवेषाय नमः ।
६४. ॐ चक्षुष्याय नमः ।
६५. ॐ दुर्वाससे नमः ।
६६. ॐ स्मरशासनाय नमः ।
६७. ॐ दृढायुधाय स्कन्दगुरवे नमः ।
६८. ॐ परमेष्ठिने परायणाय नमः ।
६९. ॐ अनादिमध्यनिधनाय नमः ।
७०. ॐ गिरिशाय गिरिबान्धवाय नमः ।
७१. ॐ कुबेरबन्धवे श्रीकण्ठाय नमः ।
७२. ॐ लोकवर्णोत्तमोत्तमाय नमः ।
७३. ॐ सामान्यदेवाय नमः ।
७४. ॐ कोदण्डिने नमः ।
७५. ॐ नीलकण्ठाय नमः ।
७६. ॐ परश्वधिने नमः ।
७७. ॐ विशालाक्षाय नमः ।
७८. ॐ मृगव्याधाय नमः ।
७९. ॐ सुरेशाय नमः ।
८०. ॐ सूर्यतापनाय नमः ।
८१. ॐ धर्मकर्माक्षमाय नमः ।
८२. ॐ क्षेत्राय भगवते नमः ।
८३. ॐ भगनेत्रभिदे उग्राय नमः ।
८४. ॐ पशुपतये नमः ।
८५. ॐ तार्क्ष्यप्रियभक्ताय नमः ।
८६. ॐ प्रियंवदाय नमः ।
८७. ॐ दान्तोदयाकराय नमः ।
८८. ॐ दक्षाय नमः ।
८९. ॐ कपर्दिने नमः ।
९०. ॐ कामशासनाय नमः ।
९१. ॐ श्मशाननिलयाय सूक्ष्माय नमः ।
९२. ॐ श्मशानस्थाय नमः ।
९३. ॐ महेश्वराय नमः ।
९४. ॐ लोककर्त्रे नमः ।
९५. ॐ भूतपतये नमः ।
९६. ॐ महाकर्त्रे नमः ।
९७. ॐ महौषधिने नमः ।

९८. ॐ उत्तराय नमः ।
९९. ॐ गोपतये नमः ।
**१००. ॐ गोप्त्रे नमः ।**
१०१. ॐ ज्ञानगम्याय नमः ।
१०२. ॐ पुरातनाय नमः ।
१०३. ॐ नीतये नमः ।
१०४. ॐ सुनीतये नमः ।
१०५. ॐ शुद्धात्मने नमः ।
१०६. ॐ सोमसोमरताय नमः ।
१०७. ॐ सुखिने नमः ।
१०८. ॐ सोमपाय नमः ।
१०९. ॐ अमृतपाय नमः ।
११०. ॐ सोमाय नमः ।
१११. ॐ महानीतये नमः ।
११२. ॐ महामतये नमः ।
११३. ॐ अजातशत्रवे नमः ।
११४. ॐ आलोकाय नमः ।
११५. ॐ संभाव्याय नमः ।
११६. ॐ हव्यवाहनाय नमः ।
११७. ॐ लोककाराय नमः ।
११८. ॐ वेदकाराय नमः ।
११९. ॐ सूत्रकाराय नमः ।
१२०. ॐ सनातनाय नमः ।
१२१. ॐ महर्षये कपिलाचार्याय नमः ।
१२२. ॐ विश्वदीप्तये नमः ।
१२३. ॐ त्रिलोचनाय नमः ।
१२४. ॐ पिनाकपाणिभूर्देवाय नमः ।
१२५. ॐ स्वस्तिदाय नमः ।
१२६. ॐ सदास्वस्तिकृते नमः ।
१२७. ॐ त्रिधाम्ने नमः ।
१२८. ॐ सौभगाय नमः ।
१२९. ॐ शर्वसर्वज्ञाय नमः ।
१३०. ॐ सर्वगोचराय नमः ।
१३१. ॐ ब्रह्मधृग्विश्वसृक्स्वर्गाय नमः ।
१३२. ॐ कर्णिकाराय नमः ।
१३३. ॐ प्रियाय नमः ।
१३४. ॐ कवये नमः ।
१३५. ॐ शाखाय विशाखाय नमः ।
१३६. ॐ गोशाखाय नमः ।
१३७. ॐ शिवाय नमः ।
१३८. ॐ नैकाय नमः ।
१३९. ॐ क्रतवे नमः ।
१४०. ॐ समाय नमः ।
१४१. ॐ गंगाप्लवोदकाय नमः ।
१४२. ॐ भावाय नमः ।
१४३. ॐ सकलाय नमः ।
१४४. ॐ स्थपतिस्थिराय नमः ।
१४५. ॐ विजितात्मने नमः ।
१४६. ॐ विधेयात्मने नमः ।
१४७. ॐ भूतवाहनसारथये नमः ।

१४८. ॐ सगणाय नमः ।
१४९. ॐ गणकार्याय नमः ।
१५०. ॐ सुकीर्तये नमः ।
१५१. ॐ छिन्नसंशयाय नमः ।
१५२. ॐ कामदेवाय नमः ।
१५३. ॐ कामपालाय नमः ।
१५४. ॐ भस्मोद्धूलितविग्रहाय नमः ।
१५५. ॐ भस्मप्रियाय नमः ।
१५६. ॐ भस्मशायिने नमः ।
१५७. ॐ कामिने कान्ताय नमः ।
१५८. ॐ कृतागमाय नमः ।
१५९. ॐ समायुक्ताय नमः ।
१६०. ॐ निवृत्तात्मने नमः ।
१६१. ॐ धर्मयुक्ताय नमः ।
१६२. ॐ सदाशिवाय नमः ।
१६३. ॐ चतुर्मुखाय चतुर्बाहवे नमः ।
१६४. ॐ दुरावासाय नमः ।
१६५. ॐ दुरासदाय नमः ।
१६६. ॐ दुर्गमाय दुर्लभाय नमः ।
१६७. ॐ दुर्गाय नमः ।
१६८. ॐ सर्वायुधविशारदाय नमः ।
१६९. ॐ अध्यात्मयोगनिलयाय नमः ।
१७०. ॐ सुतन्तवे नमः ।
१७१. ॐ तन्तुवर्धनाय नमः ।
१७२. ॐ शुभाङ्गाय नमः ।
१७३. ॐ लोकसारङ्गाय नमः ।
१७४. ॐ जगदीशाय नमः ।
१७५. ॐ अमृताशनाय नमः ।
१७६. ॐ भस्मशुद्धिकराय नमः ।
१७७. ॐ मेरवे नमः ।
१७८. ॐ ओजस्विने शुद्धविग्रहाय नमः ।
१७९. ॐ हिरण्यरेतसे नमः ।
१८०. ॐ तरणये मरीचये नमः ।
१८१. ॐ महिमालयाय नमः ।
१८२. ॐ महाह्रदाय नमः ।
१८३. ॐ महागर्भाय नमः ।
१८४. ॐ सिद्धवृन्दारवन्दिताय नमः ।
१८५. ॐ व्याघ्रचर्मधराय नमः ।
१८६. ॐ व्यालिने नमः ।
१८७. ॐ महाभूताय नमः ।
१८८. ॐ महानिधये नमः ।
१८९. ॐ अमृताङ्गाय नमः ।
१९०. ॐ अमृतवपुषे नमः ।
१९१. ॐ पंचयज्ञाय नमः ।
१९२. ॐ प्रभञ्जनाय नमः ।
१९३. ॐ पंचविंशतितत्त्वज्ञाय नमः ।
१९४. ॐ पारिजाताय नमः ।
१९५. ॐ परावराय नमः ।
१९६. ॐ सुलभाय नमः ।

१९७. ॐ सुव्रताय शूराय नमः ।
१९८. ॐ वाङ्मयैकनिधये नमः ।
१९९. ॐ निधये नमः ।
**२००. ॐ वर्णाश्रमगुरवे नमः ।**
२०१. ॐ वर्णिने नमः ।
२०२. ॐ शत्रुजिच्छत्रुतापनाय नमः ।
२०३. ॐ आश्रमाय नमः ।
२०४. ॐ क्षपणाय नमः ।
२०५. ॐ क्षामाय नमः ।
२०६. ॐ ज्ञानवते नमः ।
२०७. ॐ अचलाचलाय नमः ।
२०८. ॐ प्रमाणभूताय नमः ।
२०९. ॐ दुर्ज्ञेयाय नमः ।
२१०. ॐ सुपर्णाय नमः ।
२११. ॐ वायुवाहनाय नमः ।
२१२. ॐ धनुर्धराय धनुर्वेदाय नमः ।
२१३. ॐ गुणराशये नमः ।
२१४. ॐ गुणाकराय नमः ।
२१५. ॐ अनन्तदृष्टये नमः ।
२१६. ॐ आनन्दाय नमः ।
२१७. ॐ दण्डाय दमयित्रे नमः ।
२१८. ॐ दमाय नमः ।
२१९. ॐ अभिवाद्याय नमः ।
२२०. ॐ महाचार्याय नमः ।
२२१. ॐ विश्वकर्मणे नमः ।
२२२. ॐ विशारदाय नमः ।
२२३. ॐ वीतरागाय नमः ।
२२४. ॐ विनीतात्मने नमः ।
२२५. ॐ तपस्विने नमः ।
२२६. ॐ भूतभावनाय नमः ।
२२७. ॐ उन्मत्तवेषाय प्रच्छन्नाय नमः ।
२२८. ॐ जितकामाय नमः ।
२२९. ॐ अजितप्रियाय नमः ।
२३०. ॐ कल्याणप्रकृतये नमः ।
२३१. ॐ कल्पाय नमः ।
२३२. ॐ सर्वलोकप्रजापतये नमः ।
२३३. ॐ तपस्विने तारकाय नमः ।
२३४. ॐ धीमते नमः ।
२३५. ॐ प्रधानप्रभवे नमः ।
२३६. ॐ अव्ययाय नमः ।
२३७. ॐ लोकपालाय नमः ।
२३८. ॐ अन्तर्हितात्मने नमः ।
२३९. ॐ कल्पादये नमः ।
२४०. ॐ कमलेक्षणाय नमः ।
२४१. ॐ वेदशास्त्रार्थतत्त्वज्ञाय नमः ।
२४२. ॐ नियमाय नमः ।
२४३. ॐ नियमाश्रयाय नमः ।
२४४. ॐ चन्द्राय नमः ।
२४५. ॐ सूर्याय नमः ।
२४६. ॐ शनये नमः ।
२४७. ॐ केतवे नमः ।
२४८. ॐ विरामाय नमः ।
२४९. ॐ विद्रुमच्छवये नमः ।

२५०. ॐ भक्तिगम्याय नमः ।
२५१. ॐ परंब्रह्ममृगबाणार्पणाय नमः ।
२५२. ॐ अनघाय नमः ।
२५३. ॐ अद्रिराजालयाय नमः ।
२५४. ॐ कान्ताय नमः ।
२५५. ॐ परमात्मने नमः ।
२५६. ॐ जगद्गुरवे नमः ।
२५७. ॐ सर्वकर्माचलाय नमः ।
२५८. ॐ त्वष्ट्रे नमः ।
२५९. ॐ मंगलाय मंगलावृताय नमः ।
२६०. ॐ महातपसे नमः ।
२६१. ॐ दीर्घतपसे नमः ।
२६२. ॐ स्थविष्ठाय नमः ।
२६३. ॐ स्थविराय नमः ।
२६४. ॐ ध्रुवाय नमः ।
२६५. ॐ अह्ने नमः ।
२६६. ॐ संवत्सराय नमः ।
२६७. ॐ व्याप्तये नमः ।
२६८. ॐ प्रमाणाय नमः ।
२६९. ॐ परमाय नमः ।
२७०. ॐ तपसे नमः ।
२७१. ॐ संवत्सरकराय नमः ।
२७२. ॐ मन्त्राय प्रत्ययाय नमः ।
२७३. ॐ सर्वदर्शनाय नमः ।
२७४. ॐ अजाय नमः ।
२७५. ॐ सर्वेश्वराय नमः ।
२७६. ॐ स्निग्धाय नमः ।
२७७. ॐ महारेतसे महाबलाय नमः ।
२७८. ॐ योगिने नमः ।
२७९. ॐ योग्याय नमः ।
२८०. ॐ महारेतसे नमः ।
२८१. ॐ सिद्धाय नमः ।
२८२. ॐ सर्वादये नमः ।
२८३. ॐ अग्निदाय नमः ।
२८४. ॐ वसवे नमः ।
२८५. ॐ वसुमनसे नमः ।
२८६. ॐ सत्यसर्वपापहराय नमः ।
२८७. ॐ हराय नमः ।
२८८. ॐ अमृताय शाश्वताय नमः ।
२८९. ॐ शान्ताय नमः ।
२९०. ॐ बाणहस्ताय प्रतापवते नमः ।
२९१. ॐ कमण्डलुधराय नमः ।
२९२. ॐ धन्विने नमः ।
२९३. ॐ वेदाङ्गाय नमः ।
२९४. ॐ वेदविदे नमः ।
२९५. ॐ मुनये नमः ।
२९६. ॐ भ्राजिष्णवे नमः ।
२९७. ॐ भोजनाय भोक्त्रे नमः ।
२९८. ॐ लोकनेत्रे नमः ।
२९९. ॐ दुराधराय नमः ।
**३००. ॐ अतीन्द्रियाय नमः ।**

३०१. ॐ महामायाय नमः ।
३०२. ॐ सर्वावासाय नमः ।
३०३. ॐ चतुष्पथाय नमः ।
३०४. ॐ कालयोगिने नमः ।
३०५. ॐ महानादाय नमः ।
३०६. ॐ महोत्साहाय नमः ।
३०७. ॐ महाबलाय नमः ।
३०८. ॐ महाबुद्धये नमः ।
३०९. ॐ महावीर्याय नमः ।
३१०. ॐ भूतचारिणे नमः ।
३११. ॐ पुरन्दराय नमः ।
३१२. ॐ निशाचराय नमः ।
३१३. ॐ प्रेतचारिमहाशक्तये नमः ।
३१४. ॐ महाद्युतये नमः ।
३१५. ॐ अनिर्देश्यवपुषे नमः ।
३१६. ॐ श्रीमते नमः ।
३१७. ॐ सर्वहार्यमिताय नमः ।
३१८. ॐ गतये नमः ।
३१९. ॐ बहुश्रुताय नमः ।
३२०. ॐ बहुमयाय नमः ।
३२१. ॐ नियतात्मने नमः ।
३२२. ॐ भवोद्भवाय नमः ।
३२३. ॐ ओजस्तेजोद्युतिकराय नमः ।
३२४. ॐ नर्तकाय नमः ।
३२५. ॐ सर्वकामकाय नमः ।
३२६. ॐ नृत्यप्रियाय नमः ।
३२७. ॐ नृत्यनृत्याय नमः ।
३२८. प्रकाशात्मने प्रतापनाय नमः ।
३२९. ॐ बुद्धस्पष्टाक्षराय नमः ।
३३०. ॐ मन्त्राय नमः ।
३३१. ॐ सन्मानाय नमः ।
३३२. ॐ सारसंप्लवाय नमः ।
३३३. ॐ युगादिकृद्युगावर्ताय नमः ।
३३४. ॐ गम्भीराय नमः ।
३३५. ॐ वृषवाहनाय नमः ।
३३६. ॐ इष्टाय नमः ।
३३७. ॐ विशिष्टाय शिष्टेष्टाय नमः ।
३३८. ॐ शरभाय नमः ।
३३९. ॐ शरभाय धनुषे नमः ।
३४०. ॐ अपां निधये नमः ।
३४१. ॐ अधिष्ठानविजयाय नमः ।
३४२. ॐ जयकालविदे नमः ।
३४३. ॐ प्रतिष्ठिताय नमः ।
३४४. ॐ प्रमाणज्ञाय नमः ।
३४५. ॐ हिरण्यकवचाय नमः ।
३४६. ॐ हरये नमः ।
३४७. ॐ विरोचनाय नमः ।
३४८. ॐ सुरगणाय नमः ।
३४९. ॐ विद्येशाय विबुधाश्रयाय नमः ।
३५०. ॐ बालरूपाय नमः ।
३५१. ॐ बलोन्माथिने नमः ।

३५२. ॐ विवर्ताय नमः ।
३५३. ॐ गहनाय गुरवे नमः ।
३५४. ॐ करणाय नमः ।
३५५. ॐ कारणाय नमः ।
३५६. ॐ कर्त्रे नमः ।
३५७. ॐ सर्वबन्धविमोचनाय नमः ।
३५८. ॐ विद्वत्तमाय वीतभयाय नमः ।
३५९. ॐ विश्वभर्त्रे नमः ।
३६०. ॐ निशाकराय नमः ।
३६१. ॐ व्यवसायाय नमः ।
३६२. ॐ व्यवस्थानाय नमः ।
३६३. ॐ स्थानदाय नमः ।
३६४. ॐ जगदादिजाय नमः ।
३६५. ॐ दुन्दुभाय नमः ।
३६६. ॐ ललिताय नमः ।
३६७. ॐ विश्वस्मै नमः ।
३६८. ॐ भवात्मात्मनिसंस्थिताय नमः ।
३६९. ॐ वीरेश्वराय वीरभद्राय नमः ।
३७०. ॐ वीरघ्ने नमः ।
३७१. ॐ वीरभृद्विराजे नमः ।
३७२. ॐ वीरचूडामणये नमः ।
३७३. ॐ वेत्रे नमः ।
३७४. ॐ तीव्रनादाय नमः ।
३७५. ॐ नदीधराय नमः ।
३७६. ॐ आज्ञाधाराय नमः ।
३७७. ॐ त्रिशूलिने नमः ।
३७८. ॐ शिपिविष्टाय नमः ।
३७९. ॐ शिवालयाय नमः ।
३८०. ॐ बालखिल्याय नमः ।
३८१. ॐ महाचापाय नमः ।
३८२. ॐ तिग्मांशवे नमः ।
३८३. ॐ निधये अव्ययाय नमः ।
३८४. ॐ अभिरामाय नमः ।
३८५. ॐ सुशरणाय नमः ।
३८६. ॐ सुब्रह्मण्याय नमः ।
३८७. ॐ सुधापतये नमः ।
३८८. ॐ मघवते कौशिकाय नमः ।
३८९. ॐ गोमते नमः ।
३९०. ॐ विश्रामाय नमः ।
३९१. ॐ सर्वशासनाय नमः ।
३९२. ॐ ललाटाक्षाय नमः ।
३९३. ॐ विश्वदेहाय नमः ।
३९४. ॐ साराय नमः ।
३९५. ॐ संसारचक्रभृते नमः ।
३९६. ॐ अमोघदण्डिने नमः ।
३९७. ॐ मध्यस्थाय नमः ।
३९८. ॐ हिरण्याय नमः ।
३९९. ॐ ब्रह्मवर्चसिने नमः ।
**४००. ॐ परमार्थाय नमः ।**
४०१. ॐ परमयसे नमः ।
४०२. ॐ शम्बराय नमः ।

४०३. ॐ व्याघ्रकाय नमः ।
४०४. ॐ अनलाय नमः ।
४०५. ॐ रुचये नमः ।
४०६. ॐ वररुचये नमः ।
४०७. ॐ वन्द्याय नमः ।
४०८. ॐ वाचस्पतये नमः ।
४०९. ॐ अहर्पतये नमः ।
४१०. ॐ रवये विरोचनाय नमः ।
४११. ॐ स्कन्धाय नमः ।
४१२. ॐ शास्त्रे वैवस्वताय नमः ।
४१३. ॐ अजनाय नमः ।
४१४. ॐ युक्तये नमः ।
४१५. ॐ उन्नतकीर्तये नमः ।
४१६. ॐ शान्तरागाय नमः ।
४१७. ॐ पराजयाय नमः ।
४१८. ॐ कैलासपतिकामारये नमः ।
४१९. ॐ सवित्रे नमः ।
४२०. ॐ रविलोचनाय नमः ।
४२१. ॐ विद्वत्तमाय नमः ।
४२२. ॐ वीतभयाय नमः ।
४२३. ॐ विश्वहर्त्रे अनिवारिताय नमः ।
४२४. ॐ नित्याय नमः ।
४२५. ॐ नियतकल्याणाय नमः ।
४२६. ॐ पुण्यश्रवणकीर्तनाय नमः ।
४२७. ॐ दूरश्रवसे नमः ।
४२८. ॐ विश्वसहाय नमः ।
४२९. ॐ ध्येयाय नमः ।
४३०. ॐ दुःस्वप्ननाशनाय नमः ।
४३१. ॐ उत्तारकाय नमः ।
४३२. ॐ दुष्कृतिघ्ने नमः ।
४३३. ॐ दुर्धर्षाय नमः ।
४३४. ॐ दुःसहाय नमः ।
४३५. ॐ अभयाय नमः ।
४३६. ॐ अनादये ।
४३७. ॐ भुवे नमः ।
४३८. ॐ भुवोलक्ष्म्यै नमः ।
४३९. ॐ किरीटित्रिदशाधिपाय नमः ।
४४०. ॐ विश्वगोप्त्रे नमः ।
४४१. ॐ विश्वभर्त्रे नमः ।
४४२. ॐ सुधीराय नमः ।
४४३. ॐ रुचिराङ्गदाय नमः ।
४४४. ॐ जननाय नमः ।
४४५. ॐ जनजन्मादये नमः ।
४४६. ॐ प्रीतिमते नमः ।
४४७. ॐ नीतिमते नमः ।
४४८. ॐ नयाय नमः ।
४४९. ॐ विशिष्टाय नमः ।
४५०. ॐ काश्यपाय नमः ।
४५१. ॐ भानवे नमः ।
४५२. ॐ भीमाय नमः ।
४५३. ॐ भीमपराक्रमाय नमः ।

४५४. ॐ प्रणवाय नमः ।
४५५. ॐ सप्तधाचाराय नमः ।
४५६. ॐ महाकायाय महाधनुषे नमः ।
४५७. ॐ जन्माधिपाय नमः ।
४५८. ॐ महादेवाय नमः ।
४५९. ॐ सकलागमपारगाय नमः ।
४६०. ॐ तत्त्वातत्त्वविवेकात्मने नमः।
४६१. ॐ विभूष्णवे नमः ।
४६२. ॐ भूतिभूषणाय नमः ।
४६३. ॐ ऋषये नमः ।
४६४. ॐ ब्राह्मणविज्जिष्णवे नमः।
४६५. ॐ जन्ममृत्युजरातिगाय नमः ।
४६६. ॐ यज्ञाय यज्ञपतये नमः ।
४६७. ॐ यज्वने नमः ।
४६८. ॐ यज्ञान्ताय नमः ।
४६९. ॐ अमोघविक्रमाय नमः ।
४७०. ॐ महेन्द्राय नमः ।
४७१. ॐ दुर्भराय नमः ।
४७२. ॐ सेनिने नमः ।
४७३. ॐ यज्ञाङ्गाय यज्ञवाहनाय नमः ।
४७४. ॐ पंचब्रह्मसमुत्पत्तये नमः ।
४७५. ॐ विश्वेशाय नमः ।
४७६. ॐ विमलोदयाय नमः ।
४७७. ॐ आत्मयोनये नमः ।
४७८. ॐ अनाद्यन्ताय नमः ।
४७९. ॐ षड्विंशत्सप्तलोकधृषे नमः ।
४८०. ॐ गायत्रीवल्लभाय नमः ।
४८१. ॐ प्रांशवे नमः ।
४८२. ॐ विश्वावासाय नमः ।
४८३. ॐ प्रभाकराय नमः ।
४८४. ॐ शिशवे नमः ।
४८५. ॐ गिरिरताय नमः ।
४८६. ॐ सम्राट्सुषेणाय नमः ।
४८७. ॐ सुरशत्रुघ्ने नमः ।
४८८. ॐ अमोघाय नमः ।
४८९. ॐ अरिष्टमथनाय नमः ।
४९०. ॐ मुकुन्दाय नमः ।
४९१. ॐ विगतज्वराय नमः ।
४९२. ॐ स्वयंज्योतिषे नमः ।
४९३. ॐ अनुज्योतिषे नमः ।
४९४. ॐ आत्मज्योतिषे नमः ।
४९५. ॐ अचञ्चलाय नमः ।
४९६. ॐ पिङ्गलाय नमः ।
४९७. ॐ कपिलश्मश्रुणे नमः ।
४९८. ॐ शास्त्रनेत्रत्रयीतनवे नमः।
४९९. ॐ ज्ञानस्कन्धाय नमः ।
**५००. ॐ महाज्ञानिने नमः ।**
५०१. ॐ निरुत्पत्तये नमः ।
५०२. ॐ उपप्लवाय नमः ।

५०३. ॐ भगाय नमः ।
५०४. ॐ विवस्वते आदित्याय नमः ।
५०५. ॐ योगाचार्याय नमः ।
५०६. ॐ बृहस्पतये नमः ।
५०७. ॐ उदारकीर्तये नमः ।
५०८. ॐ उद्योगिने नमः ।
५०९. ॐ सद्योगिने नमः ।
५१०. ॐ सदसन्मयाय नमः ।
५११. ॐ नक्षत्रमालिने राकेशाय नमः ।
५१२. ॐ साधिष्ठानाय नमः ।
५१३. ॐ षडाश्रयाय नमः ।
५१४. ॐ पवित्रपाणये नमः ।
५१५. ॐ पापारये नमः ।
५१६. ॐ मणिपूराय नमः ।
५१७. ॐ मनोगतये नमः ।
५१८. ॐ हृत्पुण्डरीकमासीनाय नमः ।
५१९. ॐ शुक्लाय नमः ।
५२०. ॐ शान्ताय वृषाकपये नमः ।
५२१. ॐ विष्णवे नमः ।
५२२. ॐ ग्रहपतये नमः ।
५२३. ॐ कृष्णाय नमः ।
५२४. ॐ समर्थाय नमः ।
५२५. ॐ अर्थनाशनाय नमः ।
५२६. ॐ अधर्मशत्रवे नमः ।
५२७. ॐ अक्षय्याय नमः ।
५२८. ॐ पुरुहूताय पुरुष्टुताय नमः ।
५२९. ॐ ब्रह्मगर्भाय नमः ।
५३०. ॐ बृहद्गर्भाय नमः ।
५३१. ॐ धर्मधेनवे नमः ।
५३२. ॐ धनागमाय नमः ।
५३३. ॐ जगद्धितैषिसुगताय नमः ।
५३४. ॐ कुमाराय नमः ।
५३५. ॐ कुशलागमाय नमः ।
५३६. ॐ हिरण्यवर्णाय नमः ।
५३७. ॐ ज्योतिष्मते नमः ।
५३८. ॐ नानाभूतधराय नमः ।
५३९. ॐ ध्वनये नमः ।
५४०. ॐ अरोगाय नमः ।
५४१. ॐ नियमाध्यक्षाय नमः ।
५४२. ॐ विश्वामित्राय द्विजोत्तमाय नमः ।
५४३. ॐ बृहज्ज्योतिषे नमः ।
५४४. ॐ सुधाम्ने नमः ।
५४५. ॐ महाज्योतिषे नमः ।
५४६. ॐ अनुत्तमाय नमः ।
५४७. ॐ मातामहाय नमः ।
५४८. ॐ मातरिश्वने नमः ।
५४९. ॐ नभस्वते नमः ।
५५०. ॐ नागहारधृषे नमः ।

५५१. ॐ पुलस्त्याय नमः ।
५५२. ॐ पुलहाय नमः ।
५५३. ॐ अगस्त्याय नमः ।
५५४. ॐ जातूकर्ण्याय नमः ।
५५५. ॐ पराशराय नमः ।
५५६. ॐ निरावरणधर्मज्ञाय नमः ।
५५७. ॐ विरिञ्चाय नमः ।
५५८. ॐ विष्टरश्रवसे नमः ।
५५९. ॐ आत्मभुवे नमः ।
५६०. ॐ अनिरुद्धाय नमः ।
५६१. ॐ अत्रिज्ञानमूर्तये नमः ।
५६२. ॐ महायशसे नमः ।
५६३. ॐ लोकचूडामणये नमः ।
५६४. ॐ वीराय नमः ।
५६५. ॐ चण्डसत्यपराक्रमाय नमः ।
५६६. ॐ व्यालकल्पाय नमः ।
५६७. ॐ महाकल्पाय नमः ।
५६८. ॐ महावृक्षाय नमः ।
५६९. ॐ कलाधराय नमः ।
५७०. ॐ अलंङ्करिष्णवे नमः ।
५७१. ॐ अचलाय नमः ।
५७२. ॐ रोचिष्णवे नमः ।
५७३. ॐ विक्रमोत्तमाय नमः ।
५७४. ॐ आशुशब्दपतये नमः ।
५७५. ॐ वेगिने नमः ।
५७६. ॐ प्लवनाय नमः ।
५७७. ॐ शिखिसारथये नमः ।
५७८. ॐ असंसृष्टाय नमः ।
५७९. ॐ अतिथये नमः ।
५८०. ॐ शक्राय प्रमाथिने नमः ।
५८१. ॐ पापनाशनाय नमः ।
५८२. ॐ वसुश्रवसे नमः ।
५८३. ॐ कव्यवाहाय नमः ।
५८४. ॐ प्रतप्ताय नमः ।
५८५. ॐ विश्वभोजनाय नमः ।
५८६. ॐ जर्याय नमः ।
५८७. ॐ जराधिशमनाय नमः ।
५८८. ॐ लोहिताय नमः ।
५८९. ॐ तनूनपाते नमः ।
५९०. ॐ पृषदश्वाय नमः ।
५९१. ॐ नभसे नमः ।
५९२. ॐ योनये नमः ।
५९३. ॐ सुप्रतीकाय नमः ।
५९४. ॐ तमिस्रघ्ने नमः ।
५९५. ॐ निदाघाय तपनाय नमः ।
५९६. ॐ मेघाय पक्षाय नमः ।
५९७. ॐ परपुरञ्जयाय नमः ।
५९८. ॐ मुखानिलाय नमः ।
५९९. ॐ सुनिष्पन्नाय नमः ।
**६००. ॐ सुरभये नमः ।**
६०१. ॐ शिशिरात्मकाय नमः ।
६०२. ॐ वसन्ताय माधवाय नमः ।
६०३. ॐ ग्रीष्माय नमः ।

६०४. ॐ नभस्याय नमः ।
६०५. ॐ बीजवाहनाय नमः ।
६०६. ॐ अङ्गिरसे नमः ।
६०७. ॐ मुनये आत्रेयाय नमः ।
६०८. ॐ विमलाय नमः ।
६०९. ॐ विश्ववाहनाय नमः ।
६१०. ॐ पावनाय नमः ।
६११. ॐ पुरुजिते नमः ।
६१२. ॐ शक्राय नमः ।
६१३. ॐ त्रिविद्याय नमः ।
६१४. ॐ नरवाहनाय नमः ।
६१५. ॐ मनोबुद्धये नमः ।
६१६. ॐ अहङ्काराय नमः ।
६१७. ॐ क्षेत्रज्ञाय नमः ।
६१८. ॐ क्षेत्रपालकाय नमः ।
६१९. ॐ तेजोनिधये नमः ।
६२०. ॐ ज्ञाननिधये नमः ।
६२१. ॐ विपाकाय नमः ।
६२२. ॐ विघ्नकारकाय नमः ।
६२३. ॐ अधराय नमः ।
६२४. ॐ अनुत्तराय नमः ।
६२५. ॐ ज्ञेयाय नमः ।
६२६. ॐ ज्येष्ठाय नमः ।
६२७. ॐ निःश्रेयसालयाय नमः ।
६२८. ॐ शैलाय नमः ।
६२९. ॐ नगाय नमः ।
६३०. ॐ तनवे नमः ।
६३१. ॐ दोहाय नमः ।
६३२. ॐ दानवारये नमः ।
६३३. ॐ अरिन्दमाय नमः ।
६३४. ॐ चारुधिये जनकाय नमः ।
६३५. ॐ चारुविशल्याय नमः ।
६३६. ॐ लोकशल्यकृते नमः ।
६३७. ॐ चतुर्वेदाय नमः ।
६३८. ॐ चतुर्भावाय नमः ।
६३९. ॐ चतुराय चतुरप्रियाय नमः ।
६४०. ॐ आम्नायाय नमः ।
६४१. ॐ समाम्नायाय नमः ।
६४२. ॐ तीर्थदेवशिवालयाय नमः ।
६४३. ॐ बहुरूपाय नमः ।
६४४. ॐ महारूपाय नमः ।
६४५. ॐ सर्वरूपाय नमः ।
६४६. ॐ चराचराय नमः ।
६४७. ॐ न्यायनिर्वाहकाय नमः ।
६४८. ॐ न्यायाय नमः ।
६४९. ॐ न्यायगम्याय नमः ।
६५०. ॐ निरञ्जनाय नमः ।
६५१. ॐ सहस्रमूर्ध्ने नमः ।
६५२. ॐ देवेन्द्राय नमः ।
६५३. ॐ सर्वशस्त्रप्रभञ्जनाय नमः ।

६५४. ॐ मुण्डाय नमः ।
६५५. ॐ विरूपाय नमः ।
६५६. ॐ विकृताय नमः ।
६५७. ॐ दण्डिने नमः ।
६५८. ॐ दान्ताय नमः ।
६५९. ॐ गुणोत्तमाय नमः ।
६६०. ॐ पिङ्गलाक्षाय नमः ।
६६१. ॐ हर्यक्षाय नमः ।
६६२. ॐ नीलग्रीवाय नमः ।
६६३. ॐ निरामयाय नमः ।
६६४. ॐ सहस्रबाहवे सर्वेशाय नमः ।
६६५. ॐ शरण्याय नमः ।
६६६. ॐ सर्वलोकभृते नमः ।
६६७. ॐ पद्मासनाय नमः ।
६६८. ॐ परंज्योतिषे नमः ।
६६९. ॐ परावरपरंफलाय नमः ।
६७०. ॐ पद्मगर्भाय नमः ।
६७१. ॐ महागर्भाय नमः ।
६७२. ॐ विश्वगर्भाय नमः ।
६७३. ॐ विचक्षणाय नमः ।
६७४. ॐ परावरज्ञाय नमः ।
६७५. ॐ बीजेशाय नमः ।
६७६. ॐ सुमुखाय सुमहास्वनाय नमः ।
६७७. ॐ देवासुरगुरवे देवाय नमः ।
६७८. ॐ देवासुरनमस्कृताय नमः ।
६७९. ॐ देवासुरमाहामात्राय नमः ।
६८०. ॐ देवासुरमहाश्रयाय नमः ।
६८१. ॐ देवादिदेवाय नमः ।
६८२. ॐ देवर्षिदेवासुरवरप्रदाय नमः ।
६८३. ॐ देवासुरेश्वराय नमः ।
६८४. ॐ दिव्याय नमः ।
६८५. ॐ देवासुरमहेश्वराय नमः ।
६८६. ॐ सर्वदेवमयाय नमः ।
६८७. ॐ अचिन्त्याय नमः ।
६८८. ॐ देवतात्मने नमः ।
६८९. ॐ आत्मसम्भवाय नमः ।
६९०. ॐ ईड्याय नमः ।
६९१. ॐ अनीशाय नमः ।
६९२. ॐ सुरव्याघ्राय नमः ।
६९३. ॐ देवसिंहाय नमः ।
६९४. ॐ दिवाकराय नमः ।
६९५. ॐ विबुधाग्रवरश्रेष्ठाय नमः ।
६९६. ॐ सर्वदेवोत्तमोत्तमाय नमः ।
६९७. ॐ शिवज्ञानरताय नमः ।
६९८. ॐ श्रीमते नमः ।
६९९. ॐ शिखिश्रीपर्वतप्रियाय नमः ।
**७००. ॐ जयस्तम्भाय नमः ।**
७०१. ॐ विशिष्टम्भाय नमः ।
७०२. ॐ नरसिंहनिपातनाय नमः ।
७०३. ॐ ब्रह्मचारिणे नमः ।

७०४. ॐ लोकचारिणे नमः ।
७०५. ॐ धर्मचारिणे नमः ।
७०६. ॐ धनाधिपाय नमः ।
७०७. ॐ नन्दिने नमः ।
७०८. ॐ नन्दीश्वराय नमः ।
७०९. ॐ नग्नाय नमः ।
७१०. ॐ नग्नव्रतधराय नमः ।
७११. ॐ शुचये नमः ।
७१२. ॐ लिंगाध्यक्षाय नमः ।
७१३. ॐ सुराध्यक्षाय नमः ।
७१४. ॐ युगाध्यक्षाय नमः ।
७१५. ॐ युगावहाय नमः ।
७१६. ॐ स्ववशाय नमः ।
७१७. ॐ सवशाय नमः ।
७१८. ॐ स्वर्गस्वराय नमः ।
७१९. ॐ स्वरमयस्वनाय नमः ।
७२०. ॐ बीजाध्यक्षाय नमः ।
७२१. ॐ बीजकर्त्रे नमः ।
७२२. ॐ धनकृद्धर्मवर्धनाय नमः ।
७२३. ॐ दम्भाय नमः ।
७२४. ॐ अदम्भाय नमः ।
७२५. ॐ महादम्भाय नमः ।
७२६. ॐ सर्वभूतमहेश्वराय नमः ।
७२७. ॐ श्मशाननिलयाय नमः ।
७२८. ॐ तिष्याय नमः ।
७२९. ॐ सेतवे नमः ।
७३०. ॐ अप्रतिमाकृतये नमः ।
७३१. ॐ लोकोत्तरस्फुटालोकाय नमः ।
७३२. ॐ त्र्यम्बकाय नमः ।
७३३. ॐ नागभूषणाय नमः ।
७३४. ॐ अन्धकारये नमः ।
७३५. ॐ मखद्वेषिणे नमः ।
७३६. ॐ विष्णुकन्धरपातनाय नमः ।
७३७. ॐ वीतदोषाय नमः ।
७३८. ॐ अक्षयगुणाय नमः ।
७३९. ॐ दक्षारये नमः ।
७४०. ॐ पूषदन्तहृते नमः ।
७४१. ॐ धूर्जटये नमः ।
७४२. ॐ खण्डपरशवे नमः ।
७४३. ॐ सकलाय नमः ।
७४४. ॐ निष्कलाय नमः ।
७४५. ॐ अनघाय नमः ।
७४६. ॐ आधाराय नमः ।
७४७. ॐ सकलाधाराय नमः ।
७४८. ॐ पाण्डुराभाय नमः ।
७४९. ॐ मृडाय नमः ।
७५०. ॐ नटाय नमः ।
७५१. ॐ पूर्णाय नमः ।
७५२. ॐ पूरयित्रे नमः ।
७५३. ॐ पुण्याय नमः ।
७५४. ॐ सुकुमाराय नमः ।
७५५. ॐ सुलोचनाय नमः ।

७५६. ॐ सामगेयाय नमः ।
७५७. ॐ प्रियकराय नमः ।
७५८. ॐ पुण्यकीर्तये नमः ।
७५९. ॐ अनामयाय नमः ।
७६०. ॐ मनोजवाय नमः ।
७६१. ॐ तीर्थकराय नमः ।
७६२. ॐ जटिलाय नमः ।
७६३. ॐ जीवितेश्वराय नमः ।
७६४. ॐ जीवितान्तकराय नमः ।
७६५. ॐ नित्याय नमः ।
७६६. ॐ वसुरेतसे नमः ।
७६७. ॐ वसुप्रियाय नमः ।
७६८. ॐ सद्गतये नमः ।
७६९. ॐ सत्कृतये नमः ।
७७०. ॐ सक्ताय नमः ।
७७१. ॐ कालकण्ठाय नमः ।
७७२. ॐ कलाधराय नमः ।
७७३. ॐ मानिने नमः ।
७७४. ॐ मान्याय नमः ।
७७५. ॐ महाकालाय नमः ।
७७६. ॐ सद्भूतये नमः ।
७७७. ॐ सत्परायणाय नमः ।
७७८. ॐ चन्द्रसञ्जीवनाय नमः ।
७७९. ॐ शास्त्रे लोकगूढाय नमः ।
७८०. ॐ अमराधिपाय नमः ।
७८१. ॐ लोकबन्धवे नमः ।
७८२. ॐ लोकनाथाय नमः ।
७८३. ॐ कृतज्ञाय कृतिभूषणाय नमः ।
७८४. ॐ अनपाय्यक्षराय नमः ।
७८५. ॐ कान्ताय नमः ।
७८६. ॐ सर्वशास्त्रभृतांवराय नमः ।
७८७. ॐ तेजोमयाय नमः ।
७८८. ॐ लोकमायाय नमः ।
७८९. ॐ अग्रण्ये नमः ।
७९०. ॐ अणवे नमः ।
७९१. ॐ शुचिस्मिताय नमः ।
७९२. ॐ प्रसन्नात्मने नमः ।
७९३. ॐ दुर्जयाय नमः ।
७९४. ॐ दुरतिक्रमाय नमः ।
७९५. ॐ ज्योतिर्मयाय नमः ।
७९६. ॐ निराकाराय नमः ।
७९७. ॐ जगन्नाथाय नमः ।
७९८. ॐ जलेश्वराय नमः ।
७९९. ॐ तुम्बवीणिने नमः ।
**८००. ॐ महाकायाय नमः ।**
८०१. ॐ विशोकाय नमः ।
८०२. ॐ शोकनाशनाय नमः ।
८०३. ॐ त्रिलोकात्मने नमः ।
८०४. ॐ त्रिलोकेशाय नमः ।
८०५. ॐ शुद्धाय नमः ।
८०६. ॐ शुद्धये नमः ।
८०७. ॐ रथाक्षजाय नमः ।

८०८ ॐ अव्यक्तलक्षणाय नमः ।
८०९. ॐ अव्यक्ताय नमः ।
८१०. ॐ व्यक्ताव्यक्ताय नमः ।
८११. ॐ विशांपत्ये नमः ।
८१२. ॐ वरशीलाय नमः ।
८१३. ॐ वरतुलाय नमः ।
८१४. ॐ मानाय नमः ।
८१५. ॐ मानधनाय मयाय नमः ।
८१६. ॐ ब्रह्मणे नमः ।
८१७. ॐ विष्णवे प्रजापालाय नमः ।
८१८. ॐ हंसाय नमः ।
८१९. ॐ हंसगतये नमः ।
८२०. ॐ यमाय नमः ।
८२१. ॐ वेधसे नमः ।
८२२. ॐ धात्रे नमः ।
८२३. ॐ विधात्रे नमः ।
८२४. ॐ अत्त्रे हर्त्रे नमः ।
८२५. ॐ चतुर्मुखाय नमः ।
८२६. ॐ कैलासशिखरावासिने नमः ।
८२७. ॐ सर्वावासिने नमः ।
८२८. ॐ सतां गतये नमः ।
८२९. ॐ हिरण्यगर्भाय नमः ।
८३०. ॐ हरिणाय नमः ।
८३१. ॐ पुरुषाय नमः ।
८३२. ॐ पूर्वजाय पित्रे नमः ।
८३३. ॐ भूतालयाय नमः ।
८३४. ॐ भूतपतये नमः ।
८३५. ॐ भूतिदाय नमः ।
८३६. ॐ भुवनेश्वराय नमः ।
८३७. ॐ संयोगिने नमः ।
८३८. ॐ योगविद्ब्रह्मणे नमः ।
८३९. ॐ ब्रह्मण्याय नमः ।
८४०. ॐ ब्राह्मणप्रियाय नमः ।
८४१. ॐ देवप्रियाय नमः ।
८४२. ॐ देवनाथाय नमः ।
८४३. ॐ देवज्ञाय नमः ।
८४४. ॐ देवचिन्तकाय नमः ।
८४५. ॐ विषमाक्षाय नमः ।
८४६. ॐ कलाध्यक्षाय नमः ।
८४७. ॐ वृषाङ्काय नमः ।
८४८. ॐ वृषवर्धनाय नमः ।
८४९. ॐ निर्मदाय निरहंकाराय नमः ।
८५०. ॐ निर्मोहाय नमः ।
८५१. ॐ निरुपद्रवाय नमः ।
८५२. ॐ दर्पघ्ने नमः ।
८५३. ॐ दर्पिताय नमः ।
८५४. ॐ दृप्ताय नमः ।
८५५. ॐ सर्वर्तुपरिवर्तकाय नमः ।
८५६. ॐ सप्तजिह्वाय नमः ।
८५७. ॐ सहस्रार्चिषे नमः ।
८५८. ॐ स्निग्धाय नमः ।

८५९. ॐ प्रकृतिदक्षिणाय नमः ।
८६०. ॐ भूतभव्यभवन्नाथाय नमः।
८६१. ॐ प्रभवाय नमः ।
८६२. ॐ भ्रान्तिनाशनाय नमः ।
८६३. ॐ अर्थाय नमः ।
८६४. ॐ अनर्थाय नमः ।
८६५. ॐ महाकोशाय नमः ।
८६६. ॐ परकार्यैकपण्डिताय नमः ।
८६७. ॐ निष्कण्टकाय नमः ।
८६८. ॐ कृतानन्दाय नमः ।
८६९. ॐ निर्व्याजाय नमः ।
८७०. ॐ व्याजमर्दनाय नमः ।
८७१. ॐ सत्त्ववते नमः ।
८७२. ॐ सात्त्विकाय नमः ।
८७३. ॐ सत्यकीर्तिस्तम्भकृतागमाय नमः ।
८७४. ॐ अकम्पिताय नमः ।
८७५. ॐ गुणग्राहिणे नमः ।
८७६. ॐ नैकात्मने नैककर्मकृते नमः ।
८७७. ॐ सुप्रीताय नमः ।
८७८. ॐ सुमुखाय नमः ।
८७९. ॐ सूक्ष्माय नमः ।
८८०. ॐ सुकराय नमः ।
८८१. ॐ दक्षिणाय नमः ।
८८२. ॐ अनलाय नमः ।
८८३. ॐ स्कन्धाय नमः ।
८८४. ॐ स्कन्धधराय नमः ।
८८५. ॐ धुर्याय नमः ।
८८६. ॐ प्रकटाय नमः ।
८८७. ॐ प्रीतिवर्धनाय नमः ।
८८८. ॐ अपराजिताय नमः ।
८८९. ॐ सर्वसहाय नमः ।
८९०. ॐ विदग्धाय नमः ।
८९१. ॐ सर्ववाहनाय नमः ।
८९२. ॐ अधृताय नमः ।
८९३. ॐ स्वधृताय नमः ।
८९४. ॐ साध्याय नमः ।
८९५. ॐ पूर्तमूर्तये नमः ।
८९६. ॐ यशोधराय नमः ।
८९७. ॐ वराहशृङ्गधृषे नमः ।
८९८. ॐ वायवे नमः ।
८९९. ॐ बलवते नमः ।
**९००. ॐ एकनायकाय नमः ।**
९०१. ॐ श्रुतिप्रकाशाय नमः ।
९०२. ॐ श्रुतिमते नमः ।
९०३. ॐ एकबन्धवे नमः ।
९०४. ॐ अनेकधृषे नमः ।
९०५. ॐ श्रीवल्लभशिवारंभाय नमः ।
९०६. ॐ शान्तभद्राय नमः ।
९०७. ॐ समञ्जसाय नमः ।
९०८. ॐ भूशयाय नमः ।

९०९. ॐ भूतिकृद्भूतये नमः ।
९१०. ॐ भूषणाय नमः ।
९११. ॐ भूतवाहनाय नमः ।
९१२. ॐ अकायाय नमः ।
९१३. ॐ भक्तकायस्थाय नमः ।
९१४. ॐ कालज्ञानिने नमः ।
९१५. ॐ कलावपुषे नमः ।
९१६. ॐ सत्यव्रतमहात्यागिने नमः ।
९१७. ॐ निष्ठाशान्तिपरायणाय नमः ।
९१८. ॐ परार्थवृत्तये नमः ।
९१९. ॐ वरदाय नमः ।
९२०. ॐ विविक्ताय नमः ।
९२१. ॐ श्रुतिसागराय नमः ।
९२२. ॐ अनिर्विण्णाय नमः ।
९२३. ॐ गुणग्राहिणे नमः ।
९२४. ॐ कलङ्काङ्काय नमः।
९२५. ॐ कलङ्कघ्ने नमः ।
९२६. ॐ स्वभावरुद्राय नमः ।
९२७. ॐ मध्यस्थाय नमः ।
९२८. ॐ शत्रुघ्नाय नमः ।
९२९. ॐ मध्यनाशकाय नमः ।
९३०. ॐ शिखण्डिने नमः ।
९३१. ॐ कवचिने नमः ।
९३२. ॐ शूलिने नमः ।
९३३. ॐ चण्डिने नमः ।
९३४. ॐ मुण्डिने नमः ।
९३५. ॐ कुण्डलिने नमः ।
९३६. ॐ मेखलिने नमः ।
९३७. ॐ कवचिने नमः ।
९३८. ॐ खड्गिने नमः ।
९३९. ॐ मायिने संसारसारथये नमः ।
९४०. ॐ अमृत्यवे सर्वदृशे नमः ।
९४१. ॐ सिंहाय नमः ।
९४२. ॐ तेजोराशये महामणये नमः ।
९४३. ॐ असंख्येयाय नमः ।
९४४. ॐ अप्रमेयात्मने नमः ।
९४५. ॐ वीर्यवते नमः ।
९४६. ॐ कार्यकोविदाय नमः ।
९४७. ॐ वेद्याय नमः ।
९४८. ॐ वेदार्थविद्गोप्त्रे नमः ।
९४९. ॐ सर्वाचाराय नमः ।
९५०. ॐ मुनीश्वराय नमः ।
९५१. ॐ अनुत्तमाय नमः ।
९५२. ॐ दुराधर्षाय नमः ।
९५३. ॐ मधुराय नमः ।
९५४. ॐ प्रियदर्शनाय नमः ।
९५५. ॐ सुरेशाय नमः ।
९५६. ॐ शरणाय नमः ।
९५७. ॐ सर्वस्मै नमः ।
९५८. ॐ शब्दब्रह्मसतां गतये नमः ।

९५९. ॐ कालभक्षाय नमः ।
९६०. ॐ कलङ्कारये नमः ।
९६१. ॐ कङ्कणीकृतवासुकये नमः ।
९६२. ॐ महेष्वासाय नमः ।
९६३. ॐ महीभर्त्रे नमः ।
९६४. ॐ निष्कलङ्काय नमः ।
९६५. ॐ विशृङ्खलाय नमः ।
९६६. ॐ द्युमणये तरणये नमः ।
९६७. ॐ धन्याय नमः ।
९६८. ॐ सिद्धिदाय नमः ।
९६९. ॐ सिद्धिसाधनाय नमः ।
९७०. ॐ निवृत्ताय नमः ।
९७१. ॐ संवृताय नमः ।
९७२. ॐ शिल्पाय नमः ।
९७३. ॐ व्यूढोरस्काय नमः ।
९७४. ॐ महाभुजाय नमः ।
९७५. ॐ एकज्योतिषे नमः ।
९७६. ॐ निरातङ्काय नमः ।
९७७. ॐ नराय नारायणप्रियाय नमः ।
९७८. ॐ निर्लेपाय नमः ।
९७९. ॐ निष्प्रपञ्चात्मने नमः ।
९८०. ॐ निर्व्यग्राय नमः ।
९८१. ॐ व्यग्रनाशनाय नमः ।
९८२. ॐ स्तव्यस्तवप्रियाय नमः ।
९८३. ॐ स्तोत्रे व्यासमूर्तये नमः ।
९८४. ॐ अनाकुलाय नमः ।
९८५. ॐ निरवद्यपदोपायाय नमः ।
९८६. ॐ विद्याराशये नमः ।
९८७. ॐ अविक्रमाय नमः ।
९८८. ॐ प्रशान्तबुद्धये अक्षुद्राय नमः ।
९८९. ॐ क्षुद्रघ्ने नमः ।
९९०. ॐ नित्यसुन्दराय नमः ।
९९१. ॐ धैर्याग्र्यधुर्याय नमः ।
९९२. ॐ धात्रीशाय नमः ।
९९३. ॐ शाकल्याय नमः ।
९९४. ॐ शर्वरीपतये नमः ।
९९५. ॐ परमार्थगुरवे दृष्टये नमः ।
९९६. ॐ गुरवे नमः ।
९९७. ॐ आश्रितवत्सलाय नमः ।
९९८. ॐ रसाय नमः ।
९९९. ॐ रसज्ञाय नमः ।
**१०००. ॐ सर्वज्ञाय नमः ।**
१००१. ॐ सर्वसत्त्वावलम्बनाय नमः ।

ॐ

पद्मपुराणान्तर्गतं वेदसाराख्यम्

# श्रीशिवसहस्रनामस्तोत्रम्

## व्यास उवाच

एकदा मुनयः सर्वे द्वारकां द्रष्टुमागताः ।
वासुदेवं च सोत्कण्ठाः कृष्णदर्शनलालसाः ॥ १॥

ततः स भगवान् प्रीतः पूजां चक्रे यथाविधि ।
तेषामाशीस्ततो गृह्य बहुमानपुरः सरम् ॥ २ ॥

तैः पृष्टः कथयामास कुमारप्रभवं च यत् ।
चरितं भूमिभारघ्नं लोकानन्दकरं परम् ॥ ३ ॥

मार्कण्डेयमुखाः सर्वे माध्याह्निकक्रियोत्थिताः ।
कृष्णः स्नानमथो चक्रे मृदक्षतकुशादिभिः ॥ ४ ॥

पीताम्बरं त्रिपुण्ड्रं च धृत्वा रुद्राक्षमालिकाम् ।
सूर्योपस्थानं संध्यां च स्मृतिधर्ममनुस्मरन् ॥ ५ ॥

शिवपूजां ततः कृष्णो गन्धपुष्पाक्षतादिभिः ।
चकार विधिवद्भक्त्या नमस्कारयुतां शुभाम् ॥ ६ ॥

जय शङ्कर सोमेश रक्ष रक्षेति चाऽब्रवीत् ।
जजाप शिवसाहस्रं भुक्तिमुक्तिप्रदं विभोः ।
अनन्यमानसः शान्तः पद्मासनगतः शुचिः ॥ ७ ॥

ततस्ते विस्मयापन्ना दृष्ट्वा कृष्णविचेष्टितम् ।
मार्कण्डयोऽवदत् कृष्णं बहुशो मुनिसम्मतम् ॥ ८ ॥

## मार्कण्डेय उवाच

त्वं कृष्णः कमलाकान्तः परमात्मा जगद्गुरुः ।
भवत्पूज्यः कथं शम्भुरेतत् सर्वं वदस्व मे ॥ ९ ॥

## व्यास उवाच

अथ ते मुनयः सर्वे मार्कण्डेयं समर्चयन् ।
वचोभिर्वासुदेवश्च पृष्टः साधु त्वयेति च ॥ १० ॥

## कृष्ण उवाच

साधु साधु मुने पृष्टं हिताय सकलस्य च ।
अज्ञातं तव नास्त्येव तथापि च वदाम्यहम् ॥ ११ ॥

दैवतं सर्वदेवानां सर्वकारणकारणम् ।
ज्योतिर्यत् परमानन्दं सावधानमतिः शृणु ॥ १२ ॥

विश्वसाधनमीशानं गुणातीतमजं परम् ।
जगतस्तस्थुषो ह्यात्मा मम मूलं महामुने ॥ १३ ॥

यो देवः सर्वदेवानां ध्येयः पूज्यः सदाशिवः ।
स शिवः स महादेवः शङ्करश्च निरञ्जनः ॥ १४ ॥

तस्मान्नाऽन्यः परो देवस्त्रिषु लोकेषु विद्यते ।
सर्वज्ञः सर्वगः शक्तः सर्वात्मा सर्वतोमुखः ॥ १५ ॥

पठ्यते सर्वसिद्धान्ते वेदान्ते यो मुनीश्वरैः ।
तस्मिन् भक्तिर्महादेवे मम धातुश्च निर्मला ॥ १६ ॥

महेशः परमं ब्रह्म शान्तः सूक्ष्मः परात्परः ।
सर्वान्तरः सर्वसाक्षी चिन्मयस्तमसः परः ॥ १७ ॥

निर्विकल्पो निराभासो निःसङ्गो निरुपद्रवः ।
निर्लेपः सकलाध्यक्षो महापुरुष ईश्वरः ॥ १८ ॥

तस्य चेच्छाऽभवत् पूर्वं जगत्स्थित्यन्तकारिणी ।
वामाङ्गादभवं तस्य सोऽहं विष्णुरिति स्मृतः ॥ १९ ॥

जनयामास धातारं दक्षिणाङ्गात् सदाशिवः ।
मध्यतो रुद्रमीशानं कालात्मा परमेश्वरः ।
तपस्तपन्तु भो वत्सा अब्रवीदिति तान् शिवः ॥ २० ॥
ततस्ते शिवमात्मानं प्रोचुः संयतमानसाः ।
स्तुत्वा तु विधिवत्स्तोत्रैः प्रणम्य च पुनः पुनः ॥ २१ ॥

**ब्रह्मविष्णुमहेश्वरा ऊचुः**

तपः केन प्रकारेण कर्तव्यं परमेश्वर ।
ब्रूहि सर्वमशेषेण स्वात्मानं वेत्सि नाऽपरः ॥ २२ ॥

**शिव उवाच**

कायेन मनसा वाचा ध्यानपूजाजपादिभिः ।
कामक्रोधादिरहितं तपः कुर्वन्तु भो सुराः ॥ २३ ॥

**देवा ऊचुः**

त्वया यत्कथितं शम्भो दुर्ज्ञेयमजितात्मभिः ।
सौम्योपायमतो ब्रह्मन् वद कारुण्यवारिधे ॥ २४ ॥

**शिव उवाच**

शृणुध्वं सर्वपापघ्नं भुक्तिमुक्तिप्रदं नृणाम् ।
सहस्रनामसद्विद्यां जपन्तु मम सुव्रताः ॥ २५ ॥

यया संसारमग्नानां मुक्तिर्भवति शाश्वती ।
शृण्वन्तु तद्विधानं तु महापातकनाशनम् ॥ २६ ॥

पठतां शृण्वतां सद्यो मुक्तिः स्यादनपायिनी ।
ब्रह्मचारी कृतस्नानः शुक्लवासा जितेन्द्रियः ॥ २७ ॥

भस्मधारी मुनिर्मौनी पद्मासनसमन्वितः ।
ध्यात्वा मां सकलाधीशं निराकारं निरीश्वरम् ॥ २८ ॥

पार्वतीसहितं शम्भुं जटामुकुटमण्डितम् ।
वसानं चर्म वैयाघ्रं चन्द्रार्धकृतशेखरम् ॥ २९ ॥

त्र्यम्बकं वृषभारूढं कृत्तिवाससमुज्ज्वलम् ।
सुरार्चितपदद्वन्द्वं दिव्यभोगं सुसुन्दरम् ॥ ३० ॥

बिभ्राणं सुप्रसन्नं च कुठारवरदाभयम् ।
दुरन्तं कमलासीनं नागयज्ञोपवीतिनम् ॥ ३१ ॥

विश्वकायं चिदानन्दं शुद्धमक्षरमव्ययम् ।
सहस्रशिरसं शम्भुमनन्तकरसंयुतम् ॥ ३२ ॥

सहस्रचरणं दिव्यं सोमसूर्याग्निलोचनम् ।
जगद्योनिमजं ब्रह्म शिवमाद्यं सनातनम् ॥ ३३ ॥

दंष्ट्राकरालं दुष्प्रेक्ष्यं सूर्यकोटिसमप्रभम् ।
निशाकरकराकारं भेषजं भवरोगिणाम् ॥ ३४ ॥

पिनाकिनं विशालाक्षं पशूनां पतिमीश्वरम् ।
कालात्मानं कालकालं देवदेवं महेश्वरम् ॥ ३५ ॥

ज्ञानवैराग्यसम्पन्नं योगानन्दमयं परम् ।
शाश्वतैश्वर्यसम्पूर्णं महायोगीश्वरेश्वरम् ॥ ३६ ॥

समस्तशक्तिसंयुक्तं पुण्यकायं दुरासदम् ।
तारकं ब्रह्मसम्पूर्णमणीयांसं महत्तरम् ॥ ३७ ॥

यतीनां परमं ब्रह्म व्रतिनां तपसः फलम् ।
संयमिहृत्समासीनं तपस्विजनसंवृतम् ॥ ३८ ॥

विधीन्द्रविष्णुनमितं मुनिसिद्धनिषेवितम् ।
महादेवं महानन्दं देवानामपि दैवतम् ॥ ३९ ॥

शान्तं पवित्रमोङ्कारं ज्योतिषां ज्योतिरुत्तमम् ।
इति ध्यात्वा शिवं चित्ते रक्षार्थं कवचं न्यसेत् ॥ ४० ॥

शङ्करो मे शिरः पातु ललाटं भाललोचनः ।
विश्वचक्षुर्दृशौ पातु रुद्रः पातु भ्रुवौ मम ॥ ४१ ॥

गण्डौ पातु महेशानः श्रुती रक्षतु पूर्वजः ।
कपोलौ मे महादेवः पातु नासां सदाशिवः ।
मुखं पातु हविर्भोक्ता ओष्ठौ पातु महेश्वरः ॥ ४२ ॥

दन्तान् रक्षतु देवेशस्तालु सोमकलाधरः ।
रसनां परमानन्दः पातु शंखं शिवाप्रियः ॥ ४३ ॥

चिबुकं पातु मे शम्भुः श्मश्रु शत्रुविनाशनः ।
कूर्चं पातु भवः कण्ठं नीलकण्ठोऽवतु ध्रुवम् ॥ ४४ ॥

स्कन्धौ स्कन्दपतिः पातु बाहू पातु महाभुजः ।
उपबाहू महावीर्यः करौ विबुधसत्तमः ॥ ४५ ॥

अङ्गुली पातु पञ्चास्यः पर्वाणि च सहस्रपात् ।
हृदयं पातु सर्वात्मा स्तनौ पातु पितामहः ॥ ४६ ॥

उदरं हुतभुक् पातु मध्यं पातु महेश्वरः ।
कुक्षिं पातु भवानीशः पृष्ठं पातु कुलेश्वरः ॥ ४७ ॥

प्राणान्मे प्राणदः पातु नाभिं भीमः कटिं विभुः ।
सक्थिनी पातु मे भर्गो जानुनी भुवनाधिपः ॥ ४८ ॥

जङ्घे पुररिपुः पातु चरणौ भवनाशनः ।
शरीरं पातु मे शर्वो बाह्यमाभ्यन्तरं शिवः॥ ४९ ॥

इन्द्रियाणि हरः पातु सर्वत्र जयवर्धनः ।
प्राच्यां दिशि मृडः पातु दक्षिणे यमसूदनः ॥ ५० ॥

वारुण्यां सलिलाधीश उदीच्यां मे महीधरः ।
ईशान्यां पातु भूतेश आग्नेय्यां रविलोचनः ॥ ५१ ॥

नैर्ऋत्यां भूतभृत् पातु वायव्यां बलवर्धनः ।
ऊर्ध्वं पातु मखद्वेषी ह्यधः संसारनाशनः ॥ ५२ ॥

सर्वतः सुखदः पातु बुद्धिं पातु सुलोचनः ।
एवं न्यासादिकं कृत्वा साक्षाच्छिवमयो भवेत् ॥ ५३ ॥

नमो हिरण्यबाहव इति पठेन्मन्त्रं तु भक्तिमान् ।
सद्योजातादिभिर्मन्त्रैर्नमस्कुर्यात् सदाशिवम् ॥ ५४ ॥

ततः सहस्रनामेदं पठितव्यं मुमुक्षुभिः ।
सर्वकार्यकरं पुण्यं महापातकनाशनम् ॥ ५५ ॥

सर्वगुह्यतमं दिव्यं सर्वलोकहितप्रदम् ।
मन्त्राणां परमो मन्त्रो भवदुःखषड्र्मिहृत् ॥ ५६ ॥

ॐ नमः शम्भवे चेति षड्भिर्मन्त्रैः षडङ्गन्यासः ।
ॐ अस्य श्री-परमदिव्यवेदसारशिवसहस्रनामस्तोत्रमन्त्रस्य श्री भगवान् नारायण ऋषिः । अनुष्टुप् छन्दः । परमात्मा

श्री महादेवो देवता । नम इति बीजम् । शिवायेति शक्तिः । चैतन्यमिति कीलकम् । श्री महादेवप्रीत्यर्थे वेदसारसहस्रनामजपे विनियोगः ।

ॐ नमः शम्भवे च अङ्गुष्ठाभ्यां नमः । ॐ मयोभवे च तर्जनीभ्यां नमः । ॐ नमः शङ्कराय च मध्यमाभ्यां नमः । ॐ मयस्कराय च अनामिकाभ्यां नमः । ॐ नमः शिवाय च कनिष्ठिकाभ्यां नमः । ॐ शिवतराय च करतलकरपृष्ठाभ्यां नमः ।

ॐ नमः शम्भवे च हृदयाय नमः । ॐ मयोभवे च शिरसे स्वाहा । ॐ नमः शङ्कराय च शिखायै वषट् । ॐ मयस्कराय च कवचाय हुम् । ॐ नमः शिवाय च नेत्रत्रयाय वौषट् । ॐ शिवतराय च अस्त्राय फट् ॥ भूर्भुवस्सुवरोमिति दिग्बन्धः।

## अथ ध्यानम्

कैलासाद्रिनिभं शशाङ्ककलया स्फूर्जज्जटामण्डलं

नासालोकनतत्परं त्रिनयनं वीरासनाध्यासितम् ।

मुद्राटङ्ककुरङ्गजानुविलसद्बाहुं प्रसन्नाननं

कक्ष्याबद्धभुजङ्गमं मुनिवृतं वन्दे महेशं परम् ॥ १ ॥

शुद्धस्फटिकसङ्काशं त्रिनेत्रं चेन्दुशेखरम्।

पञ्चवक्त्रं महाबाहुं दशबाहुसमन्वितम् ॥ २ ॥

भस्मोद्धूलित-सर्वाङ्गं नागाभरणभूषितम्।

परिपूर्णं परानन्दं परं ज्योतिः परात्परम् ॥ ३ ॥

पराशक्त्या श्रिया सार्धं परमानन्दविग्रहम्।

सूर्यकोटिप्रतीकाशं चन्द्रकोटिसुशीतलम्।

श्रीरुद्रं सच्चिदानन्दं ध्यायेत् सर्वात्मसिद्धये ॥ ४ ॥

# अथ स्तोत्रप्रारम्भः

ॐ नमः पराय देवाय शङ्कराय महात्मने ।
कामिने नीलकण्ठाय निर्मलाय कपर्दिने ॥ १ ॥

निर्विकल्पाय शान्ताय निरहङ्कारिणे नमः ।
अनर्घ्याय विशालाय शालहस्ताय ते नमः ॥ २ ॥

निरञ्जनाय शर्वाय श्रुताय च परात्मने ।
नमः शिवाय भर्गाय गुणातीताय वेधसे ॥ ३ ॥

महादेवाय पीताय पार्वतीपतये नमः ।
केवलाय महेशाय विशुद्धाय बुधात्मने ॥ ४ ॥

कैवल्याय सुदेशाय निःस्पृहाय स्वरूपिणे ।
नमः सोमविभूषाय कालायाऽमिततेजसे ॥ ५ ॥

अजिराय जगत्पित्रे जनकाय पिनाकिने ।
निराधाराय सिंहाय मायातीताय ते नमः ॥ ६ ॥

बीजाय सर्पभूषाय पशूनां पतये नमः ।
पुरन्दराय भद्राय पुरुषाय महीयसे ॥ ७ ॥

महासन्तोषरूपाय ज्ञानिने शुद्धबुद्धये ।
वृद्धरूपाय तपसे नमस्ते परमात्मने ॥ ८ ॥

पूर्वजाय सुरेशाय ब्रह्मणेऽनन्तमूर्तये ।
निरक्षराय सूक्ष्माय कैलासपतये नमः ॥ ९ ॥

निरामयाय कान्ताय निरातङ्काय ते नमः ।
निरालम्बाय विश्वाय नित्याय यतये नमः ॥ १० ॥

आत्मारामाय भव्याय पूज्याय परमेष्ठिने ।
विकर्तनाय सूर्म्याय शम्भवे विश्वरूपिणे ॥ ११ ॥

ताराय हंसनाथाय प्रतिसर्याय ते नमः ।
परावरेशरुद्राय भवायाऽलङ्घ्यशक्तये ॥ १२ ॥

इन्द्रध्वंसनिधीशाय कालहन्त्रे मनस्विने ।
विश्वमात्रे जगद्धात्रे जगन्नेत्रे नमो नमः ॥ १३ ॥

जटिलाय विरागाय पवित्राय मृडाय च ।
निरवद्याय पात्राय स्तेनानां पतये नमः ॥ १४ ॥

नादाय रविनेत्राय व्योमकेशाय ते नमः ।
चतुर्भोगाय साराय योगिनेऽनन्तमायिने ॥ १५ ॥

धर्मिष्ठाय वरिष्ठाय पुरत्रयविघातिने ।
गरिष्ठाय गिरीशाय वरदाय नमो नमः ।
व्याघ्रचर्माम्बरायाऽथ दिशावस्त्राय ते नमः ॥ १६ ॥

परमप्रेममन्त्राय प्रथमाय सुचक्षुषे ।
आद्याय शूलहस्ताय शितिकण्ठाय तेजसे ॥ १७ ॥

उग्राय वामदेवाय श्रीकण्ठाय च ते नमः ।
विश्वेश्वराय सूर्याय गौरीशाय वराय च ॥ १८ ॥

मृत्युञ्जयाय वीराय वीरभद्राय ते नमः ।
कामनाशाय गुरवे मुक्तिनाथाय ते नमः ॥ १९ ॥

विरूपाक्षाय सूताय वह्निनेत्राय ते नमः ।
जलन्धरशिरच्छेत्रे हविषे हितकारिणे ॥ २० ॥

महाकालाय वैद्याय संघृणेशाय ते नमः ।
नम ओङ्काररूपाय सोमनाथाय ते नमः ॥ २१ ॥

रामेश्वराय शुचये भौमेशाय नमो नमः ।
त्र्यम्बकाय निरीहाय केदाराय नमो नमः ॥ २२ ॥

गङ्गाधराय कवये नागनाथाय ते नमः ।
भस्मप्रियाय सूद्याय लक्ष्मीशाय नमो नमः ॥ २३ ॥

पूर्णाय भूतपतये सर्वज्ञाय दयालवे ।
धर्माय धनदेशाय गजचर्माम्बराय च ॥ २४ ॥

भालनेत्राय यज्ञाय श्रीशैलपतये नमः ।
कृशानुरेतसे नीललोहिताय नमो नमः ॥ २५ ॥

अन्धकासुरहन्त्रे च पावनाय बलाय च ।
चैतन्याय त्रिनेत्राय दक्षनाशकराय च ॥ २६ ॥

नमः सहस्रशिरसे जयरूपाय ते नमः ।
सहस्रचरणायाऽथ योगिहृत्कञ्जवासिने ॥ २७ ॥

सद्योजाताय वन्द्याय सर्वदेवमयाय च ।
आमोदाय प्रगल्भाय गायत्रीवल्लभाय च ॥ २८ ॥

व्योमाकाराय विप्राय नमो विप्रप्रियाय च ।
अघोराय सुवेषाय श्वेतरूपाय ते नमः ॥ २९ ॥

विद्वत्तमाय चित्राय विश्वग्रासाय नन्दिने ।
अधर्मशत्रुरूपाय दुन्दुभेर्मर्दनाय च ॥ ३० ॥

अजातशत्रवे तुभ्यं जगत्प्राणाय ते नमः।
नमो ब्रह्मशिरश्छेत्रे पञ्चवक्त्राय खड्गिने ॥ ३१ ॥

नमस्ते हरिकेशाय पञ्चवर्णाय वज्रिणे ।
नमः पञ्चाक्षरायाऽथ गोवर्धनधराय च ॥ ३२ ॥

प्रभवे सर्वलोकानां कालकूटविषादिने ।
सिद्धेश्वराय सिद्धाय सहस्रवदनाय च ॥ ३३ ॥

नमः सहस्रहस्ताय सहस्रनयनाय च ।
सहस्रमूर्तये तुभ्यं जिष्णवे जितशत्रवे ॥ ३४ ॥

काशीनाथाय गेह्याय नमस्ते विश्वसाक्षिणे ।
हेतवे सर्वजीवानां पालकाय नमो नमः ॥ ३५ ॥

जगत्संहारकाराय त्रिधावस्थाय ते नमः ।
एकादशस्वरूपाय नमस्ते वह्निमूर्तये ॥ ३६ ॥

नरसिंहमहादर्पघातिने शरभाय च ।
भस्माभ्यक्ताय तीर्थाय जाह्नवीजनकाय च ॥ ३७ ॥

देवदानवदैत्यानां गुरवे ते नमो नमः ।
दलिताञ्जनभासाय नमो वायुस्वरूपिणे ॥ ३८ ॥

स्वेच्छामन्त्रस्वरूपाय प्रसिद्धाय नमो नमः ।
वृषध्वजाय गोष्ठ्याय जगद्-यन्त्रप्रवर्तिने ॥ ३९ ॥

अनाथाय प्रदेशाय विष्णुगर्वहराय च ।
हरिविधातृकलहनाशकाय नमो नमः ॥ ४० ॥

नमस्ते दशहस्ताय गगनाय नमो नमः ।
कैवल्यफलदात्रे च परमाय नमो नमः ॥ ४१ ॥

ज्ञानगम्याय ज्ञानाय घण्टारवप्रियाय च ।
पद्मासनाय पुष्टाय निर्वाणाय नमो नमः ॥ ४२ ॥

अयोनये सुदेहाय ह्युत्तमाय नमो नमः ।
अन्तकालाधिपतये विशालाक्षाय ते नमः ॥ ४३ ॥

कुबेरबन्धवे तुभ्यं सोमाय सुखदायिने ।
अमृतेश्वररूपाय कौबेराय च धन्विने ॥ ४४ ॥

प्रियम्वदसमर्थाय वन्दिने विभवाय च ।
गिरीशाय गिरित्राय गिरिशन्ताय ते नमः ॥ ४५ ॥

पारिजाताय बृहते पञ्चयज्ञाय ते नमः ।
तरुणाय विशिष्टाय बालरूपधराय च ॥ ४६ ॥

जीवितेशाय तुष्टाय पुष्टानां पतये नमः ।
भवहेत्यै हिरण्याय कनिष्ठाय नमो नमः ॥ ४७ ॥

मध्यमाय विधात्रे च शूराय सुभगाय च ।
आदित्यतापनायाऽथ नमस्ते रुद्रमन्यवे ॥ ४८ ॥

महाह्रदाय ह्रस्वाय वामनाय नमो नमः ।
नमस्तत्पुरुषायाऽथ चतुर्हस्ताय मायिने ॥ ४९ ॥

नमो धूर्जटये तुभ्यं जगदीशाय ते नमः ।
जगन्नाथस्वरूपाय लीलाविग्रहरूपिणे ॥ ५० ॥

अनघाय नमस्तुभ्यममराय नमो नमः ।
अमृताय नमस्तुभ्यमच्छात्राय नमो नमः ॥ ५१ ॥

लोकाध्यक्ष नमस्तुभ्यमनादिनिधनाय च ।
व्यक्तेतराय व्यक्ताय नमस्ते परमाणवे ॥ ५२ ॥

लघुस्थूलस्वरूपाय नमः परशुधारिणे ।
नमः खट्वाङ्गहस्ताय नागहस्ताय ते नमः ॥ ५३ ॥

वरदाभयहस्ताय घण्टाहस्ताय ते नमः ।
घस्मराय नमस्तुभ्यमजिताय नमो नमः ॥ ५४ ॥

अणिमादिगुणेशाय पञ्चब्रह्ममयाय च ।
पुरातनाय शुद्धाय बलप्रमथनाय च ॥ ५५ ॥

पुण्योदयाय पद्माय विरक्ताय नमो नमः ।
उदराय विचित्राय विचित्रगतये नमः ॥ ५६ ॥

वाग्विशुद्धाय चितये निर्गुणाय नमो नमः ।
परमेशाय शेषाय नमः पद्मवराय च ॥ ५७ ॥

महेन्द्राय सुशीलाय करवीरप्रियाय च ।
महापराक्रमायाऽथ नमस्ते कालरूपिणे ॥ ५८ ॥

विष्टरश्रवसे लोकचूडारत्नाय ते नमः ।
साम्राज्यकल्पवृक्षाय करुणाय नटाय च ॥ ५९ ॥

अनर्घ्याय वरेण्याय वज्ररूपाय ते नमः ।
परमज्योतिषे पद्मगर्भाय सलिलाय च ॥ ६० ॥

तत्त्वाधिकाय सर्गाय नमो दीर्घाय स्रग्विणे ।
नमस्ते पाण्डराङ्गाय घोराय ब्रह्मरूपिणे ॥ ६१ ॥

निष्कलाय प्रपथ्याय सामगानप्रियाय च ।
नमो जयाय क्षेत्राय क्षेत्राणां पतये नमः ॥ ६२ ॥

कलाधराय पूताय पञ्चभूतात्मने नमः ।
अनिर्विण्णाय तथ्याय पापनाशकराय च ॥ ६३ ॥

विश्वतश्चक्षुषे तुभ्यं मन्त्रिणेऽनन्तरूपिणे ।
सिद्धसाधकरूपाय नमो मेदिनीरूपिणे ॥ ६४ ॥

अगण्याय प्रतापाय सुधाहस्ताय ते नमः ।
श्रीवल्लभाय ईध्र्याय मधुराय नमो नमः ॥ ६५ ॥

उपाधिरहितायाऽथ नमः सुकृतराशये ।
नमो मुनीश्वरायाऽथ शिवानन्दाय ते नमः ॥ ६६ ॥

रिपुघ्नाय नमस्तेजोराशयेऽनुत्तमाय च ।
चतुर्मूर्तिवपुःस्थाय नमो बुद्धीन्द्रियात्मने ॥ ६७ ॥

उपद्रवहरायाऽथ प्रियसंदर्शनाय च ।
भूतनाथाय मूलाय वीतरागाय ते नमः ॥ ६८ ॥

नैष्कर्म्याय विरूपाय षट्चक्राय विशुद्धये ।
कुलेशायाऽवनिभर्त्रे भुवनेशाय ते नमः ॥ ६९ ॥

हिरण्यबाहवे जीववरदाय नमो नमः ।
आदिदेवाय भाग्याय चन्द्रसञ्जीवनाय च ॥ ७० ॥

हराय बहुरूपाय प्रसन्नाय नमो नमः ।
आनन्दपूरितायाऽथ कूटस्थाय नमो नमः ॥ ७१ ॥

नमो मोक्षफलायाऽथ शाश्वताय विरागिणे ।
यज्ञभोक्त्रे सुषेणाय दक्षयज्ञविघातिने ॥ ७२ ॥

नमः सर्वात्मने तुभ्यं विश्वपालाय ते नमः ।
विश्वगर्भाय गर्भाय देवगर्भाय ते नमः ॥ ७३ ॥

संसारार्णवमग्नानां समुद्धरणहेतवे ।
मुनिप्रियाय खल्याय मूलप्रकृतये नमः ॥ ७४ ॥

समस्तसिद्धये तेजोमूर्तये ते नमो नमः ।
आश्रमस्थापकायाऽथ वर्णिने सुन्दराय च ॥ ७५ ॥

मृगबाणार्पणायाऽथ शारदावल्लभाय च ।
विचित्रमायिने तुभ्यमलङ्करिष्णवे नमः ॥ ७६ ॥

बहिर्मुखमहादर्पमथनाय नमो नमः ।
नमोऽष्टमूर्तये तुभ्यं निष्कलङ्काय ते नमः ॥ ७७ ॥

नमो हव्याय भोज्याय यज्ञनाथाय ते नमः ।
नमो मेध्याय मुख्याय विशिष्टाय नमो नमः॥ ७८ ॥

अम्बिकापतये तुभ्यं महादान्ताय ते नमः ।
सत्यप्रियाय सत्याय प्रियनित्याय ते नमः ॥ ७९ ॥

नित्यतृप्ताय वेदित्रे मृदुहस्ताय ते नमः ।
अर्धनारीश्वरायाऽथ कुठारायुधपाणये ॥ ८० ॥

वराहभेदिने तुभ्यं नमः कङ्कालधारिणे ।
महार्थाय सुसत्त्वाय कीर्तिस्तम्भाय ते नमः ॥ ८१ ॥

नमः कृतागमायाऽथ वेदान्तपठिताय च ।
अश्रोत्राय श्रुतिमते बहुश्रुतिधराय च ॥ ८२ ॥

अघ्राणाय नमस्तुभ्यं गन्धावघ्राणकारिणे ।
पादहीनाय वोढ्रे च सर्वत्रगतये नमः ॥ ८३ ॥

व्यक्षाय जननेत्राय नमस्तुभ्यं चिदात्मने ।
रसज्ञाय नमस्तुभ्यं रसनारहिताय च ॥ ८४ ॥

अमूर्तायाऽथ मूर्ताय सदसस्पतये नमः ।
जितेन्द्रियाय तथ्याय परंज्योतिःस्वरूपिणे ॥ ८५ ॥

नमस्ते सर्वमर्त्यानामादिकर्त्रे भुवन्तये ।
सर्गस्थितिविनाशानां कर्त्रे ते प्रेरकाय च ॥ ८६ ॥

नमोऽन्तर्यामिणे सर्वहृदिस्थाय नमो नमः ।
चक्रभ्रमणकर्त्रे ते पुराणाय नमो नमः ॥ ८७ ॥

वामदक्षिणहस्तोत्थलोकेश हरिशालिने ।
नमः सकलकल्याणदायिने प्रसवाय च ॥ ८८ ॥

स्वभावोदारधीराय सूत्रकाराय ते नमः ।
विषयार्णवमग्नानां समुद्धरणसेतवे ॥ ८९ ॥

अस्नेहस्नेहरूपाय वार्तातिक्रान्तवर्तिने ।
यत्र सर्वं यतः सर्वं सर्वं यत्र नमो नमः ॥ ९० ॥

नमो महार्णवायाऽथ भास्कराय नमो नमः ।
भक्तिगम्याय भक्तानां सुलभाय नमो नमः ॥ ९१ ॥

दुष्प्रधर्षाय दुष्टानां विजयाय विवेकिनाम् ।
अतर्किताय लोकाय सुलोकाय नमो नमः ॥ ९२ ॥

पूरयित्रे विशेषाय शुभाय च नमो नमः ।
नमः कर्पूरदेहाय सर्पहाराय ते नमः ॥ ९३ ॥

नमः संसारपाराय कमनीयाय ते नमः ।
वह्निदर्पविघाताय वायुदर्पविघातिने ॥ ९४ ॥

जरातिगाय वीर्याय नमस्ते विश्वव्यापिने ।
सूर्यकोटिप्रतीकाश निष्क्रियाय नमो नमः ॥ ९५ ॥

चन्द्रकोटिसुशीताय विमलाय नमो नमः ।
नमो गूढस्वरूपाय दिशां च पतये नमः ॥ ९६ ॥

नमः सत्यप्रतिज्ञाय समस्ताय समाधये ।
एकरूपाय शून्याय विश्वनाभिह्रदाय च ॥ ९७ ॥

सर्वोत्तमाय कूल्याय प्राणिनां सुहृदे नमः ।
अन्नानां पतये चाथ चिन्मात्राय नमो नमः ॥ ९८ ॥

ध्येयाय ध्यानगम्याय ध्यानरूपाय ते नमः ।
नमस्ते शाश्वतैश्वर्यविभवाय नमो नमः ॥ ९९ ॥

नमः प्राणेश्वरायाऽथ सर्वशक्तिधराय च ।
धर्माधाराय धन्याय पुष्कलाय नमो नमः ॥ १०० ॥

वरिष्ठाय धर्मगोप्त्रे निधानायाऽग्रजाय च ।
योगीश्वराय योगाय योगगम्याय ते नमः ॥ १०१ ॥

महेन्द्रोपेन्द्रचन्द्रार्कनमिताय नमो नमः ।
महर्षिवन्दितायाऽथ प्रकाशाय सुधर्मिणे ॥ १०२ ॥

नमो हिरण्यगर्भाय नमो हिरण्मयाय च ।
जगद्बीजाय हरये सेव्याय क्रतवे नमः ॥ १०३ ॥

आधिपत्याय कामाय यशसे ते प्रचेतसे ।
नमो ब्रह्ममयायाथ सकलाय नमो नमः ॥ १०४ ॥

नमस्ते रुक्मवर्णाय नमस्ते ब्रह्मयोनये ।
योगात्मने अभीताय दिव्यनृत्याय ते नमः ॥ १०५ ॥

जगतामेकबीजाय मायाबीजाय ते नमः ।
सर्वहृत्सन्निविष्टाय ब्रह्मचक्रभ्रमाय च ॥ १०६ ॥

ब्रह्मानन्दाय महते ब्रह्मण्याय नमो नमः ।
भूरिभारार्तिसंहर्त्रे विधिसारथये नमः ॥ १०७ ॥

हिरण्यगर्भपुत्राणां प्राणसंरक्षणाय च ।
दुर्वाससे षड्विकाररहिताय नमो नमः ॥ १०८ ॥

नमो देहार्धकान्ताय षडूर्मिरहिताय च ।
प्रकृत्यै भवनाशाय ताम्राय परमेष्ठिने ॥ १०९ ॥

अनन्तकोटिब्रह्माण्डनायकाय नमो नमः ।
एकाकिने निर्मलाय द्रविणाय दमाय च ॥ ११० ॥

नमस्त्रिलोचनायाऽथ शिपिविष्टाय बन्धवे ।
त्रिविष्टपेश्वरायाऽथ नमो व्याघ्रेश्वराय च ॥ १११ ॥

विश्वेश्वराय दात्रे ते नमश्चन्द्रेश्वराय च ।
व्यासेश्वराय युधिने यज्ञकेशाय ते नमः ॥ ११२ ॥

जैगीषव्येश्वरायाऽथ दिवोदासेश्वराय च ।
नागेश्वराय न्यायाय न्यायनिर्वाहकाय च ॥ ११३ ॥

शरण्याय सुपात्राय कालचक्रप्रवर्तिने ।
विचक्षणाय दंष्ट्राय वेदाश्वाय नमो नमः ॥ ११४ ॥

नीलजीमूतदेहाय परात्मज्योतिषे नमः ।
शरणागतपालाय महाबलपराय च ॥ ११५ ॥

सर्वपापहरायाऽथ महानादाय ते नमः ।
कृष्णस्य जयदात्रे ते बिल्वकेशाय ते नमः ॥ ११६ ॥

दिव्यभोगाय दूताय कोविदाय नमो नमः ।
कामपाशाय चित्राय चित्राङ्गाय नमो नमः ॥ ११७ ॥

नमो मातामहायाऽथ नमस्ते मातरिश्वने ।
निःसङ्गाय सुनेत्राय विद्येशाय जयाय च ॥ ११८ ॥

व्याजसंमर्दनायाऽथ मध्यस्थाय नमो नमः ।
अंगुष्ठशिरसा लङ्कानाथदर्पहराय च ॥ ११९ ॥

वैयाघ्रपुरवासाय नमः सर्वेश्वराय च ।
नमः परावरेशाय जगत्स्थावरमूर्तये ॥ १२० ॥

नमोऽप्यनुपमेशाय शार्ङ्गिणे विष्णुमूर्तये ।
नारायणाय रामाय सुदीप्ताय नमो नमः ॥ १२१ ॥

नमो ब्रह्माण्डमालाय गोधराय वरूथिने ।
नमः सोमाय कूप्याय नमः पातालवासिने ॥ १२२ ॥

नमस्ताराधिनाथाय वागीशाय नमो नमः ।
सदाचाराय गौराय स्वायुधाय नमो नमः ॥ १२३ ॥

संसारमोचकायाऽथ वर्णिने लिंगरूपिणे ।
सच्चिदानन्दरूपाय पापराशिहराय च ॥ १२४ ॥

अतर्क्यायाऽप्रमेयाय प्रमाणाय नमो नमः ।
कलिग्रासाय भक्तानां भुक्तिमुक्तिप्रदायिने ॥ १२५ ॥

गजारये विदेहाय त्रिलिंगरहिताय च ।
अचिन्त्यशक्तयेऽलंघ्यशासनायाच्युताय च ॥ १२६ ॥

नमो राजाधिराजाय चैतन्यविषयाय च ।
नमः शुद्धात्मने ब्रह्मज्योतिषे स्वस्तिदाय च ॥ १२७ ॥

मयोभुवे च दुर्ज्ञेयसामर्थ्याय च यज्वने ।
चक्रेश्वराय वै तुभ्यं नमो नक्षत्रमालिने ॥ १२८ ॥

अनर्थनाशनायाऽथ भस्मलेपकराय च ।
सदानन्दाय विदुषे सगुणाय विरोधिने ॥ १२९ ॥

दुर्गमाय शुभांगाय मृगव्याधाय ते नमः ।
प्रियाय धर्मधाम्ने ते प्रयोगाय विभागिने ॥ १३० ॥

नाद्यायाऽमृतपानाय सोमपाय तपस्विने ।
नमो विचित्रवेषाय पुष्टिसंवर्धनाय च ॥ १३१ ॥

चिरन्तनाय धनुषे वृक्षाणां पतये नमः ।
निर्मायायाऽग्रगण्याय व्योमातीताय ते नमः ॥ १३२ ॥

संवत्सराय लोप्याय स्थानदाय स्थविष्णवे ।
व्यवसायफलान्ताय महाकर्तृप्रियाय च ॥ १३३ ॥

गुणत्रयस्वरूपाय नमः सिद्धस्वरूपिणे ।
स्वरूपरूपरूपाय स्वेच्छाय पुरुषाय च ॥ १३४ ॥

कालात्पराय वेद्याय नमो ब्रह्माण्डरूपिणे ।
अनित्यनित्यरूपाय तदन्तर्वर्तिने नमः ॥ १३५ ॥

नमस्तीर्थ्याय कूल्याय पूर्णाय बटवे नमः ।
पञ्चतन्मात्ररूपाय पञ्चकर्मेन्द्रियात्मने ।
विशृङ्खलाय दर्पाय नमस्ते विषयात्मने ॥ १३६ ॥

अनवद्याय शास्त्राय स्वतन्त्रायाऽमृताय च ।
नमः प्रौढाय प्रज्ञाय योगारूढाय ते नमः ॥ १३७ ॥

मन्त्रज्ञाय प्रगल्भाय प्रदीपविमलाय च ।
विश्वावासाय दक्षाय वेदनिःश्वसिताय च ॥ १३८ ॥

यज्ञाङ्गाय सुवीराय नागचूडाय ते नमः ।
व्याघ्राय बाणहस्ताय स्कन्दाय दक्षिणे नमः ॥ १३९ ॥

क्षेत्रज्ञाय रहस्याय स्वस्थानाय वरीयसे ।
गहनाय विरामाय सिद्धान्ताय नमो नमः ॥ १४० ॥

महीधराय गृह्याय वटवृक्षाय ते नमः ।
ज्ञानदीपाय दुर्गाय सिद्धान्तैर्निश्चिताय च ।
श्रीमते मुक्तिबीजाय कुशलाय विवासिने ॥ १४१ ॥

प्रेरक्षाय विशोकाय हविर्धानाय ते नमः ।
गम्भीराय सहायाय भोजनाय सुभोगिने ॥ १४२ ॥

महायज्ञाय तीक्ष्णाय नमस्ते भूतचारिणे ।
नमः प्रतिष्ठितायाथ महोत्साहाय ते नमः ॥ १४३ ॥

परमार्थाय शिशवे प्रांशवे च कपालिने ।
सहजाय गृहस्थाय सन्ध्यानाथाय विष्णवे। ॥ १४४ ॥

सद्भिः संपूजितायाथ वितलासुरघातिने ।
जनाधिपाय योग्याय कामेशाय किरीटिने ॥ १४५ ॥

अमोघविक्रमायाथ नग्नाय दलघातिने ।
संग्रामाय नरेशाय नमस्ते शुचिभस्मने ।
भूतिप्रियाय भूम्ने ते सेनाय चतुराय च ॥ १४६ ॥

मनुष्यबाह्यगतये कृतज्ञाय शिखण्डिने ।
निर्लेपाय जटार्द्राय महाकालाय मेरवे ॥ १४७ ॥

नमो विरूपरूपाय शक्तिगम्याय ते नमः ।
नमः सर्वाय सदसत्सत्याय सुव्रताय च ॥ १४८ ॥

नमो भक्तप्रियायाऽथ श्वेतरक्षापराय च ।
सुकुमारमहापापहराय रथिने नमः ॥ १४९ ॥

नमस्ते धर्मराजाय धनाध्यक्षाय सिद्धये ।
महाभूताय कल्पाय कल्पनारहिताय च ॥ १५० ॥

ख्याताय जितविश्वाय गोकर्णाय सुचारवे ।
श्रोत्रियाय वदान्याय दुर्लभाय कुटुम्बिने ॥ १५१ ॥

विरजाय सुगन्धाय नमो विश्वम्भराय च ।
भवातीताय तिष्याय नमस्ते सामगाय च ॥ १५२ ॥

अद्वैताय द्वितीयाय कल्पराजाय भोगिने ।
चिन्मयाय नमः शुक्लज्योतिषे क्षेत्रगाय च ॥ १५३ ॥

सर्वभोगसमृद्धाय साम्परायाय ते नमः ।
नमस्ते स्वप्रकाशाय स्वच्छन्दाय सुतन्तवे ॥ १५४ ॥

सर्वज्ञमूर्तये तुभ्यं गुह्येशाय सुशान्तये ।
शारदाय सुशीलाय कौशिकाय धनाय च ॥ १५५ ॥

अभिरामाय तत्त्वाय व्यालकल्पाय ते नमः ।
अरिष्टमथनायाऽथ सुप्रतीकाय ते नमः ॥ १५६ ॥

आशवे ब्रह्मगर्भाय वरुणायाऽद्रये नमः ।
नमः कालाग्निरुद्राय श्यामाय सुजनाय च ॥ १५७ ॥

अहिर्बुध्न्याय जाराय दुष्टानां पतये नमः ।
नमः समयनाथाय समयाय गुहाय च ॥ १५८ ॥

दुर्लङ्घ्याय नमस्तुभ्यं छन्दःसाराय दंष्ट्रिणे ।
ज्योतिर्लिङ्गाय मित्राय जगतां हितकारिणे ॥ १५९ ॥

नमः कारुण्यनिधये श्लोकाय जयशालिने ।
ज्ञानोदयाय बीजाय जगद्विभ्रमहेतवे ॥ १६० ॥

अवधूताय शिष्टाय छन्दसां पतये नमः ।
नमः फेन्याय गुह्याय सर्वगन्धविमोचिने ॥ १६१ ॥

उदारकीर्तये शश्वत्प्रसन्नवदनाय च ।
वसवे वेदकाराय नमो भ्राजिष्णुजिष्णवे ॥ १६२ ॥

चक्रिणे देवदेवाय गदाहस्ताय पुत्रिणे ।
पारिजातसुपुष्पाय गणाधिपतये नमः ॥ १६३ ॥

सर्वशाखाधिपतये प्रजनेशाय ते नमः ।
सूक्ष्मप्रमाणभूताय सुरपार्श्वगताय च ॥ १६४ ॥

अशरीरशरीराय अपगल्भाय ते नमः ।
सुकेशाय सुपुष्पाय श्रुतये पुष्पमालिने ॥ १६५ ॥

मुनिध्येयाय मुनये बीजसंस्थमरीचये ।
चामुण्डाजनकायाऽथ नमस्ते कृत्तिवाससे ॥ १६६ ॥

व्युप्तकेशाय योग्याय धर्मपीठाय ते नमः ।
महावीर्याय दीप्ताय बुद्धायाऽशनये नमः ॥ १६७ ॥

विशिष्टेष्टाय सेनान्ये द्विपदे कारणाय च ।
कारणाय भगवते बाणदर्पहराय च ॥ १६८ ॥

अतीन्द्रियाय रम्याय जनानन्दकराय च ।
सदाशिवाय सौम्याय चिन्त्याय शशिमौलिने ॥ १६९ ॥

नमस्ते जातुकर्णाय सूर्याध्यक्षाय ते नमः ।
ज्योतिषे कुण्डलीशस्य वरदायाऽभयाय च ॥ १७० ॥

वसन्ताय सुरभये जयारिमथनाय च ।
प्रेम्णे पुरञ्जयायाऽथ पृषदश्वाय ते नमः ॥ १७१ ॥

रोचिष्णवेऽसुरजिते श्वेतपीताय ते नमः ।
नमस्ते चञ्चरीकाय तमिस्रमथनाय च ॥ १७२ ॥

प्रमाथिने निदाघाय चित्रगर्भाय ते नमः ।
शिवालयाय स्तुत्याय तीर्थदेवाय ते नमः ॥ १७३ ॥

पत्तीनां पतये तुभ्यं विचित्रशक्तये नमः ।
नमो निस्तुलरूपाय सवित्रे तपसे नमः ॥ १७४ ॥

अहंकारस्वरूपाय मेघाधिपतये नमः ।
अपाराय तत्त्वविदे क्षयद्वीराय ते नमः ॥ १७५ ॥

पञ्चास्यायाऽग्रगण्याय विष्णुप्राणेश्वराय च ॥ १७६ ॥

अगोचराय याम्याय क्षेम्याय बडवाग्नये ।
विक्रमाय स्वतन्त्राय स्वतन्त्रगतये नमः ॥ १७७ ॥

वनानां पतये तुभ्यं नमस्ते जमदग्नये ।
अनावृताय मुक्ताय मातृकापतये नमः ।
नमस्ते बीजकोशाय दिव्यानन्दाय ते नमः ॥ १७८ ॥

नमस्ते विश्वदेवाय शान्तरागाय ते नमः ।
विलोचनसुदेवाय हेमगर्भाय ते नमः ॥ १७९ ॥

अनाद्यन्ताय चण्डाय मनोनाथाय ते नमः ।
ज्ञानस्कन्दाय तुष्टाय कपिलाय महर्षये ॥ १८० ॥

नमस्त्रिकाग्निकालाय देवसिंहाय ते नमः ।
नमस्ते मणिपूराय चतुर्वेदाय ते नमः ॥ १८१ ॥

स्वरूपाणां स्वभावाय ह्यन्तर्यागाय ते नमः ।
नमः श्लोकाय वन्याय महाधर्माय ते नमः ॥ १८२ ॥

प्रसन्नाय नमस्तुभ्यं सर्वात्मज्योतिषे नमः ।
स्वयंभुवेऽध्वातीताय यक्षराक्षसमन्महे ॥ १८३ ॥

## श्रीसदाशिव उवाच

जपन्तु मामिकां देवा नाम्नां दशशतीमिमाम् ।
मम चातिप्रियकरीं महामोक्षप्रदायिनीम् ॥ १८४ ॥

संग्रामे जयदात्रीं च सर्वसिद्धिमयीं शुभाम् ।
यः पठेच्छृणुयाद् वापि सर्वपापैः प्रमुच्यते ॥ १८५ ॥

पुत्रकामो लभेत् पुत्रं राज्यकामस्तु राजताम् ।
प्राप्नुयात्परया भक्त्या धनधान्यादिकं बहु ॥ १८६ ॥

शिवालये नदीतीरे ऽश्वत्थमूले विशेषतः ।
प्रजपेत् सिद्धिदां देवाः शुचौ देशे शमीतले ॥ १८७ ॥

धनकामस्तु जुहुयात् घृताक्तैर्बिल्वपत्रकैः ।
मोक्षकामस्तु गव्येन घृतेन प्रतिनामतः ॥ १८८ ॥

पुत्रकामस्तु जुहुयात्तिलाक्तेन तथान्धसा ।
आयुष्कामस्तु जुहुयादाज्येन मधुना तथा ॥ १८९ ॥

मत्समीपे प्रदोषे च नत्वा भक्त्या जपेन्नरः ।
जीवन्स्वरूपतां प्रेत्य सायुज्यं समवाप्नुयात् ॥ १९० ॥

कालो ऽपि जनशास्ता हि मम भक्तं न पश्यति ।
अहं पुरस्सरस्तस्य नेष्यामि गमनस्थलम् ॥ १९१ ॥

त्रिसन्ध्यं प्रजपेद् भक्त्या वत्सरं नियमान्वितः ।
मच्चित्तो मन्मना भूत्वा साक्षान्मोक्षमवाप्नुयात् ॥ १९२ ॥

रुद्रपाठेन यत्पुण्यं यत्पुण्यं वेदपाठतः ।
तत्पुण्यं प्राप्यते पुम्भिरेकावृत्या पठेदिमाम् ॥ १९३ ॥

कन्याकोटिप्रदानस्य यत्फलं लभते नरः ।
तत्फलं लभते सम्यङ्नाम्नां दशशतं जपन् ॥ १९४ ॥

अश्वमेधसहस्रस्य यत्फलं लभते नरः ।
कपिलाशतदानस्य तत्फलं पठनाद् भवेत् ॥ १९५ ॥

यः शृणोति सदा विद्यां श्रावयेद् वापि भक्तितः ।
सोऽपि मुक्तिमवाप्नोति यत्र गत्वा न शोचति ॥ १९६ ॥

यक्षराक्षसवेतालग्रहकूष्माण्डभैरवाः ।
पठनादस्य नश्यन्ति जीवेच्च शरदां शतम् ॥ १९७ ॥

ब्रह्महत्यादिपापानां नाशः स्यात् श्रवणेन च ।
किं पुनः पठनादस्य मुक्तिः स्यादनपायिनी ॥ १९८ ॥
इत्युक्तः स महादेवो भगवान् परमेश्वरः ।
पुनरप्याह भगवान् कृपया परया युतः ॥ १९९ ॥

दीयतामात्मभक्तेभ्यो यदुक्तं भवघातकम् ।
इत्युक्त्वान्तर्दधे देवः परमानन्दरूपधृक् ॥ २०० ॥ इति।

**॥ इति श्रीपद्मपुराणान्तर्गतं वेदसाराख्यं**
**श्रीशिवसहस्रनामस्तोत्रं सम्पूर्णम् ॥**

## ॥ अथ नामावलिः ॥

१. ॐ परदेवाय नमः।
२. ॐ शंकराय नमः।
३. ॐ महात्मने नमः।
४. ॐ कामिने नमः।
५. ॐ नीलकण्ठाय नमः।
६. ॐ निर्मलाय नमः।
७. ॐ कपर्दिने नमः।
८. ॐ निर्विकल्पाय नमः।
९. ॐ शान्ताय नमः।
१०. ॐ निरहंकारिणे नमः।
११. ॐ अनर्घ्याय नमः।
१२. ॐ विशालाय नमः।
१३. ॐ शालहस्ताय नमः।
१४. ॐ निरञ्जनाय नमः।
१५. ॐ शर्वाय नमः।
१६. ॐ श्रुताय नमः।
१७. ॐ परात्मने नमः।
१८. ॐ शिवाय नमः।
१९. ॐ भर्गाय नमः।
२०. ॐ गुणातीताय नमः।
२१. ॐ वेधसे नमः।
२२. ॐ महादेवाय नमः।
२३. ॐ पीताय नमः।
२४. ॐ पार्वतीपतये नमः।
२५. ॐ केवलाय नमः।
२६. ॐ महेशाय नमः।
२७. ॐ विशुद्धाय नमः।
२८. ॐ बुधात्मने नमः।
२९. ॐ कैवल्याय नमः।
३०. ॐ सुदेशाय नमः।
३१. ॐ निःस्पृहस्वरूपिणे नमः।
३२. ॐ सोमविभूषाय नमः।
३३. ॐ कालाय नमः।
३४. ॐ अमिततेजसे नमः।
३५. ॐ अजिराय नमः।
३६. ॐ जगत्पित्रे नमः।
३७. ॐ जनकाय नमः।
३८. ॐ पिनाकिने नमः।
३९. ॐ निराधाराय नमः।
४०. ॐ सिंहाय नमः।
४१. ॐ मायातीताय नमः।
४२. ॐ बीजाय नमः।
४३. ॐ सर्पभूषाय नमः।
४४. ॐ पशूनां पतये नमः।
४५. ॐ पुरन्दराय नमः।
४६. ॐ भद्राय नमः।

४७. ॐ पुरुषाय नमः।
४८. ॐ महीयसे नमः।
४९. ॐ महासन्तोषरूपाय नमः।
५०. ॐ ज्ञानिने नमः।
५१. ॐ शुद्धबुद्धये नमः।
५२. ॐ वृद्धरूपाय नमः।
५३. ॐ तपसे नमः।
५४. ॐ परमात्मने नमः।
५५. ॐ पूर्वजाय नमः।
५६. ॐ सुरेशाय नमः।
५७. ॐ ब्रह्मणे नमः।
५८. ॐ अनन्तमूर्तये नमः।
५९. ॐ निरक्षराय नमः।
६०. ॐ सूक्ष्माय नमः।
६१. ॐ कैलासपतये नमः।
६२. ॐ निरामयाय नमः।
६३. ॐ कान्ताय नमः।
६४. ॐ निरातङ्काय नमः।
६५. ॐ निरालम्बाय नमः।
६६. ॐ विश्वाय नमः।
६७. ॐ नित्ययतये नमः।
६८. ॐ आत्मारामाय नमः।
६९. ॐ भव्याय नमः।
७०. ॐ पूज्याय नमः।
७१. ॐ परमेष्ठिने नमः।
७२. ॐ विकर्तनाय नमः।
७३. ॐ सूर्म्याय नमः।
७४. ॐ शम्भवे नमः।
७५. ॐ विश्वरूपिणे नमः।
७६. ॐ ताराय नमः।
७७. ॐ हंसनाथाय नमः।
७८. ॐ प्रतिसर्याय नमः।
७९. ॐ परावरेशरुद्राय नमः।
८०. ॐ भवाय नमः।
८१. ॐ अलङ्घ्यशक्तये नमः।
८२. ॐ इन्द्रध्वंसनिधीशाय नमः।
८३. ॐ कालहन्त्रे नमः।
८४. ॐ मनस्विने नमः।
८५. ॐ विश्वमात्रे नमः।
८६. ॐ जगद्धात्रे नमः।
८७. ॐ जगन्नेत्रे नमः।
८८. ॐ जटिलाय नमः।
८९. ॐ विरागाय नमः।
९०. ॐ पवित्राय नमः।
९१. ॐ मृडाय नमः।
९२. ॐ निरवद्याय नमः।
९३. ॐ पात्राय नमः।
९४. ॐ स्तेनानां पतये नमः।

९५. ॐ नादाय नमः।
९६. ॐ रविनेत्राय नमः।
९७. ॐ व्योमकेशाय नमः।
९८. ॐ चतुर्भोगाय नमः।
९९. ॐ साराय नमः।
**१००. ॐ योगिने नमः।**
१०१. ॐ अनन्तमायिने नमः।
१०२. ॐ धर्मिष्ठाय नमः।
१०३. ॐ वरिष्ठाय नमः।
१०४. ॐ पुरत्रयविघातिने नमः।
१०५. ॐ गरिष्ठाय नमः।
१०६. ॐ गिरीशाय नमः।
१०७. ॐ वरदाय नमः।
१०८. ॐ व्याघ्रचर्माम्बराय नमः।
१०९. ॐ दिशावस्त्राय नमः।
११०. ॐ परमप्रेममन्त्राय नमः।
१११. ॐ प्रथमाय नमः।
११२. ॐ सुचक्षुषे नमः।
११३. ॐ आद्याय नमः।
११४. ॐ शूलहस्ताय नमः।
११५. ॐ शितिकण्ठाय नमः।
११६. ॐ उग्राय नमः।
११७. ॐ वामदेवाय नमः।
११८. ॐ श्रीकण्ठाय नमः।
११९. ॐ विश्वेश्वराय नमः।
१२०. ॐ सूर्याय नमः।
१२१. ॐ गौरीशाय नमः।
१२२. ॐ वराय नमः।
१२३. ॐ मृत्युञ्जयाय नमः।
१२४. ॐ वीराय नमः।
१२५. ॐ वीरभद्राय नमः।
१२६. ॐ कामनाशाय नमः।
१२७. ॐ गुरवे नमः।
१२८. ॐ मुक्तिनाथाय नमः।
१२९. ॐ विरूपाक्षाय नमः।
१३०. ॐ सूताय नमः।
१३१. ॐ वह्निनेत्राय नमः।
१३२. ॐ जलन्धरशिरश्छेत्रे नमः।
१३३. ॐ हविषे नमः।
१३४. ॐ हितकारिणे नमः।
१३५. ॐ महाकालाय नमः।
१३६. ॐ वैद्याय नमः।
१३७. ॐ संघृणेशाय नमः।
१३८. ॐ ॐकाररूपाय नमः।
१३९. ॐ सोमनाथाय नमः।
१४०. ॐ रामेश्वराय नमः।
१४१. ॐ शुचये नमः।
१४२. ॐ भौमेशाय नमः।

१४३. ॐ त्र्यम्बकाय नमः।
१४४. ॐ निरीहाय नमः।
१४५. ॐ केदाराय नमः।
१४६. ॐ गङ्गाधराय नमः।
१४७. ॐ कवये नमः।
१४८. ॐ नागनाथाय नमः।
१४९. ॐ भस्मप्रियाय नमः।
१५०. ॐ सूद्याय नमः।
१५१. ॐ लक्ष्मीशाय नमः।
१५२. ॐ पूर्णाय नमः।
१५३. ॐ भूतपतये नमः।
१५४. ॐ सर्वज्ञाय नमः।
१५५. ॐ दयालवे नमः।
१५६. ॐ धर्माय नमः।
१५७. ॐ धनदेशाय नमः।
१५८. ॐ गजचर्माम्बराय नमः।
१५९. ॐ भालनेत्राय नमः।
१६०. ॐ यज्ञाय नमः।
१६१. ॐ श्रीशैलपतये नमः।
१६२. ॐ कृशानुरेतसे नमः।
१६३. ॐ नीललोहिताय नमः।
१६४. ॐ अन्धकासुरहन्त्रे नमः।
१६५. ॐ पावनाय नमः।
१६६. ॐ बलाय नमः।
१६७. ॐ चैतन्याय नमः।
१६८. ॐ त्रिनेत्राय नमः।
१६९. ॐ दक्षनाशकराय नमः।
१७०. ॐ सहस्रशिरसे नमः।
१७१. ॐ जयरूपाय नमः।
१७२. ॐ सहस्रचरणाय नमः।
१७३. ॐ योगिहृत्कञ्जवासिने नमः।
१७४. ॐ सद्योजाताय नमः।
१७५. ॐ वन्द्याय नमः।
१७६. ॐ सर्वदेवमयाय नमः।
१७७. ॐ आमोदाय नमः।
१७८. ॐ प्रगल्भाय नमः।
१७९. ॐ गायत्रीवल्लभाय नमः।
१८०. ॐ व्योमाकाराय नमः।
१८१. ॐ विप्राय नमः।
१८२. ॐ विप्रप्रियाय नमः।
१८३. ॐ अघोराय नमः।
१८४. ॐ सुवेषाय नमः।
१८५. ॐ श्वेतरूपाय नमः।
१८६. ॐ विद्वत्तमाय नमः।
१८७. ॐ चित्राय नमः।
१८८. ॐ विश्वग्रासाय नमः।
१८९. ॐ नन्दिने नमः।
१९०. ॐ अधर्मशत्रुरूपाय नमः।

१९१.ॐ दुन्दुभेर्मर्दनाय नमः।
१९२.ॐ अजातशत्रवे नमः।
१९३.ॐ जगत्प्राणाय नमः।
१९४.ॐ ब्रह्मशिरश्छेत्रे नमः।
१९५.ॐ पञ्चवक्त्राय नमः।
१९६.ॐ खड्गिने नमः।
१९७.ॐ हरिकेशाय नमः।
१९८.ॐ पञ्चवर्णाय नमः।
१९९.ॐ वज्रिणे नमः।
**२००. ॐ पञ्चाक्षराय नमः।**
२०१.ॐ गोवर्धनधराय नमः।
२०२.ॐ सर्वलोकानां प्रभवे नमः।
२०३.ॐ कालकूटविषादिने नमः।
२०४.ॐ सिद्धेश्वराय नमः।
२०५.ॐ सिद्धाय नमः।
२०६.ॐ सहस्रवदनाय नमः।
२०७.ॐ सहस्रहस्ताय नमः।
२०८.ॐ सहस्रनयनाय नमः।
२०९.ॐ सहस्रमूर्तये नमः।
२१०.ॐ जिष्णवे नमः।
२११.ॐ जितशत्रवे नमः।
२१२.ॐ काशीनाथाय नमः।
२१३.ॐ गेह्याय नमः।
२१४.ॐ विश्वसाक्षिणे नमः।
२१५.ॐ हेतवे नमः।
२१६.ॐ सर्वजीवानां पालकाय नमः।
२१७.ॐ जगत्संहारकाराय नमः।
२१८.ॐ त्रिधावस्थाय नमः।
२१९.ॐ एकादशस्वरूपाय नमः।
२२०.ॐ वह्निमूर्तये नमः।
२२१.ॐ नरसिंहमहादर्पघातिने नमः।
२२२.ॐ शरभाय नमः।
२२३.ॐ भस्माभ्यक्ताय नमः।
२२४.ॐ तीर्थाय नमः।
२२५.ॐ जाह्नवीजनकाय नमः।
२२६.ॐ देवदानवदैत्यानां गुरवे नमः।
२२७.ॐ दलिताञ्जनभासाय नमः।
२२८.ॐ वायुस्वरूपिणे नमः।
२२९.ॐ स्वेच्छामन्त्रस्वरूपाय नमः।
२३०.ॐ प्रसिद्धाय नमः।
२३१.ॐ वृषध्वजाय नमः।
२३२.ॐ गोष्ठ्याय नमः।
२३३.ॐ जगद्-यन्त्रप्रवर्तिने नमः।
२३४.ॐ अनाथाय नमः।
२३५.ॐ प्रदेशाय नमः।

२३६. ॐ विष्णुगर्वहराय नमः।
२३७. ॐ हरिविधातृकलहनाशकाय नमः।
२३८. ॐ दशहस्ताय नमः।
२३९. ॐ गगनाय नमः।
२४०. ॐ कैवल्यफलदात्रे नमः।
२४१. ॐ परमाय नमः।
२४२. ॐ ज्ञानगम्याय नमः।
२४३. ॐ ज्ञानाय नमः।
२४४. ॐ घण्टारवप्रियाय नमः।
२४५. ॐ पद्मासनाय नमः।
२४६. ॐ पुष्टाय नमः।
२४७. ॐ निर्वाणाय नमः।
२४८. ॐ अयोनये नमः।
२४९. ॐ सुदेहाय नमः।
२५०. ॐ उत्तमाय नमः।
२५१. ॐ अन्तकालाधिपतये नमः।
२५२. ॐ विशालाक्षाय नमः।
२५३. ॐ कुबेरबन्धवे नमः।
२५४. ॐ सोमाय नमः।
२५५. ॐ सुखदायिने नमः।
२५६. ॐ अमृतेश्वररूपाय नमः।
२५७. ॐ कौबेराय नमः।
२५८. ॐ धन्विने नमः।
२५९. ॐ प्रियंवदसमर्थाय नमः।
२६०. ॐ वन्दिने नमः।
२६१. ॐ विभवाय नमः।
२६२. ॐ गिरीशाय नमः।
२६३. ॐ गिरित्राय नमः।
२६४. ॐ गिरिशन्ताय नमः।
२६५. ॐ पारिजाताय नमः।
२६६. ॐ बृहते नमः।
२६७. ॐ पञ्चयज्ञाय नमः।
२६८. ॐ तरुणाय नमः।
२६९. ॐ विशिष्टाय नमः।
२७०. ॐ बालरूपधराय नमः।
२७१. ॐ जीवितेशाय नमः।
२७२. ॐ तुष्टाय नमः।
२७३. ॐ पुष्टानां पतये नमः।
२७४. ॐ भवहेत्यै नमः।
२७५. ॐ हिरण्याय नमः।
२७६. ॐ कनिष्ठाय नमः।
२७७. ॐ मध्यमाय नमः।
२७८. ॐ विधात्रे नमः।
२७९. ॐ शूराय नमः।
२८०. ॐ शुभगाय नमः।
२८१. ॐ आदित्यतापनाय नमः।
२८२. ॐ रुद्रमन्यवे नमः।

२८३.ॐ महाह्रदाय नमः।
२८४.ॐ ह्रस्वाय नमः।
२८५.ॐ वामनाय नमः।
२८६.ॐ तत्पुरुषाय नमः।
२८७.ॐ चतुर्हस्ताय नमः।
२८८.ॐ मायिने नमः।
२८९.ॐ धूर्जटये नमः।
२९०.ॐ जगदीशाय नमः।
२९१.ॐ जगन्नाथस्वरूपाय नमः।
२९२.ॐ लीलाविग्रहरूपिणे नमः।
२९३.ॐ अनघाय नमः।
२९४.ॐ अमराय नमः।
२९५.ॐ अमृताय नमः।
२९६.ॐ अच्छात्राय नमः।
२९७.ॐ लोकाध्यक्षाय नमः।
२९८.ॐ अनादिनिधनाय नमः।
२९९.ॐ व्यक्तेतराय नमः।
**३००. ॐ व्यक्ताय नमः।**
३०१.ॐ परमाणवे नमः।
३०२.ॐ लघुस्थूलस्वरूपाय नमः।
३०३.ॐ परशुधारिणे नमः।
३०४.ॐ खट्वाङ्गहस्ताय नमः।
३०५.ॐ नागहस्ताय नमः।
३०६.ॐ वरदाभयहस्ताय नमः।
३०७.ॐ घण्टाहस्ताय नमः।
३०८.ॐ घस्मराय नमः।
३०९.ॐ अजिताय नमः।
३१०.ॐ अणिमादिगुणेशाय नमः।
३११.ॐ पञ्चब्रह्ममयाय नमः।
३१२.ॐ पुरातनाय नमः।
३१३.ॐ शुद्धाय नमः।
३१४.ॐ बलप्रमथनाय नमः।
३१५.ॐ पुण्योदयाय नमः।
३१६.ॐ पद्माय नमः।
३१७.ॐ विरक्ताय नमः।
३१८.ॐ उदराय नमः।
३१९.ॐ विचित्राय नमः।
३२०.ॐ विचित्रगतये नमः।
३२१.ॐ वाग्विशुद्धाय नमः।
३२२.ॐ चितये नमः।
३२३.ॐ निर्गुणाय नमः।
३२४.ॐ परमेशाय नमः।
३२५.ॐ शेषाय नमः।
३२६.ॐ पद्मवराय नमः।
३२७.ॐ महेन्द्राय नमः।
३२८.ॐ सुशीलाय नमः।
३२९.ॐ करवीरप्रियाय नमः।
३३०.ॐ महापराक्रमाय नमः।

३३१. ॐ कालरूपिणे नमः।
३३२. ॐ विष्टरश्रवसे नमः।
३३३. ॐ लोकचूडारत्नाय नमः।
३३४. ॐ साम्राज्यकल्पवृक्षाय नमः।
३३५. ॐ करुणाय नमः।
३३६. ॐ नटाय नमः।
३३७. ॐ अनर्घ्याय नमः।
३३८. ॐ वरेण्याय नमः।
३३९. ॐ वज्ररूपाय नमः।
३४०. ॐ परमज्योतिषे नमः।
३४१. ॐ पद्मगर्भाय नमः।
३४२. ॐ सलिलाय नमः।
३४३. ॐ तत्त्वाधिकाय नमः।
३४४. ॐ सर्गाय नमः।
३४५. ॐ दीर्घाय नमः।
३४६. ॐ स्रग्विणे नमः।
३४७. ॐ पाण्डराङ्गाय नमः।
३४८. ॐ घोराय नमः।
३४९. ॐ ब्रह्मरूपिणे नमः।
३५०. ॐ निष्कलाय नमः।
३५१. ॐ प्रपथ्याय नमः।
३५२. ॐ सामगानप्रियाय नमः।
३५३. ॐ जयाय नमः।
३५४. ॐ क्षेत्राय नमः।
३५५. ॐ क्षेत्राणां पतये नमः।
३५६. ॐ कलाधराय नमः।
३५७. ॐ पूताय नमः।
३५८. ॐ पञ्चभूतात्मने नमः।
३५९. ॐ अनिर्विण्णाय नमः।
३६०. ॐ तथ्याय नमः।
३६१. ॐ पापनाशकराय नमः।
३६२. ॐ विश्वतश्चक्षुषे नमः।
३६३. ॐ मन्त्रिणे नमः।
३६४. ॐ अनन्तरूपिणे नमः।
३६५. ॐ सिद्धसाधकरूपाय नमः।
३६६. ॐ मेदिनीरूपिणे नमः।
३६७. ॐ अगण्यप्रतापाय नमः।
३६८. ॐ सुधाहस्ताय नमः।
३६९. ॐ श्रीवल्लभाय नमः।
३७०. ॐ ईश्वराय नमः।
३७१. ॐ मधुराय नमः।
३७२. ॐ उपाधिरहिताय नमः।
३७३. ॐ सुकृतराशये नमः।
३७४. ॐ मुनीश्वराय नमः।
३७५. ॐ शिवानन्दाय नमः।
३७६. ॐ रिपुघ्नाय नमः।
३७७. ॐ तेजोराशये नमः।

३७८. ॐ अनुत्तमाय नमः।
३७९. ॐ चतुर्मूर्तिवपुःस्थाय नमः।
३८०. ॐ बुद्धीन्द्रियात्मने नमः।
३८१. ॐ उपद्रवहराय नमः।
३८२. ॐ प्रियसंदर्शनाय नमः।
३८३. ॐ भूतनाथाय नमः।
३८४. ॐ मूलाय नमः।
३८५. ॐ वीतरागाय नमः।
३८६. ॐ नैष्कर्म्याय नमः।
३८७. ॐ विरूपाय नमः।
३८८. ॐ षट्चक्राय नमः।
३८९. ॐ विशुद्धये नमः।
३९०. ॐ कुलेशाय नमः।
३९१. ॐ अवनिभर्त्रे नमः।
३९२. ॐ भुवनेशाय नमः।
३९३. ॐ हिरण्यबाहवे नमः।
३९४. ॐ जीववरदाय नमः।
३९५. ॐ आदिदेवाय नमः।
३९६. ॐ भाग्याय नमः।
३९७. ॐ चन्द्रसञ्जीवनाय नमः।
३९८. ॐ हराय नमः।
३९९. ॐ बहुरूपाय नमः।
**४००. ॐ प्रसन्नाय नमः।**
४०१. ॐ आनन्दपूरिताय नमः।
४०२. ॐ कूटस्थाय नमः।
४०३. ॐ मोक्षफलाय नमः।
४०४. ॐ शाश्वताय नमः।
४०५. ॐ विरागिणे नमः।
४०६. ॐ यज्ञभोक्त्रे नमः।
४०७. ॐ सुषेणाय नमः।
४०८. ॐ दक्षयज्ञविघातिने नमः।
४०९. ॐ सर्वात्मने नमः।
४१०. ॐ विश्वपालाय नमः।
४११. ॐ विश्वगर्भाय नमः।
४१२. ॐ गर्भाय नमः।
४१३. ॐ देवगर्भाय नमः।
४१४. ॐ संसारार्णवमग्नानां समुद्धरणहेतवे नमः।
४१५. ॐ मुनिप्रियाय नमः।
४१६. ॐ खल्ल्याय नमः।
४१७. ॐ मूलप्रकृतये नमः।
४१८. ॐ समस्तसिद्धये नमः।
४१९. ॐ तेजोमूर्तये नमः।
४२०. ॐ आश्रमस्थापकाय नमः।
४२१. ॐ वर्णिने नमः।
४२२. ॐ सुन्दराय नमः।
४२३. ॐ मृगबाणार्पणाय नमः।
४२४. ॐ शारदावल्लभाय नमः।

४२५. ॐ विचित्रमायिने नमः।
४२६. ॐ अलङ्करिष्णवे नमः।
४२७. ॐ बहिर्मुखमहादर्पमथनाय नमः।
४२८. ॐ अष्टमूर्तये नमः।
४२९. ॐ निष्कलङ्काय नमः।
४३०. ॐ हव्यभोज्याय नमः।
४३१. ॐ यज्ञनाथाय नमः।
४३२. ॐ मेध्याय नमः।
४३३. ॐ मुख्याय नमः।
४३४. ॐ विशिष्टाय नमः।
४३५. ॐ अम्बिकापतये नमः।
४३६. ॐ महादान्ताय नमः।
४३७. ॐ सत्यप्रियाय नमः।
४३८. ॐ सत्याय नमः।
४३९. ॐ प्रियनित्याय नमः।
४४०. ॐ नित्यतृप्ताय नमः।
४४१. ॐ वेदित्रे नमः।
४४२. ॐ मृदुहस्ताय नमः।
४४३. ॐ अर्धनारीश्वराय नमः।
४४४. ॐ कुठारायुधपाणये नमः।
४४५. ॐ वराहभेदिने नमः।
४४६. ॐ कंकालधारिणे नमः।
४४७. ॐ महार्थाय नमः।
४४८. ॐ सुसत्त्वाय नमः।
४४९. ॐ कीर्तिस्तम्भाय नमः।
४५०. ॐ कृतागमाय नमः।
४५१. ॐ वेदान्तपठिताय नमः।
४५२. ॐ अश्रोत्राय नमः।
४५३. ॐ श्रुतिमते नमः।
४५४. ॐ बहुश्रुतिधराय नमः।
४५५. ॐ अघ्राणाय नमः।
४५६. ॐ गन्धावघ्राणकारिणे नमः।
४५७. ॐ पादहीनाय नमः।
४५८. ॐ वोढ्रे नमः।
४५९. ॐ सर्वत्रगतये नमः।
४६०. ॐ व्यक्षाय नमः।
४६१. ॐ जननेत्राय नमः।
४६२. ॐ चिदात्मने नमः।
४६३. ॐ रसज्ञाय नमः।
४६४. ॐ रसनारहिताय नमः।
४६५. ॐ अमूर्ताय नमः।
४६६. ॐ मूर्ताय नमः।
४६७. ॐ सदसस्पतये नमः।
४६८. ॐ जितेन्द्रियाय नमः।
४६९. ॐ तथ्याय नमः।
४७०. ॐ परंज्योतिः स्वरूपिणे नमः।

४७१. ॐ सर्वमर्त्यानामादिकर्त्रे नमः।
४७२. ॐ भुवन्तये नमः।
४७३. ॐ सर्गस्थितिविनाशानां कर्त्रे नमः।
४७४. ॐ प्रेरकाय नमः।
४७५. ॐ अन्तर्यामिणे नमः।
४७६. ॐ सर्वहृदिस्थाय नमः।
४७७. ॐ चक्रभ्रमणकर्त्रे नमः।
४७८. ॐ पुराणाय नमः।
४७९. ॐ वामदक्षिणहस्तोत्थलोकेश हरिशालिने नमः।
४८०. ॐ सकलकल्याणदायिने नमः।
४८१. ॐ प्रसवाय नमः।
४८२. ॐ स्वभावोदारधीराय नमः।
४८३. ॐ सूत्रकाराय नमः।
४८४. ॐ विषयार्णवमग्नानां समुद्धरणसेतवे नमः।
४८५. ॐ अस्नेहस्नेहरूपाय नमः।
४८६. ॐ वार्तातिक्रान्तवर्तिने नमः।
४८७. ॐ यत्र सर्वं यतः सर्वं सर्वं यत्र (तस्मै) नमः।
४८८. ॐ महार्णवाय नमः।
४८९. ॐ भास्कराय नमः।
४९०. ॐ भक्तिगम्याय नमः।
४९१. ॐ भक्तानां सुलभाय नमः।
४९२. ॐ दुष्टानां दुष्प्रधर्षाय नमः।
४९३. ॐ विवेकिनां विजयाय नमः।
४९४. ॐ अतर्किताय नमः।
४९५. ॐ लोकाय नमः।
४९६. ॐ सुलोकाय नमः।
४९७. ॐ पूरयित्रे नमः।
४९८. ॐ विशेषाय नमः।
४९९. ॐ शुभाय नमः।
**५००. ॐ कर्पूरदेहाय नमः।**
५०१. ॐ सर्पहाराय नमः।
५०२. ॐ संसारपाराय नमः।
५०३. ॐ कमनीयाय नमः।
५०४. ॐ वह्निदर्पविघाताय नमः।
५०५. ॐ वायुदर्पविघातिने नमः।
५०६. ॐ जरातिगाय नमः।
५०७. ॐ वीर्याय नमः।
५०८. ॐ विश्वव्यापिने नमः।
५०९. ॐ सूर्यकोटिप्रतीकाशाय नमः।
५१०. ॐ निष्क्रियाय नमः।
५११. ॐ चन्द्रकोटीसुशीताय नमः।
५१२. ॐ विमलाय नमः।

५१३. ॐ गूढस्वरूपाय नमः।
५१४. ॐ दिशां पतये नमः।
५१५. ॐ सत्यप्रतिज्ञाय नमः।
५१६. ॐ समस्ताय नमः।
५१७. ॐ समाधये नमः।
५१८. ॐ एकरूपाय नमः।
५१९. ॐ शून्याय नमः।
५२०. ॐ विश्वनाभिह्रदाय नमः।
५२१. ॐ सर्वोत्तमाय नमः।
५२२. ॐ कूल्याय नमः।
५२३. ॐ प्राणिनां सुहृदे नमः।
५२४. ॐ अन्नानां पतये नमः।
५२५. ॐ चिन्मात्राय नमः।
५२६. ॐ ध्येयाय नमः।
५२७. ॐ ध्यानगम्याय नमः।
५२८. ॐ ध्यानरूपाय नमः।
५२९. ॐ शाश्वतैश्वर्यविभवाय नमः।
५३०. ॐ प्राणेश्वराय नमः।
५३१. ॐ सर्वशक्तिंधराय नमः।
५३२. ॐ धर्माधाराय नमः।
५३३. ॐ धन्याय नमः।
५३४. ॐ पुष्कलाय नमः।
५३५. ॐ वरिष्ठाय नमः।
५३६. ॐ धर्मगोप्त्रे नमः।
५३७. ॐ निधानाय नमः।
५३८. ॐ अग्रजाय नमः।
५३९. ॐ योगीश्वराय नमः।
५४०. ॐ योगाय नमः।
५४१. ॐ योगगम्याय नमः।
५४२. ॐ महेन्द्रोपेन्द्रचन्द्रार्कनमिताय नमः।
५४३. ॐ महर्षिवन्दिताय नमः।
५४४. ॐ प्रकाशाय नमः।
५४५. ॐ सुधर्मिणे नमः।
५४६. ॐ हिरण्यगर्भाय नमः।
५४७. ॐ हिरण्मयाय नमः।
५४८. ॐ जगद्बीजाय नमः।
५४९. ॐ हरये नमः।
५५०. ॐ सेव्याय नमः।
५५१. ॐ क्रतवे नमः।
५५२. ॐ आधिपत्याय नमः।
५५३. ॐ कामाय नमः।
५५४. ॐ यशसे नमः।
५५५. ॐ प्रचेतसे नमः।
५५६. ॐ ब्रह्ममयाय नमः।
५५७. ॐ सकलाय नमः।
५५८. ॐ रुक्मवर्णाय नमः।

५५९. ॐ ब्रह्मयोनये नमः।
५६०. ॐ योगात्मने नमः।
५६१. ॐ अभीताय नमः।
५६२. ॐ दिव्यनृत्याय नमः।
५६३. ॐ जगतामेकबीजाय नमः।
५६४. ॐ मायाबीजाय नमः।
५६५. ॐ सर्वहृत्सन्निविष्टाय नमः।
५६६. ॐ ब्रह्मचक्रभ्रमाय नमः।
५६७. ॐ ब्रह्मानन्दाय नमः।
५६८. ॐ महते नमः।
५६९. ॐ ब्रह्मण्याय नमः।
५७०. ॐ भूरिभारार्तिसंहर्त्रे नमः।
५७१. ॐ विधिसारथये नमः।
५७२. ॐ हिरण्यगर्भपुत्राणां प्राणसंरक्षणाय नमः।
५७३. ॐ दुर्वाससे नमः।
५७४. ॐ षड्विकाररहिताय नमः।
५७५. ॐ देहार्धकान्ताय नमः।
५७६. ॐ षडूर्मिरहिताय नमः।
५७७. ॐ प्रकृत्यै नमः।
५७८. ॐ भवनाशाय नमः।
५७९. ॐ ताम्राय नमः।
५८०. ॐ परमेष्ठिने नमः।
५८१. ॐ अनन्तकोटिब्रह्माण्ड-नायकाय नमः।
५८२. ॐ एकाकिने नमः।
५८३. ॐ निर्मलाय नमः।
५८४. ॐ द्रविणाय नमः।
५८५. ॐ दमाय नमः।
५८६. ॐ त्रिलोचनाय नमः।
५८७. ॐ शिपिविष्टाय नमः।
५८८. ॐ बन्धवे नमः।
५८९. ॐ त्रिविष्टपेश्वराय नमः।
५९०. ॐ व्याघ्रेश्वराय नमः।
५९१. ॐ विश्वेश्वराय नमः।
५९२. ॐ दात्रे नमः।
५९३. ॐ चन्द्रेश्वराय नमः।
५९४. ॐ व्यासेश्वराय नमः।
५९५. ॐ युधिने नमः।
५९६. ॐ यज्ञकेशाय नमः।
५९७. ॐ जैगीषव्येश्वराय नमः।
५९८. ॐ दिवोदासेश्वराय नमः।
५९९. ॐ नागेश्वराय नमः।
**६००. ॐ न्यायाय नमः।**
६०१. ॐ न्यायनिर्वाहकाय नमः।
६०२. ॐ शरण्याय नमः।
६०३. ॐ सुपात्राय नमः।
६०४. ॐ कालचक्रप्रवर्तिने नमः।
६०५. ॐ विचक्षणाय नमः।

६०६. ॐ दंष्ट्राय नमः।
६०७. ॐ वेदाश्वाय नमः।
६०८. ॐ नीलजीमूतदेहाय नमः।
६०९. ॐ परात्मज्योतिषे नमः।
६१०. ॐ शरणागतपालाय नमः।
६११. ॐ महाबलपराय नमः।
६१२. ॐ सर्वपापहराय नमः।
६१३. ॐ महानादाय नमः।
६१४. ॐ कृष्णस्य जयदात्रे नमः।
६१५. ॐ बिल्वकेशाय नमः।
६१६. ॐ दिव्यभोगाय नमः।
६१७. ॐ दूताय नमः।
६१८. ॐ कोविदाय नमः।
६१९. ॐ कामपाशाय नमः।
६२०. ॐ चित्राय नमः।
६२१. ॐ चित्राङ्गाय नमः।
६२२. ॐ मातामहाय नमः।
६२३. ॐ मातरिश्वने नमः।
६२४. ॐ निस्सङ्गाय नमः।
६२५. ॐ सुनेत्राय नमः।
६२६. ॐ विद्येशाय नमः।
६२७. ॐ जयाय नमः।
६२८. ॐ व्याजसंमर्दनाय नमः।
६२९. ॐ मध्यस्थाय नमः।
६३०. ॐ अङ्गुष्ठशिरसा लंका-नाथदर्पहराय नमः।
६३१. ॐ वैयाघ्रपुरवासाय नमः।
६३२. ॐ सर्वेश्वराय नमः।
६३३. ॐ परावरेशाय नमः।
६३४. ॐ जगत्स्थावरमूर्तये नमः।
६३५. ॐ अनुपमेशाय नमः।
६३६. ॐ शार्ङ्गिणे नमः।
६३७. ॐ विष्णुमूर्तये नमः।
६३८. ॐ नारायणाय नमः।
६३९. ॐ रामाय नमः।
६४०. ॐ सुदीप्ताय नमः।
६४१. ॐ ब्रह्माण्डमालाय नमः।
६४२. ॐ गोधराय नमः।
६४३. ॐ वरूधिने नमः।
६४४. ॐ सोमाय नमः।
६४५. ॐ कूप्याय नमः।
६४६. ॐ पातालवासिने नमः।
६४७. ॐ ताराधिनाथाय नमः।
६४८. ॐ वागीशाय नमः।
६४९. ॐ सदाचाराय नमः।
६५०. ॐ गौराय नमः।
६५१. ॐ स्वायुधाय नमः।
६५२. ॐ संसारमोचकाय नमः।

६५३.ॐ वर्णिने नमः।
६५४.ॐ लिंगरूपिणे नमः।
६५५.ॐ सच्चिदानन्दरूपाय नमः।
६५६.ॐ पापराशिहराय नमः।
६५७.ॐ अतर्क्याय नमः।
६५८.ॐ अप्रमेयाय नमः।
६५९.ॐ प्रमाणाय नमः।
६६०.ॐ कलिग्रासाय नमः।
६६१.ॐ भक्तानां भुक्ति-
मुक्तिप्रदायिने नमः।
६६२.ॐ गजारये नमः।
६६३.ॐ विदेहाय नमः।
६६४.ॐ त्रिलिंगरहिताय नमः।
६६५.ॐ अचिन्त्यशक्तये नमः।
६६६.ॐ अलङ्घ्यशासनाय नमः।
६६७.ॐ अच्युताय नमः।
६६८.ॐ राजाधिराजाय नमः।
६६९.ॐ चैतन्यविषयाय नमः।
६७०.ॐ शुद्धात्मने नमः।
६७१.ॐ ब्रह्मज्योतिषे नमः।
६७२.ॐ स्वस्तिदाय नमः।
६७३.ॐ मयोभुवे नमः।
६७४.ॐ दुर्ज्ञेयसामर्थ्याय नमः।
६७५.ॐ यज्वने नमः।
६७६.ॐ चक्रेश्वराय नमः।
६७७.ॐ नक्षत्रमालिने नमः।
६७८.ॐ अनर्थनाशनाय नमः।
६७९.ॐ भस्मलेपकराय नमः।
६८०.ॐ सदानन्दाय नमः।
६८१.ॐ विदुषे नमः।
६८२.ॐ सगुणाय नमः।
६८३.ॐ विरोधिने नमः।
६८४.ॐ दुर्गमाय नमः।
६८५.ॐ शुभाङ्गाय नमः।
६८६.ॐ मृगव्याधाय नमः।
६८७.ॐ प्रियाय नमः।
६८८.ॐ धर्मधाम्ने नमः।
६८९.ॐ प्रयोगाय नमः।
६९०.ॐ विभागिने नमः।
६९१.ॐ नाद्याय नमः।
६९२.ॐ अमृतपानाय नमः।
६९३.ॐ सोमपाय नमः।
६९४.ॐ तपस्विने नमः।
६९५.ॐ विचित्रवेषाय नमः।
६९६.ॐ पुष्टिसंवर्धनाय नमः।
६९७.ॐ चिरन्तनाय नमः।

६९८. ॐ धनुषे नमः।
६९९. ॐ वृक्षाणां पतये नमः।
**७००. ॐ निर्मायाय नमः।**
७०१. ॐ अग्रगण्याय नमः।
७०२. ॐ व्योमातीताय नमः।
७०३. ॐ सम्वत्सराय नमः।
७०४. ॐ लोप्याय नमः।
७०५. ॐ स्थानदाय नमः।
७०६. ॐ स्थविष्णवे नमः।
७०७. ॐ व्यवसायफलान्ताय नमः।
७०८. ॐ महाकर्तृप्रियाय नमः।
७०९. ॐ गुणत्रयस्वरूपाय नमः।
७१०. ॐ सिद्धस्वरूपिणे नमः।
७११. ॐ स्वरूपरूपरूपाय नमः।
७१२. ॐ स्वेच्छाय नमः।
७१३. ॐ पूरुषाय नमः।
७१४. ॐ कालात्पराय नमः।
७१५. ॐ वेद्याय नमः।
७१६. ॐ ब्रह्माण्डरूपिणे नमः।
७१७. ॐ अनित्यनित्यरूपाय नमः।
७१८. ॐ तदन्तर्वर्तिने नमः।
७१९. ॐ तीर्थ्याय नमः।
७२०. ॐ कूल्याय नमः।
७२१. ॐ पूर्णाय नमः।
७२२. ॐ बटवे नमः।
७२३. ॐ पञ्चतन्मात्ररूपाय नमः।
७२४. ॐ पञ्चकर्मेन्द्रियात्मने नमः।
७२५. ॐ विशृङ्खलाय नमः।
७२६. ॐ दर्पाय नमः।
७२७. ॐ विषयात्मने नमः।
७२८. ॐ अनवद्याय नमः।
७२९. ॐ शास्त्राय नमः।
७३०. ॐ स्वतन्त्राय नमः।
७३१. ॐ अमृताय नमः।
७३२. ॐ प्रौढाय नमः।
७३३. ॐ प्रज्ञाय नमः।
७३४. ॐ योगारूढाय नमः।
७३५. ॐ मन्त्रज्ञाय नमः।
७३६. ॐ प्रगल्भाय नमः।
७३७. ॐ प्रदीपविमलाय नमः।
७३८. ॐ विश्वावासाय नमः।
७३९. ॐ दक्षाय नमः।
७४०. ॐ वेदनिःश्वसिताय नमः।
७४१. ॐ यज्ञाङ्गाय नमः।
७४२. ॐ सुवीराय नमः।

७४३.ॐ नागचूडाय नमः।
७४४.ॐ व्याघ्राय नमः।
७४५.ॐ बाणहस्ताय नमः।
७४६.ॐ स्कन्दाय नमः।
७४७.ॐ दक्षिणे नमः।
७४८.ॐ क्षेत्रज्ञाय नमः।
७४९.ॐ रहस्याय नमः।
७५०.ॐ स्वस्थानाय नमः।
७५१.ॐ वरीयसे नमः।
७५२.ॐ गहनाय नमः।
७५३.ॐ विरामाय नमः।
७५४.ॐ सिद्धान्ताय नमः।
७५५.ॐ महीधराय नमः।
७५६.ॐ गृह्याय नमः।
७५७.ॐ वटवृक्षाय नमः।
७५८.ॐ ज्ञानदीपाय नमः।
७५९.ॐ दुर्गाय नमः।
७६०.ॐ सिद्धान्तैर्निश्चिताय नमः।
७६१.ॐ श्रीमते नमः।
७६२.ॐ मुक्तिबीजाय नमः।
७६३.ॐ कुशलाय नमः।
७६४.ॐ विवासिने नमः।
७६५.ॐ प्रेरक्षाय नमः।
७६६.ॐ विशोकाय नमः।
७६७.ॐ हविर्धानाय नमः।
७६८.ॐ गम्भीराय नमः।
७६९.ॐ सहायाय नमः।
७७०.ॐ भोजनाय नमः।
७७१.ॐ सुभोगिने नमः।
७७२.ॐ महायज्ञाय नमः।
७७३.ॐ तीक्ष्णाय नमः।
७७४.ॐ भूतचारिणे नमः।
७७५.ॐ प्रतिष्ठिताय नमः।
७७६.ॐ महोत्साहाय नमः।
७७७.ॐ परमार्थाय नमः।
७७८.ॐ शिशवे नमः।
७७९.ॐ प्रांशवे नमः।
७८०.ॐ कपालिने नमः।
७८१.ॐ सहजाय गृहस्थाय नमः।
७८२.ॐ सन्ध्यानाथाय नमः।
७८३.ॐ विष्णवे नमः।
७८४.ॐ सद्भिःसम्पूजिताय नमः।
७८५.ॐ वितलासुरघातिने नमः।
७८६.ॐ जनाधिपाय नमः।
७८७.ॐ योग्याय नमः।
७८८.ॐ कामेशाय नमः।

७८९.ॐ किरीटिने नमः।
७९०.ॐ अमोघविक्रमाय नमः।
७९१.ॐ नग्नाय नमः।
७९२.ॐ दलघातिने नमः।
७९३.ॐ संग्रामाय नमः।
७९४.ॐ नरेशाय नमः।
७९५.ॐ शुचिभस्मने नमः।
७९६.ॐ भूतिप्रियाय नमः।
७९७.ॐ भूम्ने नमः।
७९८.ॐ सेनाय नमः।
७९९.ॐ चतुराय नमः।
**८००. ॐ मनुष्यबाह्यगतये नमः।**
८०१.ॐ कृतज्ञाय नमः।
८०२.ॐ शिखण्डिने नमः।
८०३.ॐ निर्लेपाय नमः।
८०४.ॐ जटार्द्राय नमः।
८०५.ॐ महाकालाय नमः।
८०६.ॐ मेरवे नमः।
८०७.ॐ विरूपरूपाय नमः।
८०८.ॐ शक्तिगम्याय नमः।
८०९.ॐ सर्वाय नमः।
८१०.ॐ सदसत्सत्याय नमः।
८११.ॐ सुव्रताय नमः।
८१२.ॐ भक्तप्रियाय नमः।
८१३.ॐ श्वेतरक्षापराय नमः।
८१४.ॐ सुकुमारमहापापहराय नमः।
८१५.ॐ रथिने नमः।
८१६.ॐ धर्मराजाय नमः।
८१७.ॐ धनाध्यक्षाय नमः।
८१८.ॐ सिद्धये नमः।
८१९.ॐ महाभूताय नमः।
८२०.ॐ कल्पाय नमः।
८२१.ॐ कल्पनारहिताय नमः।
८२२.ॐ ख्याताय नमः।
८२३.ॐ जितविश्वाय नमः।
८२४.ॐ गोकर्णाय नमः।
८२५.ॐ सुचारवे नमः।
८२६.ॐ श्रोत्रियाय नमः।
८२७.ॐ वदान्याय नमः।
८२८.ॐ दुर्लभाय नमः।
८२९.ॐ कुटुंबिने नमः।
८३०.ॐ विरजाय नमः।
८३१.ॐ सुगन्धाय नमः।
८३२.ॐ विश्वम्भराय नमः।
८३३.ॐ भवातीताय नमः।

८३४. ॐ तिष्याय नमः।
८३५. ॐ सामगाय नमः।
८३६. ॐ अद्वैताय नमः।
८३७. ॐ द्वितीयाय नमः।
८३८. ॐ कल्पराजाय नमः।
८३९. ॐ भोगिने नमः।
८४०. ॐ चिन्मयाय नमः।
८४१. ॐ शुक्लज्योतिषे नमः।
८४२. ॐ क्षेत्रगाय नमः।
८४३. ॐ सर्वभोगसमृद्धाय नमः।
८४४. ॐ साम्पराय नमः।
८४५. ॐ स्वप्रकाशाय नमः।
८४६. ॐ स्वच्छन्दाय नमः।
८४७. ॐ सुतन्तवे नमः।
८४८. ॐ सर्वज्ञमूर्तये नमः।
८४९. ॐ गुह्येशाय नमः।
८५०. ॐ सुशान्तये नमः।
८५१. ॐ शारदाय नमः।
८५२. ॐ सुशीलाय नमः।
८५३. ॐ कौशिकाय नमः।
८५४. ॐ धनाय नमः।
८५५. ॐ अभिरामाय नमः।
८५६. ॐ तत्त्वाय नमः।
८५७. ॐ व्यालकल्पाय नमः।
८५८. ॐ अरिष्टमथनाय नमः।
८५९. ॐ सुप्रतीकाय नमः।
८६०. ॐ आशवे नमः।
८६१. ॐ ब्रह्मगर्भाय नमः।
८६२. ॐ वरुणाय नमः।
८६३. ॐ अद्रये नमः।
८६४. ॐ कालाग्निरुद्राय नमः।
८६५. ॐ श्यामाय नमः।
८६६. ॐ सुजनाय नमः।
८६७. ॐ अहिर्बुघ्न्याय नमः।
८६८. ॐ जाराय नमः।
८६९. ॐ दुष्टानां पतये नमः।
८७०. ॐ समयनाथाय नमः।
८७१. ॐ समयाय नमः।
८७२. ॐ गुहाय नमः।
८७३. ॐ दुर्लङ्घ्याय नमः।
८७४. ॐ छन्दः साराय नमः।
८७५. ॐ दंष्ट्रिणे नमः।
८७६. ॐ ज्योतिर्लिङ्गाय नमः।
८७७. ॐ मित्राय नमः।
८७८. ॐ जगतां हितकारिणे नमः।
८७९. ॐ कारुण्यनिधये नमः।

८८०.ॐ श्लोकाय नमः।
८८१.ॐ जयशालिने नमः।
८८२.ॐ ज्ञानोदयाय नमः।
८८३.ॐ बीजाय नमः।
८८४.ॐ जगद्विभ्रमहेतवे नमः।
८८५.ॐ अवधूताय नमः।
८८६.ॐ शिष्टाय नमः।
८८७.ॐ छन्दसां पतये नमः।
८८८.ॐ फेन्याय नमः।
८८९.ॐ गुह्याय नमः।
८९०.ॐ सर्वबन्धविमोचिने नमः।
८९१.ॐ उदारकीर्तये नमः।
८९२.ॐ शश्वत्प्रसन्नवदनाय नमः।
८९३.ॐ वसवे नमः।
८९४.ॐ वेदकाराय नमः।
८९५.ॐ भ्राजिष्णुजिष्णवे नमः।
८९६.ॐ चक्रिणे नमः।
८९७.ॐ देवदेवाय नमः।
८९८.ॐ गदाहस्ताय नमः।
८९९.ॐ पुत्रिणे नमः।
**९००. ॐ पारिजातसुपुष्पाय नमः।**

९०१.ॐ गणाधिपतये नमः।
९०२.ॐ सर्वशाखाधिपतये नमः।
९०३.ॐ प्रजनेशाय नमः।
९०४.ॐ सूक्ष्मप्रमाणभूताय नमः।
९०५.ॐ सुरपार्श्वगताय नमः।
९०६.ॐ अशरीरशरीराय नमः।
९०७.ॐ अपगल्भाय नमः।
९०८.ॐ सुकेशाय नमः।
९०९.ॐ सुपुष्पाय नमः।
९१०.ॐ श्रुतये नमः।
९११.ॐ पुष्पमालिने नमः।
९१२.ॐ मुनिध्येयाय नमः।
९१३.ॐ मुनये नमः।
९१४.ॐ बीजसंस्थमरीचये नमः।
९१५.ॐ चामुण्डाजनकाय नमः।
९१६.ॐ कृत्तिवाससे नमः।
९१७.ॐ व्युप्तकेशाय नमः।
९१८.ॐ योग्याय नमः।
९१९.ॐ धर्मपीठाय नमः।
९२०.ॐ महावीर्याय नमः।
९२१.ॐ दीप्ताय नमः।
९२२.ॐ बुद्धाय नमः।
९२३.ॐ अशनये नमः।

९२४.ॐ विशिष्टेष्टाय नमः।
९२५.ॐ सेनान्ये नमः।
९२६.ॐ द्विपदे नमः।
९२७.ॐ कारणाय नमः।
९२८.ॐ भगवते नमः।
९२९.ॐ बाणदर्पहराय नमः।
९३०.ॐ अतीन्द्रियाय नमः।
९३१.ॐ रम्याय नमः।
९३२.ॐ जनानन्दकराय नमः।
९३३.ॐ सदाशिवाय नमः।
९३४.ॐ सौम्याय नमः।
९३५.ॐ चिन्त्याय नमः।
९३६.ॐ शशिमौलिने नमः।
९३७.ॐ जातुकर्णाय नमः।
९३८.ॐ सूर्याध्यक्षाय नमः।
९३९.ॐ ज्योतिषे नमः।
९४०.ॐ कुण्डलीशस्य वरदाय नमः।
९४१.ॐ अभयाय नमः।
९४२.ॐ वसन्ताय नमः।
९४३.ॐ सुरभये नमः।
९४४.ॐ जयारिमथनाय नमः।
९४५.ॐ प्रेम्णे नमः।
९४६.ॐ पुरञ्जयाय नमः।
९४७.ॐ पृषदश्वाय नमः।
९४८.ॐ रोचिष्णवे नमः।
९४९.ॐ असुरजिते नमः।
९५०.ॐ श्वेतपीताय नमः।
९५१.ॐ चञ्चरीकाय नमः।
९५२.ॐ तमिस्रमथनाय नमः।
९५३.ॐ प्रमाथिने नमः।
९५४.ॐ निदाघाय नमः।
९५५.ॐ चित्रगर्भाय नमः।
९५६.ॐ शिवालयाय नमः।
९५७.ॐ स्तुत्याय नमः।
९५८.ॐ तीर्थदेवाय नमः।
९५९.ॐ पत्तीनां पतये नमः।
९६०.ॐ विचित्रशक्तये नमः।
९६१.ॐ निस्तुलरूपाय नमः।
९६२.ॐ सवित्रे नमः।
९६३.ॐ तपसे नमः।
९६४.ॐ अहंकारस्वरूपाय नमः।
९६५.ॐ मेघाधिपतये नमः।
९६६.ॐ अपाराय नमः।
९६७.ॐ तत्त्वविदे नमः।
९६८.ॐ क्षयद्वीराय नमः।

९६९. ॐ पञ्चास्याय नमः।

९७०. ॐ अग्रगण्याय नमः।

९७१. ॐ विष्णुप्राणेश्वराय नमः।

९७२. ॐ अगोचराय नमः।

९७३. ॐ याम्याय नमः।

९७४. ॐ क्षेम्याय नमः।

९७५. ॐ बडवाग्नये नमः।

९७६. ॐ विक्रमाय नमः।

९७७. ॐ स्वतन्त्राय नमः।

९७८. ॐ स्वतन्त्रगतये नमः।

९७९. ॐ वनानांपतये नमः।

९८०. ॐ जमदग्नये नमः।

९८१. ॐ अनावृताय नमः।

९८२. ॐ मुक्ताय नमः।

९८३. ॐ मातृकापतये नमः।

९८४. ॐ बीजकोशाय नमः।

९८५. ॐ दिव्यानन्दाय नमः।

९८६. ॐ विश्वदेवाय नमः।

९८७. ॐ शान्तरागाय नमः।

९८८. ॐ सुदेवाय नमः।

९८९. ॐ हेमगर्भाय नमः।

९९०. ॐ अनाद्यन्ताय नमः।

९९१. ॐ चण्डाय मनोनाथाय नमः।

९९२. ॐ ज्ञानस्कन्दाय नमः।

९९३. ॐ तुष्टाय नमः।

९९४. ॐ कपिलाय महर्षये नमः।

९९५. ॐ त्रिकाग्निकालाय नमः।

९९६. ॐ देवसिंहाय नमः।

९९७. ॐ मणिपूराय नमः।

९९८. ॐ चतुर्वेदाय नमः।

९९९. ॐ स्वरूपाणां स्वभावाय नमः।

**१०००. ॐ अन्तर्यागाय नमः।**

१००१. ॐ श्लोकाय नमः।

१००२. ॐ वन्याय नमः।

१००३. ॐ महाधर्माय नमः।

१००४. ॐ प्रसन्नाय नमः।

१००५. ॐ सर्वात्मज्योतिषे नमः।

१००६. ॐ स्वयंभुवे नमः।

१००७. ॐ अध्वातीताय नमः।

१००८. ॐ यक्षराक्षसमन्महे नमः।

ॐ

स्कन्दपुराणान्तर्गतं

# श्रीशिवसहस्रनामस्तोत्रम्

## अरुन्धत्युवाच

मुने वद महाभाग नारदेन यथा स्तुतः ।
सहस्रनामभिः पुण्यैः पापघ्नैः सर्वकामदैः ॥ १ ॥

यानि यानि च नामानि नारदोक्तानि वै मुने।
रागोत्पत्तिं विस्तरेण नामानि च वद प्रिय ॥ २ ॥

## वसिष्ठ उवाच

साधु साधु महाभागे शिवभक्तिर्यतस्त्वयि ।
तपः शुद्धो नारदोऽसौ ददर्श परमेश्वरम् ॥ ३ ॥

दृष्ट्वा तद्वै परं ब्रह्म सर्वज्ञो मुनिपुङ्गवः ।
सस्मार प्रियनामानि शिवोक्तानि प्रियां प्रति ॥ ४ ॥

नारदोऽस्य ऋषिः प्रोक्तोऽनुष्टुपुप्च्छन्दः प्रकीर्तितः ।
श्रीशिवः परमात्मा वै देवता समुदाहृता ॥ ५ ॥

धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्तितः ।
सर्वारम्भप्रसिद्ध्यर्थमाधिव्याधिनिवृत्तये ॥ ६ ॥

## नारद उवाच

श्रीशिवः शिवदो भव्यो भावगम्यो वृषाकपिः ।
वृषध्वजो वृषारूढो वृषकर्त्ता वृषेश्वरः ॥ ७ ॥

शिवाधिपः शितः शम्भुः स्वयम्भूरात्मविद्विभुः ।
सर्वज्ञो बहुहन्ता च भवानीपतिरच्युतः ॥ ८ ॥

तन्त्रशास्त्रप्रमोदी च तन्त्रशास्त्रप्रदर्शकः ।
तन्त्रप्रियस्तन्त्रगम्योऽतन्त्रो वाऽनन्ततन्त्रकः ॥ ९ ॥

तन्त्रीनादप्रियो देवो भक्ततन्त्रविमोहितः ।
तन्त्रात्मा तन्त्रनिलयस्तन्त्रदर्शी सुतन्त्रकः ॥ १० ॥

महादेव उमाकान्तश्चन्द्रशेखर ईश्वरः ।
धूर्जटिस्त्र्यम्बको धूर्तो धूर्त्तशत्रुरमावसुः ॥ ११ ॥

वामदेवो मृडः शम्भुः सुरेशो दैत्यमर्द्दनः ।
अन्धकारहरो दण्डो ज्योतिष्मान् हरिवल्लभः ॥ १२ ॥

गङ्गाधरो रमाकान्तः सर्वनाथः सुरारिहा।
प्रचण्डदैत्यविध्वंसी जम्भारातिररिन्दमः ॥ १३ ॥

दानप्रियो दानदो दानतृप्तो दानवान्तकः ।
करिदानप्रियो दानी दानात्मा दानपूजितः ॥ १४ ॥

दानगम्यो ययातिश्च दयासिन्धुर्दयावहः ।
भक्तिगम्यो भक्तसेव्यो भक्तिसन्तुष्टमानसः ॥ १५ ॥

भक्ताभयप्रदो भक्तो भक्ताभीष्टप्रदायकः ।
भानुमान् भानुनेत्रश्च भानुवृन्दसमप्रभः ॥ १६ ॥

सहस्रभानुः स्वर्भानुरात्मभानुर्जयावहः ।
जयन्तो जयदो यज्ञो यज्ञात्मा यज्ञविज्जयः ॥ १७ ॥

जयसेनो जयत्सेनो विजयो विजयप्रियः ।
जाज्वल्यमानो ज्यायांश्च जलात्मा जलजो जवः ॥ १८ ॥

पुरातनः पुरारातिस्त्रिपुरघ्नो रिपुघ्नकः ।
पुराणः पुरुषः पुण्यः पुण्यगम्योऽतिपुण्यदः ॥ १९ ॥

प्रभञ्जनः प्रभुः पूर्णः पूर्णदेवः प्रतापवान् ।
प्रबलोऽतिबलो देवो वेदवेद्यो जनाधिपः ॥ २० ॥

नरेशो नारदो मानी दैत्यमानविमर्दनः ।
अमानो निर्ममो मान्यो मानवो मधुसूदनः ॥ २१ ॥

मनुपुत्रो मयारातिर्मङ्गलो मंगलास्पदः ।
मालवो मलयावासो महोभिःसंयुतोऽनलः ॥ २२ ॥
नलाराध्यो नीलवासा नलात्मा नलपूजितः ।
नलाधीशो नैगमिको निगमेन सुपूजितः ॥ २३ ॥

निगमावेद्यरूपो हि धन्यो धेनुरमित्रहा ।
कल्पवृक्षः कामधेनुर्धनुर्धारी महेश्वरः ॥ २४ ॥

दामनो दामिनीकान्तो दामोदर हरेश्वरः ।
दमो दान्तो दयावांश्च दानवेशो दनुप्रियः ॥ २५ ॥

दन्वीश्वरो दमी दन्ती दन्वाराध्यो जनुप्रदः ।
आनन्दकन्दो मन्दारिर्मन्दारसुमपूजितः ॥ २६ ॥

नित्यानन्दो महानन्दो रमानन्दो निराश्रयः ।
निर्जरो निर्जरप्रीतो निर्जरेश्वरपूजितः ॥ २७ ॥

कैलासवासी विश्वात्मा विश्वेशो विश्वतत्परः ।
विश्वम्भरो विश्वसहो विश्वरूपो महीधरः ॥ २८ ॥

केदारनिलयो भर्ता धर्ता हर्ता हरीश्वरः ।
विष्णुसेव्यो जिष्णुनाथो जिष्णुः कृष्णो धरापतिः ॥ २९ ॥

बदरीनायको नेता रामभक्तो रमाप्रियः ।
रमानाथो रामसेव्यः शैव्यापतिरकल्मषः ॥ ३० ॥

धराधीशो महानेत्रस्त्रिनेत्रश्चारुविक्रमः ।
त्रिविक्रमो विक्रमेशस्त्रिलोकेशस्त्रयीमयः ॥ ३१ ॥

वेदगम्यो वेदवादी वेदात्मा वेदवर्द्धनः ।
देवेश्वरो देवपूज्यो वेदान्तार्थप्रचारकः ॥ ३२ ॥

वेदान्तवेद्यो वैष्णवश्च कविः काव्यकलाधरः।
कालात्मा कालहृत्कालः कलात्मा कालसूदनः ॥ ३३ ॥

केलीप्रियः सुकेलिश्च कलङ्करहितः क्रमः ।
कर्मकर्ता सुकर्मा च कर्मेशः कर्मवर्जितः ॥ ३४ ॥

मीमांसाशास्त्रवेत्ता यः शर्वो मीमांसकप्रियः ।
प्रकृतिः पुरुषः पञ्चतत्त्वज्ञो ज्ञानिनां वरः ॥ ३५ ॥

सांख्यशास्त्रप्रमोदी च संख्यावान् पण्डितः प्रभुः।
असंख्यातगुणग्रामो गुणात्मा गुणवर्जितः ॥ ३६ ॥

निर्गुणो निरहङ्कारो रसाधीशो रसप्रियः ।
रसास्वादी रसावेद्यो नीरसो नीरजप्रियः ॥ ३७ ॥

निर्मलो निरनुक्रोशी निर्दन्तो निर्भयप्रदः ।
गङ्गाख्यतोयं [गंगाख्यो गांगतोयं] च मीनध्वजविमर्दनः ॥ ३८ ॥
अन्धकारिर्बृहद्दंष्ट्रो बृहदश्वो बृहत्तनुः ।
बृहस्पतिः सुराचार्यो गीर्वाणगणपूजितः ॥ ३९ ॥

वासुदेवो महाबाहुर्विरूपाक्षो विरूपकः ।
पूष्णो दन्तविनाशी च मुरारिर्भगनेत्रहा ॥ ४० ॥

वेदव्यासो नागहारो विषहा विषनायकः ।
विरजाः सजलोऽनन्तो वासुकिश्चापराजितः ॥ ४१ ॥

बालो वृद्धो युवा मृत्युर्मृत्युहा भालचन्द्रकः ।
बलभद्रो बलारातिर्दृढधन्वा वृषध्वजः ॥ ४२ ॥

प्रमथेशो गणपतिः कार्तिकेयो वृकोदरः ।
अग्निगर्भोऽग्निनाभश्च पद्मनाभः प्रभाकरः ॥ ४३ ॥

हिरण्यगर्भो लोकेशो वेणुनादः प्रतर्द्दनः ।
वायुर्भगो वसुर्भर्गो दक्षः प्राचेतसो मुनिः ॥ ४४ ॥

नादब्रह्मरतो नादी नन्दनावास अम्बरः ।
अम्बरीषोम्बुनिलयो जामदग्न्यः परात्परः ॥ ४५ ॥

कृतवीर्यसुतो राजा कार्तवीर्यप्रमर्द्दनः ।
जमदग्निर्जातरूपो जातरूपपरिच्छदः ॥ ४६ ॥
कर्पूरगौरो गौरीशो गोपतिर्गोपनायकः ।
प्राणीश्वरः प्रमाणज्ञो प्रमेयोऽज्ञाननाशनः ॥ ४७ ॥

हंसो हंसगतिर्मीनो ब्रह्मा लोकपितामहः।
यमुनाधीश्वरो याम्यो यमभीतिविमर्दनः ॥ ४८ ॥

नारायणो नारपूज्यो वसुवर्णो वसुप्रियः ।
वासवो बलहा वृत्रहन्ता यन्ता पराक्रमी ॥ ४९ ॥

बृहदीशो बृहद्भानुर्वर्द्धनो बालवः परः ।
शरभो नरसंहारी कोलशत्रुर्विभाकरः ॥ ५० ॥

रथचक्रो दशरथो रामः शस्त्रभृतां वरः ।
नारदीयो नरानन्दो नायकः प्रमथारिहा ॥ ५१ ॥

रुद्रो रौद्रो रुद्रमुख्यो रौद्रात्मा रोमवर्जितः ।
जलन्धरहरो हव्यो हविर्धामा बृहद्धविः ॥ ५२ ॥

रविः सप्तार्चिरनघो द्वादशात्मा दिवाकरः ।
प्रद्योतनो दिनपतिः सप्तसप्तिर्मरीचिमान् ॥ ५३ ॥

सोमोब्जो ग्लौश्च रात्रीशः कुजो जैवात्रिको बुधः ।
शुक्रो दैत्यगुरुर्भौमो भीमो भीमपराक्रमः ॥ ५४ ॥
शनिः पङ्गुर्मदान्धो वै भङ्गाभक्षणतत्परः ।
राहुः केतुः सैंहिकेयो ग्रहात्मा ग्रहपूजितः ॥ ५५ ॥

नक्षत्रेशोऽश्विनीनाथो मैनाकनिलयः शुभः ।
विन्ध्याटवीसमाच्छन्नः सेतुबन्धनिकेतनः ॥ ५६ ॥

कूर्मपर्वतवासी च वागीशो वाग्विदाम्वरः ।
योगेश्वरो महीनाथः पातालभुवनेश्वरः ॥ ५७ ॥

काशिनाथो नीलकेशो हरिकेशो मनोहरः ।
उमाकान्तो यमारातिर्बौद्धपर्वतनायकः ॥ ५८ ॥

तटासुरनिहन्ता च सर्वयज्ञसुपूजितः ।
गङ्गाद्वारनिवासो वै वीरभद्रो भयानकः ॥ ५९ ॥

भानुदत्तो भानुनाथो जरासन्धविमर्द्दनः ।
यवमालीश्वरः पारो गण्डकीनिलयो हरः ॥ ६० ॥

शालग्रामशिलावासी नर्मदातटपूजितः ।
बाणलिङ्गो बाणपिता बाणधिर्बाणपूजितः ॥ ६१ ॥

बाणासुरनिहन्ता च रामबाणो भयापहः ।
रामदूतो रामनाथो रामनारायणोऽव्ययः ॥ ६२ ॥
पार्वतीशः परामृष्टो नारदो नारपूजितः ।
पर्वतेशः पार्वतीयः पार्वतीप्राणवल्लभः ॥ ६३ ॥

सर्वेश्वरः सर्वकर्ता लोकाध्यक्षो महामतिः ।
निरालम्बो हठाध्यक्षो वननाथो वनाश्रयः ॥ ६४ ॥

श्मशानवासी दमनो मदनारिर्मदालयः ।
भूतवेतालसर्वस्वः स्कन्दः स्कन्दजनिर्जनः ॥ ६५ ॥

वेतालशतनाथो वै वेतालशतपूजितः ।
वेतालो भैरवाकारो वेतालनिलयो बलः ॥ ६६ ॥

भूर्भुवःस्वर्वषट्कारो भूतभव्यविभुर्महः ।
जनो महस्तपः सत्यं पातालनिलयो लयः ॥ ६७ ॥

पत्री पुष्पी फली तोयी महीरूपसमाश्रितः ।
स्वधा स्वाहा नमस्कारो भद्रो भद्रपतिर्भवः ॥ ६८ ॥

उमापतिर्व्योमकेशो भीमधन्वा भयानकः ।
पुष्टस्तुष्टोधराधारो बलिदो बलिभृद्बली ॥ ६९ ॥

ॐकारो नृमयो मायी विघ्नहर्ता गणाधिपः ।
ह्रीं ह्रौं गम्यो हौं जूँ सः हौं शिवाय नमो ज्वरः ॥ ७० ॥

द्राँ द्राँ रूपो दुराधर्षो नादबिन्द्वात्मकोऽनिलः ।
रस्तारो नेत्रनादश्च चण्डीशो मलयाचलः ॥ ७१ ॥

षडक्षरमहामन्त्रः शस्त्रभृच्छस्त्रनायकः ।
शास्त्रवेत्ता तु शास्त्रीशः शस्त्रमन्त्रप्रपूजितः ॥ ७२ ॥

निर्वपुः सुवपुः कान्तः कान्ताजनमनोहरः ।
भगमाली भगो भाग्यो भगहा भगपूजितः ॥ ७३ ॥

भगपूजनसन्तुष्टो महाभाग्यसुपूजितः ।
पूजारतो विपाप्मा च क्षितिबीजो धरोप्तिकृत् ॥ ७४ ॥

मण्डलो मण्डलाभासो मण्डलार्द्धो विमण्डलः ।
चन्द्रमण्डलपूज्यो वै रविमण्डलमन्दिरः ॥ ७५ ॥

सर्वमण्डलसर्वस्वः पूजामण्डलमण्डितः ।
पृथ्वीमण्डलवासश्च भक्तमण्डलपूजितः ॥ ७६ ॥

मण्डलात्परसिद्धिश्च महामण्डलमण्डलः ।
मुखमण्डलशोभाढ्यो राजमण्डलवर्जितः ॥ ७७ ॥

निष्प्रभः प्रभुरीशानो मृगव्याधो मृगारिहा ।
मृगाङ्कशोभो हेमाढ्यो हिमात्मा हिमसुन्दरः ॥ ७८ ॥
हेमहेमनिधिर्हैमो हिमानीशो हिमप्रियः ।
शीतवातसहः शंीतो ह्यशीतिगणसेवितः ॥ ७९ ॥

आशाश्रयो दिगात्मा च जीवो जीवाश्रयः पतिः ।
पतितांशी पतिः पान्थो निःपान्थोनर्थनाशकः ॥ ८० ॥

बुद्धिदो बुद्धिनिलयो बुद्धो बुद्धपतिर्धवः ।
मेधाकरो मेधमानो मध्योऽमध्यो मधुप्रियः ॥ ८१ ॥

मधुव्यो मधुमान्बन्धुर्धन्धुमारो धवाश्रयः ।
धर्मी धर्मप्रियो धन्यो धान्यराशिर्धनावहः ॥ ८२ ॥

धरात्मजो धनो धान्यो मान्यनाथो मदालसः ।
लम्बोदरोऽलङ्करिष्णुर्लङ्कानाथसुपूजितः ॥ ८३ ॥

लङ्काभस्मप्रियो लङ्को लङ्केशरिपुपूजितः ।
समुद्रो मकरावासो मकरन्दो मदान्वितः ॥ ८४ ॥

मथुरानाथको तन्द्रो मथुरावासतत्परः ।
वृन्दावनमनः प्रीतिर्वृन्दापूजितविग्रहः ॥ ८५ ॥

यमुनापुलिनावासः कंसचाणूरमर्दनः ।
अरिष्टहा शुभतनुर्माधवो माधवाग्रजः ॥ ८६ ॥

वसुदेवसुतः कृष्णः कृष्णाप्रियतमः शुचिः ।
कृष्णद्वैपायनो वेधाः सृष्टिसंहारकारकः ॥ ८७ ॥

चतुर्विधो विश्वहर्ता धाता धर्मपरायणः ।
यातुधानो महाकायो रक्षःकुलविनाशनः ॥ ८८ ॥

घण्टानादो महानादो भेरीशब्दपरायणः ।
परमेशः पराविज्ञो ज्ञानगम्यो गणेश्वरः ॥ ८९ ॥

पार्श्वमौलिश्चन्द्रमौलिर्धर्ममौलिः सुरारिहा ।
जङ्घाप्रतर्दनो जम्भो जम्भारातिरतीन्द्रियः ॥ ९० ॥

ॐकारगम्यो नादेशः सोमेशः सिद्धिकारणम् ।
अकारोऽमृतकल्पश्च आनन्दो वृषभध्वजः ॥ ९१ ॥

आत्मा रतिश्चात्मगम्यो यथार्थात्मा नरारिहा ।
इकारश्चेतिकालश्च इति होतिप्रभंजनः ॥ ९२ ॥

ईशितारिभवो ऋक्ष ऋकारवरपूजितः ।
ऌवर्णरूपो ॡकारो ऌवर्णस्थो लरात्मवान् ॥ ९३ ॥

ऐरूपो महानेत्री जन्ममृत्युविवर्जितः ।
ओतुरौतुरण्डजस्थो हन्तहन्ता कलाकरः ॥ ९४ ॥

कालीनाथः खञ्जनाक्षो खण्डोऽखण्डितविक्रमः ।
गन्धर्वेशो गणारातिर्घण्टाभरणपूजितः ॥ ९५ ॥

ङकारो ङीप्रत्ययश्च चामरश्चामराश्रयः ।
चीराम्बरधरश्चारुश्चारुचञ्चुश्वरेश्वरः [ञ्चुर्वरे] ॥ ९६ ॥

छत्री छत्रपतिश्छात्रश्छत्रेशश्छात्रपूजितः ।
झर्झरो झंकृतिर्झञ्झा झञ्झेशो झम्परो झरः ॥ ९७ ॥

झङ्केशाण्डधरो झारिष्टं कष्टं कारपूजितः ।
रोमहारिर्वृषारिश्च ढुण्डिराजो झलात्मजः ॥ ९८ ॥

ढोलशब्दरतो ढक्का ढकारेण प्रपूजितः ।
तारापतिस्ततस्तन्तुस्तारेशः स्तम्भसंश्रितः ॥ ९९ ॥

थवर्णस्थूत्करः स्थूलो दनुजो दनुजान्तकृत् ।
दाडिमीकुसुमप्रख्यो दान्तारिर्दर्दरातिगः ॥ १०० ॥

दन्तवक्त्रो दन्तजिह्वा दन्तवक्त्रविनाशनः ।
धवो धवाग्रजो धुन्धुधौन्धुमारिर्धराधरः ॥ १०१ ॥

धम्मिल्लिनीजनानन्दो धर्माधर्मविवर्जितः ।
नागेशो नागनिलियो नारदादिभिरर्चितः ॥ १०२ ॥

नन्दो नन्दीपतिर्नन्दी नन्दीश्वरसहायवान् ।
पणः पणीश्वरः पान्थः पाथेयः पथिकार्चितः ॥ १०३ ॥

पानीयाधिपतिः पाथः फलवान् फलसंस्कृतः ।
फणीशतविभूषा च फणीफूत्कारमण्डितः ॥ १०४ ॥

फालः फल्गुरथः फान्तो वेणुनाथो वनेचरः ।
वन्यप्रियो वनानन्दो वनस्पतिगणेश्वरः ॥ १०५ ॥

वालीनिहन्ता वाल्मीको वृन्दावनकुतूहली ।
वेणुनादप्रियो वैद्यो भगणो भगणार्चितः ॥ १०६ ॥

भेरुण्डो भासको भासी भास्करो भानुपूजितः ।
भद्रो भाद्रपदो भाद्रो भद्रदो भाद्रतत्परः ॥ १०७ ॥

मेनकापतिमन्द्राश्वो महामैनाकपर्वतः ।
मानवो मनुनाथश्च मदहा मदलोचनः ॥ १०८ ॥

यज्ञाशी याज्ञिको यामी यमभीतिविमर्दनः ।
यमको यमुनावासो यमसंयमदायकः ॥ १०९ ॥

रक्ताक्षो रक्तदन्तश्च राजसो राजसप्रियः ।
रन्तिदेवो रत्नमतीरामनाथो रमाप्रियः ॥ ११० ॥
लक्ष्मीकरो लाक्षणिको लक्षेशो लक्षपूजितः ।
लम्बोदरो लाङ्गलिको लक्षलाभपितामहः ॥ १११ ॥

बालको बालकप्रीतो वरेण्यो बालपूजितः ।
शर्वः शर्वी शरी शास्त्री शर्वरीगणसुन्दरः ॥ ११२ ॥

शाकाम्भरीपीठसंस्थः शाकपूजनतत्परः ।
षोढासमासनिलयः षण्ढः षाढवमन्दिरः ॥ ११३ ॥

षाण्डवाडम्बरः षाण्ड्यः षष्ठीपूजनतत्परः ।
सर्वेश्वरः सर्वतत्त्वः सामगम्योऽसमानकः ॥ ११४ ॥

सेतुः संसारसंहर्ता सारः सारस्वतप्रियः ।
हर्म्यनाथो हर्म्यकर्ता हेतुहा निहनो हरः ॥ ११५ ॥

हालाप्रियो हलापाङ्गो हनुमान्पतिरव्ययः ।
सर्वायुधधरोऽभीष्टो भयो भास्वान् भयान्तकृत् ॥ ११६ ॥

कुब्जाम्रकनिवासश्च झिण्टीशो वाग्विदांवरः ।
रेणुकादुःखहन्ता च विराटनगरस्थितः ॥ ११७ ॥

जमदग्निर्भार्गवो वै पुलस्त्यः पुलहः क्रतुः ।
क्रान्तिराजो द्रोणपुत्रोऽश्वत्थामा सुरथी कृपः ॥ ११८ ॥
कामाख्यनिलयो विश्वनिलयो भुवनेश्वरः ।
रघूद्वहो राज्यदाता राजनीतिकरो व्रणः ॥ ११९ ॥

राजराजेश्वरीकान्तो राजराजसुपूजितः ।
सर्वबन्धविनिर्मुक्तः सर्वदारिद्र्यनाशनः ॥ १२० ॥

जटामण्डलसर्वस्वो गंगाधारासुमण्डितः ।
जीवदाताशयो धेनुर्यादवो यदुपुंगवः ॥ १२१ ॥

मूर्खवागीश्वरो भर्गो मूर्खविद्या दयानिधिः ।
दीनदुःखनिहन्ता च दीनदाता दयार्णवः ॥ १२२ ॥

गङ्गातरङ्गभूषा च गङ्गाभक्तिपरायणः ।
भगीरथप्राणदाता ककुत्स्थनृपपूजितः ॥ १२३ ॥

मान्धातृजयदो वेणुः पृथुः पृथुयशः स्थिरः ।
जाल्मपादो जाल्मनाथो जाल्मप्रीतिविवर्द्धनः ॥ १२४ ॥

सन्ध्याभर्ता रौद्रवपुर्महानीलशिलास्थितः ।
शम्भलग्रामवासश्च प्रियानूपमपत्तनः ॥ १२५ ॥

शाण्डिल्यो ब्रह्मशौण्डाख्यः शारदो वैद्यजीवनः ।
राजवृक्षो ज्वरघ्नश्च निर्गुण्डीमूलसंस्थितः ॥ १२६ ॥
अतिसारहरो जातीवल्कबीजो जलं नभः ।
जाह्नवीदेशनिलयो भक्तग्रामनिकेतनः ॥ १२७ ॥

पुराणगम्यो गम्येशः स्कान्दादिप्रतिपादकः ।
अष्टादशपुराणानां कर्ता काव्येश्वरः प्रभुः ॥ १२८ ॥

जलयन्त्रो जलावासो जलधेनुर्जलोदरः ।
चिकित्सको भिषग्वैद्यो निर्लोभो लोभतस्करः ॥ १२९ ॥

चिदानन्दश्चिदाभासश्चिदात्मा चित्तवर्जितः ।
चित्स्वरूपश्चिरायुश्च चिरायुरभिदायकः ॥ १३० ॥

चीत्कारगुणसन्तुष्टोऽचलोनन्तप्रदायकः ।
मासः पक्षो ह्यहोरात्रमृतुस्त्वयनरूपकः ॥ १३१ ॥

सम्वत्सरः परः कालः कलाकाष्ठात्मकः कलिः ।
सत्यं त्रेता द्वापरश्च तथा स्वायम्भुवः स्मृतः ॥ १३२ ॥

स्वारोचिषस्तामसश्च औत्तमी रैवतस्तथा ।
चाक्षुषो वैवस्वतश्च सावर्णिः सूर्यसम्भवः ॥ १३३ ॥

दक्षसावर्णिको मेरुसावर्णिक इतिप्रभः ।
रौच्यो भौत्यस्तथा गव्यो भूतिदश्च तथा दरः ॥ १३४ ॥

रागज्ञानप्रदो रागी रागी रागपरायणः ।
नारदः प्राणनिलयो नीलाम्बरधरोऽव्ययः ॥ १३५ ॥

अनेकनामा गंगेशो गंगातीरनिकेतनः ।
गंगाजलनिवासश्च गंगाजलपरायणः ॥ १३६ ॥

**वसिष्ठ उवाच**

नाम्नामेतत्सहस्रं वै नारदेनोदितं तु यत् ।
तत्तेऽद्य कथितं देवि सर्वापत्तिनिवारणम् ॥ १३७ ॥

पठतः स्तोत्रमेतद्वै नाम्नां साहस्रमीशितुः ।
दारिद्र्यं नश्यते क्षिप्रं षड्भिर्मासैर्वरानने ॥ १३८ ॥

यस्येदं लिखितं गेहे स्तोत्रं वै परमात्मनः ।
नित्यं सन्निहतस्तत्र महादेवः शिवान्वितः ॥ १३९ ॥

स एव त्रिषु लोकेषु धन्यः स्यात् शिवभक्तितः ।
शिव एव परं ब्रह्म शिवात् नास्त्यपरः क्वचित् ॥ १४० ॥

ब्रह्मरूपेण सृजति पाल्यते विष्णुरूपिणा ।
रुद्ररूपेण नयति भस्मसात् स चराचरम् ॥ १४१ ॥

तस्मात्सर्वप्रयत्नेन मुमुक्षुः शिवमभ्यसेत् ।
स्तोत्रं सहस्रनामाख्यं पठित्वा श्रीशिवो भवेत् ॥ १४२ ॥

यं यं चिन्तयते कामं तं तं प्राप्नोत्यसंशयम् ।
पुत्रार्थी लभते पुत्रान् धनार्थी लभते धनम् ॥ १४३ ॥

राज्यार्थी लभते राज्यं यस्त्विदं नियतः पठेत् ।
दुःस्वप्ननाशनं पुण्यं सर्वपापप्रणाशनम् ॥ १४४ ॥

नास्मात् किञ्चिन्महाभागे ह्यन्यदस्ति महीतले ।
तावद् गर्जन्ति पापानि शरीरस्थान्यरुन्धति ॥ १४५ ॥

यावन्न पठते स्तोत्रं श्रीशिवस्य परात्मनः ।
सिंहचौरग्रहग्रस्तो मुच्यते पठनात्प्रिये ।
सर्वव्याधिविनुर्मुक्तो लभते परमं सुखम् ॥ १४६ ॥

प्रातरुत्थाय यः स्तोत्रं पठेत भक्तितत्परः ।
सर्वापत्तिविनिर्मुक्तो धनधान्यसुतान्वितः ।
जायते नात्र सन्देहः शिवस्य वचनं यथा ॥ १४७ ॥

**॥ इति श्रीस्कन्दमहापुराणे केदारखण्डे नारदकृतशिवसहस्रनाम-वर्णनं नाम चतुष्षष्टितमोऽध्यायः ॥**

## ॥ अथ नामावलिः ॥

१. ॐ श्रीशिवाय नमः ।
२. ॐ शिवदाय नमः ।
३. ॐ भव्याय नमः ।
४. ॐ भावगम्याय नमः ।
५. ॐ वृषाकपये नमः ।
६. ॐ वृषध्वजाय नमः ।
७. ॐ वृषारूढाय नमः ।
८. ॐ वृषकर्त्रे नमः ।
९. ॐ वृषेश्वराय नमः ।
१०. ॐ शिवाधिपाय नमः ।
११. ॐ शिताय नमः ।
१२. ॐ शम्भवे नमः ।
१३. ॐ स्वयम्भुवे नमः ।
१४. ॐ आत्मविदे नमः ।
१५. ॐ विभवे नमः ।
१६. ॐ सर्वज्ञाय नमः ।
१७. ॐ बहुहन्त्रे नमः ।
१८. ॐ भवानीपतये नमः ।
१९. ॐ अच्युताय नमः ।
२०. ॐ तन्त्रशास्त्रप्रमोदिने नमः ।
२१. ॐ तन्त्रशास्त्रप्रदर्शकाय नमः ।
२२. ॐ तन्त्रप्रियाय नमः ।
२३. ॐ तन्त्रगम्याय नमः ।
२४. ॐ अतन्त्राय नमः ।
२५. ॐ अनन्ततन्त्रकाय नमः ।
२६. ॐ तन्त्रीनादप्रियाय नमः ।
२७. ॐ देवाय नमः ।
२८. ॐ भक्ततन्त्रविमोहिताय नमः ।
२९. ॐ तन्त्रात्मने नमः ।
३०. ॐ तन्त्रनिलयाय नमः ।
३१. ॐ तन्त्रदर्शिने नमः ।
३२. ॐ सुतन्त्रकाय नमः ।
३३. ॐ महादेवाय नमः ।
३४. ॐ उमाकान्ताय नमः ।
३५. ॐ चन्द्रशेखराय नमः ।
३६. ॐ ईश्वराय नमः ।
३७. ॐ धूर्जटये नमः ।
३८. ॐ त्र्यम्बकाय नमः ।
३९. ॐ धूर्ताय नमः ।
४०. ॐ धूर्त्तशत्रवे नमः ।
४१. ॐ अमावसवे नमः ।
४२. ॐ वामदेवाय नमः ।
४३. ॐ मृडाय नमः ।
४४. ॐ शम्भवे नमः ।
४५. ॐ सुरेशाय नमः ।
४६. ॐ दैत्यमर्दनाय नमः ।
४७. ॐ अन्धकारहराय नमः ।
४८. ॐ दण्डाय नमः ।
४९. ॐ ज्योतिष्मते नमः ।

५०. ॐ हरिवल्लभाय नमः ।
५१. ॐ गङ्गाधराय नमः ।
५२. ॐ रमाकान्ताय नमः ।
५३. ॐ सर्वनाथाय नमः ।
५४. ॐ सुरारिघ्ने नमः ।
५५. ॐ प्रचण्डदैत्यविध्वंसिने नमः ।
५६. ॐ जम्भारातये नमः ।
५७. ॐ अरिन्दमाय नमः ।
५८. ॐ दानप्रियाय नमः ।
५९. ॐ दानदाय नमः ।
६०. ॐ दानतृप्ताय नमः ।
६१. ॐ दानवान्तकाय नमः ।
६२. ॐ करिदानप्रियाय नमः ।
६३. ॐ दानिने नमः ।
६४. ॐ दानात्मने नमः ।
६५. ॐ दानपूजिताय नमः ।
६६. ॐ दानगम्याय नमः ।
६७. ॐ ययातये नमः ।
६८. ॐ दयासिन्धवे नमः ।
६९. ॐ दयावहाय नमः ।
७०. ॐ भक्तिगम्याय नमः ।
७१. ॐ भक्तसेव्याय नमः ।
७२. ॐ भक्तिसन्तुष्टमानसाय नमः ।
७३. ॐ भक्ताभयप्रदाय नमः ।
७४. ॐ भक्ताय नमः ।
७५. ॐ भक्ताभीष्टप्रदायकाय नमः ।
७६. ॐ भानुमते नमः ।
७७. ॐ भानुनेत्राय नमः ।
७८. ॐ भानुवृन्दसमप्रभाय नमः ।
७९. ॐ सहस्रभानवे नमः ।
८०. ॐ स्वर्भानवे नमः ।
८१. ॐ आत्मभानवे नमः ।
८२. ॐ जयावहाय नमः ।
८३. ॐ जयन्ताय नमः ।
८४. ॐ जयदाय नमः ।
८५. ॐ यज्ञाय नमः ।
८६. ॐ यज्ञात्मने नमः ।
८७. ॐ यज्ञविदे नमः ।
८८. ॐ जयाय नमः ।
८९. ॐ जयसेनाय नमः ।
९०. ॐ जयत्सेनाय नमः ।
९१. ॐ विजयाय नमः ।
९२. ॐ विजयप्रियाय नमः ।
९३. ॐ जाज्वल्यमानाय नमः ।
९४. ॐ ज्यायसे नमः ।
९५. ॐ जलात्मने नमः ।
९६. ॐ जलजाय नमः ।
९७. ॐ जवाय नमः ।
९८. ॐ पुरातनाय नमः ।

९९. ॐ पुरारातये नमः ।
**१००. ॐ त्रिपुरघ्नाय नमः ।**
१०१. ॐ रिपुघ्नकाय नमः ।
१०२. ॐ पुराणाय नमः ।
१०३. ॐ पुरुषाय नमः ।
१०४. ॐ पुण्याय नमः ।
१०५. ॐ पुण्यगम्याय नमः ।
१०६. ॐ अतिपुण्यदाय नमः ।
१०७. ॐ प्रभञ्जनाय नमः ।
१०८. ॐ प्रभवे नमः ।
१०९. ॐ पूर्णाय नमः ।
११०. ॐ पूर्णदेवाय नमः ।
१११. ॐ प्रतापवते नमः ।
११२. ॐ प्रबलाय नमः ।
११३. ॐ अतिबलाय नमः ।
११४. ॐ देवाय नमः ।
११५. ॐ वेदवेद्याय नमः ।
११६. ॐ जनाधिपाय नमः ।
११७. ॐ नरेशाय नमः ।
११८. ॐ नारदाय नमः ।
११९. ॐ मानिने नमः ।
१२०. ॐ दैत्यमानविमर्दनाय नमः ।
१२१. ॐ अमानाय नमः ।
१२२. ॐ निर्ममाय नमः ।
१२३. ॐ मान्याय नमः ।
१२४. ॐ मानवाय नमः ।
१२५. ॐ मधुसूदनाय नमः ।
१२६. ॐ मनुपुत्राय नमः ।
१२७. ॐ मयारातये नमः ।
१२८. ॐ मङ्गलाय नमः ।
१२९. ॐ मङ्गलास्पदाय नमः ।
१३०. ॐ मालवाय नमः ।
१३१. ॐ मलयावासाय नमः ।
१३२. ॐ महोभिःसंयुताय नमः ।
१३३. ॐ अनलाय नमः ।
१३४. ॐ नलाराध्याय नमः ।
१३५. ॐ नीलवाससे नमः ।
१३६. ॐ नलात्मने नमः ।
१३७. ॐ नलपूजिताय नमः ।
१३८. ॐ नलाधीशाय नमः ।
१३९. ॐ नैगमिकाय नमः ।
१४०. ॐ निगमेन सुपूजिताय नमः ।
१४१. ॐ निगमावेद्यरूपाय नमः ।
१४२. ॐ धन्याय नमः ।
१४३. ॐ धेनवे नमः ।
१४४. ॐ अमित्रघ्ने नमः ।
१४५. ॐ कल्पवृक्षाय नमः ।
१४६. ॐ कामधेनवे नमः ।
१४७. ॐ धनुर्धारिणे नमः ।
१४८. ॐ महेश्वराय नमः ।
१४९. ॐ दामनाय नमः ।
१५०. ॐ दामिनीकान्ताय नमः ।

१५१. ॐ दामोदराय नमः ।
१५२. ॐ हरेश्वराय नमः ।
१५३. ॐ दमाय नमः ।
१५४. ॐ दान्ताय नमः ।
१५५. ॐ दयावते नमः ।
१५६. ॐ दानवेशाय नमः ।
१५७. ॐ दनुप्रियाय नमः ।
१५८. ॐ दन्वीश्वराय नमः ।
१५९. ॐ दमिने नमः ।
१६०. ॐ दन्तिने नमः ।
१६१. ॐ दन्वाराध्याय नमः ।
१६२. ॐ जनुप्रदाय नमः ।
१६३. ॐ आनन्दकराय नमः ।
१६४. ॐ मन्दारये नमः ।
१६५. ॐ मन्दारसुमपूजिताय नमः ।
१६६. ॐ नित्यानन्दाय नमः ।
१६७. ॐ महानन्दाय नमः ।
१६८. ॐ रमानन्दाय नमः ।
१६९. ॐ निराश्रयाय नमः ।
१७०. ॐ निर्जरसे नमः ।
१७१. ॐ निर्जरप्रीताय नमः ।
१७२. ॐ निर्जरेश्वरपूजिताय नमः ।
१७३. ॐ कैलासवासिने नमः ।
१७४. ॐ विश्वात्मने नमः ।
१७५. ॐ विश्वेशाय नमः ।
१७६. ॐ विश्वतत्पराय नमः ।
१७७. ॐ विश्वम्भराय नमः ।
१७८. ॐ विश्वसहाय नमः ।
१७९. ॐ विश्वरूपाय नमः ।
१८०. ॐ महीधराय नमः ।
१८१. ॐ केदारनिलयाय नमः ।
१८२. ॐ भर्त्रे नमः ।
१८३. ॐ धर्त्रे नमः ।
१८४. ॐ हर्त्रे नमः ।
१८५. ॐ हरीश्वराय नमः ।
१८६. ॐ विष्णुसेव्याय नमः ।
१८७. ॐ जिष्णुनाथाय नमः ।
१८८. ॐ जिष्णवे नमः ।
१८९. ॐ कृष्णाय नमः ।
१९०. ॐ धरापतये नमः ।
१९१. ॐ बदरीनायकाय नमः ।
१९२. ॐ नेत्रे नमः ।
१९३. ॐ रामभक्ताय नमः ।
१९४. ॐ रमाप्रियाय नमः ।
१९५. ॐ रमानाथाय नमः ।
१९६. ॐ रामसेव्याय नमः ।
१९७. ॐ शैव्यापतये नमः ।
१९८. ॐ अकल्मषाय नमः ।
१९९. ॐ धराधीशाय नमः ।
**२००. ॐ महानेत्राय नमः ।**

२०१. ॐ त्रिनेत्राय नमः ।
२०२. ॐ चारुविक्रमाय नमः ।
२०३. ॐ त्रिविक्रमाय नमः ।
२०४. ॐ विक्रमेशाय नमः ।
२०५. ॐ त्रिलोकेशाय नमः ।
२०६. ॐ त्रयीमयाय नमः ।
२०७. ॐ वेदगम्याय नमः ।
२०८. ॐ वेदवादिने नमः ।
२०९. ॐ वेदात्मने नमः ।
२१०. ॐ वेदवर्द्धनाय नमः ।
२११. ॐ देवेश्वराय नमः ।
२१२. ॐ देवपूज्याय नमः ।
२१३. ॐ वेदान्तार्थप्रचारकाय नमः ।
२१४. ॐ वेदान्तवेद्याय नमः ।
२१५. ॐ वैष्णवाय नमः ।
२१६. ॐ कवये नमः ।
२१७. ॐ काव्यकलाधराय नमः ।
२१८. ॐ कालात्मने नमः ।
२१९. ॐ कालहृते नमः ।
२२०. ॐ कालाय नमः ।
२२१. ॐ कलात्मने नमः ।
२२२. ॐ कालसूदनाय नमः ।
२२३. ॐ केलीप्रियाय नमः ।
२२४. ॐ सुकेलये नमः ।
२२५. ॐ कलङ्करहिताय नमः ।
२२६. ॐ क्रमाय नमः ।
२२७. ॐ कर्मकर्त्रे नमः ।
२२८. ॐ सुकर्मणे नमः ।
२२९. ॐ कर्मेशाय नमः ।
२३०. ॐ कर्मवर्जिताय नमः ।
२३१. ॐ मीमांसाशास्त्रवेत्रे नमः ।
२३२. ॐ शर्वाय नमः ।
२३३. ॐ मीमांसकप्रियाय नमः ।
२३४. ॐ प्रकृत्यै नमः ।
२३५. ॐ पुरुषाय नमः ।
२३६. ॐ पञ्चतत्त्वज्ञाय नमः ।
२३७. ॐ ज्ञानिनां वराय नमः ।
२३८. ॐ सांख्यशास्त्रप्रमोदिने नमः ।
२३९. ॐ संख्यावते नमः ।
२४०. ॐ पण्डिताय नमः ।
२४१. ॐ प्रभवे नमः ।
२४२. ॐ असंख्यातगुणग्रामाय नमः ।
२४३. ॐ गुणात्मने नमः ।
२४४. ॐ गुणवर्जिताय नमः ।
२४५. ॐ निर्गुणाय नमः ।
२४६. ॐ निरहङ्काराय नमः ।
२४७. ॐ रसाधीशाय नमः ।
२४८. ॐ रसप्रियाय नमः ।
२४९. ॐ रसास्वादिने नमः ।

२५०. ॐ रसावेद्याय नमः ।
२५१. ॐ नीरसाय नमः ।
२५२. ॐ नीरजप्रियाय नमः ।
२५३. ॐ निर्मलाय नमः ।
२५४. ॐ निरनुक्रोशिने नमः ।
२५५. ॐ निर्दन्ताय नमः ।
२५६. ॐ निर्भयप्रदाय नमः ।
२५७. ॐ गंगाख्यतोयाय नमः ।
२५८. ॐ गंगाख्याय नमः ।
२५९. ॐ गांगतोयाय नमः ।
२६०. ॐ मीनध्वजविमर्दनाय नमः ।
२६१. ॐ अन्धकारये नमः ।
२६२. ॐ बृहद्दंष्ट्राय नमः ।
२६३. ॐ बृहदश्वाय नमः ।
२६४. ॐ बृहत्तनवे नमः ।
२६५. ॐ बृहस्पतये नमः ।
२६६. ॐ सुराचार्याय नमः ।
२६७. ॐ गीर्वाणगणपूजिताय नमः ।
२६८. ॐ वासुदेवाय नमः ।
२६९. ॐ महाबाहवे नमः ।
२७०. ॐ विरूपाक्षाय नमः ।
२७१. ॐ विरूपकाय नमः ।
२७२. ॐ पूष्णो दन्तविनाशिने नमः ।
२७३. ॐ मुरारये नमः ।
२७४. ॐ भगनेत्रघ्ने नमः ।
२७५. ॐ वेदव्यासाय नमः ।
२७६. ॐ नागहाराय नमः ।
२७७. ॐ विषघ्ने नमः ।
२७८. ॐ विषनायकाय नमः ।
२७९. ॐ विरजसे नमः ।
२८०. ॐ सजलाय नमः ।
२८१. ॐ अनन्ताय नमः ।
२८२. ॐ वासुकये नमः ।
२८३. ॐ अपराजिताय नमः ।
२८४. ॐ बालाय नमः ।
२८५. ॐ वृद्धाय नमः ।
२८६. ॐ यूने नमः ।
२८७. ॐ मृत्यवे नमः ।
२८८. ॐ मृत्युघ्ने नमः ।
२८९. ॐ भालचन्द्रकाय नमः ।
२९०. ॐ बलभद्राय नमः ।
२९१. ॐ बलारातये नमः ।
२९२. ॐ दृढधन्वने नमः ।
२९३. ॐ वृषध्वजाय नमः ।
२९४. ॐ प्रमथेशाय नमः ।
२९५. ॐ गणपतये नमः ।
२९६. ॐ कार्तिकेयाय नमः ।
२९७. ॐ वृकोदराय नमः ।
२९८. ॐ अग्निगर्भाय नमः ।

२९९. ॐ अग्निनाभाय नमः ।
**३००. ॐ पद्मनाभाय नमः ।**
३०१. ॐ प्रभाकराय नमः ।
३०२. ॐ हिरण्यगर्भाय नमः ।
३०३. ॐ लोकेशाय नमः ।
३०४. ॐ वेणुनादाय नमः ।
३०५. ॐ प्रतर्दनाय नमः ।
३०६. ॐ वायवे नमः ।
३०७. ॐ भगाय नमः ।
३०८. ॐ वसवे नमः ।
३०९. ॐ भर्गाय नमः ।
३१०. ॐ दक्षाय नमः ।
३११. ॐ प्राचेतसाय नमः ।
३१२. ॐ मुनये नमः ।
३१३. ॐ नादब्रह्मरताय नमः ।
३१४. ॐ नादिने नमः ।
३१५. ॐ नन्दनावासाय नमः ।
३१६. ॐ अम्बराय नमः ।
३१७. ॐ अम्बरीषाय नमः ।
३१८. ॐ अम्बुनिलयाय नमः ।
३१९. ॐ जामदग्न्याय नमः ।
३२०. ॐ परात्पराय नमः ।
३२१. ॐ कृतवीर्यसुताय नमः ।
३२२. ॐ राज्ञे नमः ।
३२३. ॐ कार्त्तवीर्यप्रमर्दनाय नमः ।
३२४. ॐ जमदग्नये नमः ।
३२५. ॐ जातरूपाय नमः ।
३२६. ॐ जातरूपपरिच्छदाय नमः ।
३२७. ॐ कर्पूरगौराय नमः ।
३२८. ॐ गौरीशाय नमः ।
३२९. ॐ गोपतये नमः ।
३३०. ॐ गोपनायकाय नमः ।
३३१. ॐ प्राणीश्वराय नमः ।
३३२. ॐ प्रमाणज्ञाय नमः ।
३३३. ॐ प्रमेयाय नमः ।
३३४. ॐ अज्ञाननाशनाय नमः ।
३३५. ॐ हंसाय नमः ।
३३६. ॐ हंसगतये नमः ।
३३७. ॐ मीनाय नमः ।
३३८. ॐ ब्रह्मणे नमः ।
३३९. ॐ लोकपितामहाय नमः ।
३४०. ॐ यमुनाधीश्वराय नमः ।
३४१. ॐ याम्याय नमः ।
३४२. ॐ यमभीतिविमर्दनाय नमः ।
३४३. ॐ नारायणाय नमः ।
३४४. ॐ नारपूज्याय नमः ।
३४५. ॐ वसुवर्णाय नमः ।
३४६. ॐ वसुप्रियाय नमः ।
३४७. ॐ वासवाय नमः ।
३४८. ॐ बलघ्ने नमः ।
३४९. ॐ वृत्रहन्त्रे नमः ।

३५०. ॐ यन्त्रे नमः ।
३५१. ॐ पराक्रमिणे नमः ।
३५२. ॐ बृहदीशाय नमः ।
३५३. ॐ बृहद्भानवे नमः ।
३५४. ॐ वर्द्धनाय नमः ।
३५५. ॐ बालवाय नमः ।
३५६. ॐ पराय नमः ।
३५७. ॐ शरभाय नमः ।
३५८. ॐ नरसंहारिणे नमः ।
३५९. ॐ कोलशत्रवे नमः ।
३६०. ॐ विभाकराय नमः ।
३६१. ॐ रथचक्राय नमः ।
३६२. ॐ दशरथाय नमः ।
३६३. ॐ रामाय नमः ।
३६४. ॐ शस्त्रभृतां वराय नमः ।
३६५. ॐ नारदीयाय नमः ।
३६६. ॐ नरानन्दाय नमः ।
३६७. ॐ नायकाय नमः ।
३६८. ॐ प्रमथारिघ्ने नमः ।
३६९. ॐ रुद्राय नमः ।
३७०. ॐ रौद्राय नमः ।
३७१. ॐ रुद्रमुख्याय नमः ।
३७२. ॐ रौद्रात्मने नमः ।
३७३. ॐ रोमवर्जिताय नमः ।
३७४. ॐ जलन्धरहराय नमः ।
३७५. ॐ हव्याय नमः ।
३७६. ॐ हविषे नमः ।
३७७. ॐ धाम्ने नमः ।
३७८. ॐ बृहद्धवये नमः ।
३७९. ॐ रवये नमः ।
३८०. ॐ सप्तार्चये नमः ।
३८१. ॐ अनघाय नमः ।
३८२. ॐ द्वादशात्मने नमः ।
३८३. ॐ दिवाकराय नमः ।
३८४. ॐ प्रद्योतनाय नमः ।
३८५. ॐ दिनपतये नमः ।
३८६. ॐ सप्तसप्तये नमः ।
३८७. ॐ मरीचिमते नमः ।
३८८. ॐ सोमाय नमः ।
३८९. ॐ अब्जाय नमः ।
३९०. ॐ ग्लावे नमः ।
३९१. ॐ रात्रीशाय नमः ।
३९२. ॐ कुजाय नमः ।
३९३. ॐ जैवात्रिकाय नमः ।
३९४. ॐ बुधाय नमः ।
३९५. ॐ शुक्राय नमः ।
३९६. ॐ दैत्यगुरवे नमः ।
३९७. ॐ भौमाय नमः ।
३९८. ॐ भीमाय नमः ।
३९९. ॐ भीमपराक्रमाय नमः ।
**४००. ॐ शनये नमः ।**
४०१. ॐ पङ्गवे नमः ।

४०२. ॐ मदान्धाय नमः ।
४०३. ॐ भङ्गाभक्षणतत्पराय नमः ।
४०४. ॐ राहवे नमः ।
४०५. ॐ केतवे नमः ।
४०६. ॐ सैंहिकेयाय नमः ।
४०७. ॐ ग्रहात्मने नमः ।
४०८. ॐ ग्रहपूजिताय नमः ।
४०९. ॐ नक्षत्रेशाय नमः ।
४१०. ॐ अश्विनीनाथाय नमः ।
४११. ॐ मैनाकनिलयाय नमः ।
४१२. ॐ शुभाय नमः ।
४१३. ॐ विंध्याटवीसमाच्छन्नाय नमः ।
४१४. ॐ सेतुबन्धनिकेतनाय नमः ।
४१५. ॐ कूर्मपर्वतवासिने नमः ।
४१६. ॐ वागीशाय नमः ।
४१७. ॐ वाग्विदाम्वराय नमः ।
४१८. ॐ योगेश्वराय नमः ।
४१९. ॐ महीनाथाय नमः ।
४२०. ॐ पातालभुवनेश्वराय नमः ।
४२१. ॐ काशिनाथाय नमः ।
४२२. ॐ नीलकेशाय नमः ।
४२३. ॐ हरिकेशाय नमः ।
४२४. ॐ मनोहराय नमः ।
४२५. ॐ उमाकान्ताय नमः ।
४२६. ॐ यमारातये नमः ।
४२७. ॐ बौद्धपर्वतनायकाय नमः ।
४२८. ॐ तटासुरनिहन्त्रे नमः ।
४२९. ॐ सर्वयज्ञसुपूजिताय नमः ।
४३०. ॐ गंगाद्वारनिवासाय नमः ।
४३१. ॐ वीरभद्राय नमः ।
४३२. ॐ भयानकाय नमः ।
४३३. ॐ भानुदत्ताय नमः ।
४३४. ॐ भानुनाथाय नमः ।
४३५. ॐ जरासन्धविमर्द्दनाय नमः ।
४३६. ॐ यवमालीश्वराय नमः ।
४३७. ॐ पाराय नमः ।
४३८. ॐ गण्डकीनिलयाय नमः ।
४३९. ॐ हराय नमः ।
४४०. ॐ शालग्रामशिलावासिने नमः ।
४४१. ॐ नर्मदातटपूजिताय नमः ।
४४२. ॐ बाणलिंगाय नमः ।
४४३. ॐ बाणपित्रे नमः ।
४४४. ॐ बाणधये नमः ।
४४५. ॐ बाणपूजिताय नमः ।
४४६. ॐ बाणासुरनिहन्त्रे नमः ।
४४७. ॐ रामबाणाय नमः ।
४४८. ॐ भयापहाय नमः ।

४४९. ॐ रामदूताय नमः ।
४५०. ॐ रामनाथाय नमः ।
४५१. ॐ रामनारायणाय नमः ।
४५२. ॐ अव्ययाय नमः ।
४५३. ॐ पार्वतीशाय नमः ।
४५४. ॐ परामृष्टाय नमः ।
४५५. ॐ नारदाय नमः ।
४५६. ॐ नारपूजिताय नमः ।
४५७. ॐ पर्वतेशाय नमः ।
४५८. ॐ पार्वतीयाय नमः ।
४५९. ॐ पार्वतीप्राणवल्लभाय नमः ।
४६०. ॐ सर्वेश्वराय नमः ।
४६१. ॐ सर्वकर्त्रे नमः ।
४६२. ॐ लोकाध्यक्षाय नमः ।
४६३. ॐ महामतये नमः ।
४६४. ॐ निरालम्बाय नमः ।
४६५. ॐ हठाध्यक्षाय नमः ।
४६६. ॐ वननाथाय नमः ।
४६७. ॐ वनाश्रयाय नमः ।
४६८. ॐ श्मशानवासिने नमः ।
४६९. ॐ दमनाय नमः ।
४७०. ॐ मदनारये नमः ।
४७१. ॐ मदालयाय नमः ।
४७२. ॐ भूतवेतालसर्वस्वाय नमः ।
४७३. ॐ स्कन्दाय नमः ।
४७४. ॐ स्कन्दजनये नमः ।
४७५. ॐ जनाय नमः ।
४७६. ॐ वेतालशतनाथाय नमः ।
४७७. ॐ वेतालशतपूजिताय नमः ।
४७८. ॐ वेतालाय नमः ।
४७९. ॐ भैरवाकाराय नमः ।
४८०. ॐ वेतालनिलयाय नमः ।
४८१. ॐ बलाय नमः ।
४८२. ॐ भूर्भुवः स्वर्वषट्काराय नमः ।
४८३. ॐ भूतभव्यविभवे नमः ।
४८४. ॐ महसे नमः ।
४८५. ॐ जनाय नमः ।
४८६. ॐ महसे नमः ।
४८७. ॐ तपसे नमः ।
४८८. ॐ सत्याय नमः ।
४८९. ॐ पातालनिलयाय नमः ।
४९०. ॐ लयाय नमः ।
४९१. ॐ पत्रिणे नमः ।
४९२. ॐ पुष्पिणे नमः ।
४९३. ॐ फलिने नमः ।
४९४. ॐ तोयिने नमः ।
४९५. ॐ महीरूपसमाश्रिताय नमः ।
४९६. ॐ स्वधा नमः ।
४९७. ॐ स्वाहा नमः ।
४९८. ॐ नमस्काराय नमः ।
४९९. ॐ भद्राय नमः ।

**५००. ॐ भद्रपतये नमः ।**
५०१. ॐ भवाय नमः ।
५०२. ॐ उमापतये नमः ।
५०३. ॐ व्योमकेशाय नमः ।
५०४. ॐ भीमधन्वने नमः ।
५०५. ॐ भयानकाय नमः ।
५०६. ॐ पुष्टाय नमः ।
५०७. ॐ तुष्टाय नमः ।
५०८. ॐ धराधाराय नमः ।
५०९. ॐ बलिदाय नमः ।
५१०. ॐ बलिभृते नमः ।
५११. ॐ बलिने नमः ।
५१२. ॐ ॐकाराय नमः ।
५१३. ॐ नृमयाय नमः ।
५१४. ॐ मायिने नमः ।
५१५. ॐ विघ्नहर्त्रे नमः ।
५१६. ॐ गणाधिपाय नमः ।
५१७. ॐ ह्रीं ह्रौं गम्याय नमः ।
५१८. ॐ हौं जूँ सः हौं शिवाय नमः ।
५१९. ॐ ज्वराय नमः ।
५२०. ॐ द्राँ द्राँ रूपाय नमः ।
५२१. ॐ दुराधर्षाय नमः ।
५२२. ॐ नादबिन्द्वात्मकाय नमः ।
५२३. ॐ अनिलाय नमः ।
५२४. ॐ रस्ताराय नमः ।
५२५. ॐ नेत्रनादाय नमः ।
५२६. ॐ चण्डीशाय नमः ।
५२७. ॐ मलयाचलाय नमः ।
५२८. ॐ षडक्षरमहामन्त्राय नमः ।
५२९. ॐ शस्त्रभृते नमः ।
५३०. ॐ शस्त्रनायकाय नमः ।
५३१. ॐ शास्त्रवेत्रे नमः ।
५३२. ॐ शास्त्रीशाय नमः ।
५३३. ॐ शस्त्रमन्त्रप्रपूजिताय नमः ।
५३४. ॐ निर्वपुषे नमः ।
५३५. ॐ सुवपुषे नमः ।
५३६. ॐ कान्ताय नमः ।
५३७. ॐ कान्ताजनमनोहराय नमः ।
५३८. ॐ भगमालिने नमः ।
५३९. ॐ भगाय नमः ।
५४०. ॐ भाग्याय नमः ।
५४१. ॐ भगघ्ने नमः ।
५४२. ॐ भगपूजिताय नमः ।
५४३. ॐ भगपूजनसन्तुष्टाय नमः ।
५४४. ॐ महाभाग्यसुपूजिताय नमः ।
५४५. ॐ पूजारताय नमः ।
५४६. ॐ विपाप्मने नमः ।
५४७. ॐ क्षितिबीजाय नमः ।
५४८. ॐ धरोप्तिकृते नमः ।
५४९. ॐ मण्डलाय नमः ।

५५०. ॐ मण्डलाभासाय नमः ।
५५१. ॐ मण्डलार्द्धाय नमः ।
५५२. ॐ विमण्डलाय नमः ।
५५३. ॐ चन्द्रमण्डलपूज्याय नमः ।
५५४. ॐ रविमण्डलमन्दिराय नमः ।
५५५. ॐ सर्वमण्डलसर्वस्वाय नमः ।
५५६. ॐ पूजामण्डलमण्डिताय नमः ।
५५७. ॐ पृथ्वीमण्डलवासाय नमः ।
५५८. ॐ भक्तमण्डलपूजिताय नमः ।
५५९. ॐ मण्डलात्परसिद्धये नमः ।
५६०. ॐ महामण्डलमण्डलाय नमः ।
५६१. ॐ मुखमण्डलशोभाढ्याय नमः ।
५६२. ॐ राजमण्डलवर्जिताय नमः ।
५६३. ॐ निष्प्रभाय नमः ।
५६४. ॐ प्रभवे नमः ।
५६५. ॐ ईशानाय नमः ।
५६६. ॐ मृगव्याधाय नमः ।
५६७. ॐ मृगारिघ्ने नमः ।
५६८. ॐ मृगाङ्कशोभाय नमः ।
५६९. ॐ हेमाढ्याय नमः ।
५७०. ॐ हिमात्मने नमः ।
५७१. ॐ हिमसुन्दराय नमः ।
५७२. ॐ हेम्ने नमः ।
५७३. ॐ हेमनिधये नमः ।
५७४. ॐ हेमाय नमः ।
५७५. ॐ हिमानीशाय नमः ।
५७६. ॐ हिमप्रियाय नमः ।
५७७. ॐ शीतवातसहाय नमः ।
५७८. ॐ शीताय नमः ।
५७९. ॐ अशीतिगणसेविताय नमः ।
५८०. ॐ आशाश्रयाय नमः ।
५८१. ॐ दिगात्मने नमः ।
५८२. ॐ जीवाय नमः ।
५८३. ॐ जीवाश्रयाय नमः ।
५८४. ॐ पतये नमः ।
५८५. ॐ पतिताशिने नमः ।
५८६. ॐ पतये नमः ।
५८७. ॐ पान्थाय नमः ।
५८८. ॐ निःपान्थाय नमः ।
५८९. ॐ अनर्थनाशकाय नमः ।
५९०. ॐ बुद्धिदाय नमः ।

५९१. ॐ बुद्धिनिलयाय नमः ।
५९२. ॐ बुद्धाय नमः ।
५९३. ॐ बुद्धपतये नमः ।
५९४. ॐ धवाय नमः ।
५९५. ॐ मेधाकराय नमः ।
५९६. ॐ मेधमानाय नमः ।
५९७. ॐ मध्याय नमः ।
५९८. ॐ अमध्याय नमः ।
५९९. ॐ मधुप्रियाय नमः ।
**६००. ॐ मधुव्याय नमः ।**
६०१. ॐ मधुमते नमः ।
६०२. ॐ बन्धवे नमः ।
६०३. ॐ धन्धुमाराय नमः ।
६०४. ॐ धवाश्रयाय नमः ।
६०५. ॐ धर्मिणे नमः ।
६०६. ॐ धर्मप्रियाय नमः ।
६०७. ॐ धन्याय नमः ।
६०८. ॐ धान्यराशये नमः ।
६०९. ॐ धनावहाय नमः ।
६१०. ॐ धरात्मजाय नमः ।
६११. ॐ धनाय नमः ।
६१२. ॐ धान्याय नमः ।
६१३. ॐ मान्यनाथाय नमः ।
६१४. ॐ मदालसाय नमः ।
६१५. ॐ लम्बोदराय नमः ।
६१६. ॐ अलङ्करिष्णवे नमः ।
६१७. ॐ लंकानाथसुपूजिताय नमः ।
६१८. ॐ लंकाभस्मप्रियाय नमः ।
६१९. ॐ लंकाय नमः ।
६२०. ॐ लंकेशरिपुपूजिताय नमः ।
६२१. ॐ समुद्राय नमः ।
६२२. ॐ मकरावासाय नमः ।
६२३. ॐ मकरन्दाय नमः ।
६२४. ॐ मदान्विताय नमः ।
६२५. ॐ मथुरानाथकाय नमः ।
६२६. ॐ तन्द्राय नमः ।
६२७. ॐ मथुरावासतत्पराय नमः ।
६२८. ॐ वृन्दावनमनसे नमः ।
६२९. ॐ प्रीतये नमः ।
६३०. ॐ वृन्दापूजितविग्रहाय नमः ।
६३१. ॐ यमुनापुलिनावासाय नमः ।
६३२. ॐ कंसचाणूरमर्दनाय नमः ।
६३३. ॐ अरिष्टघ्ने नमः ।
६३४. ॐ शुभतनवे नमः ।
६३५. ॐ माधवाय नमः ।
६३६. ॐ माधवाग्रजाय नमः ।
६३७. ॐ वसुदेवसुताय नमः ।
६३८. ॐ कृष्णाय नमः ।
६३९. ॐ कृष्णाप्रियतमाय नमः ।
६४०. ॐ शुचये नमः ।
६४१. ॐ कृष्णद्वैपायनाय नमः ।

६४२. ॐ वेधसे नमः ।
६४३. ॐ सृष्टिसंहारकारकाय नमः ।
६४४. ॐ चतुर्विधाय नमः ।
६४५. ॐ विश्वहर्त्रे नमः ।
६४६. ॐ धात्रे नमः ।
६४७. ॐ धर्मपरायणाय नमः ।
६४८. ॐ यातुधानाय नमः ।
६४९. ॐ महाकायाय नमः ।
६५०. ॐ रक्षःकुलविनाशनाय नमः ।
६५१. ॐ घण्टानादाय नमः ।
६५२. ॐ महानादाय नमः ।
६५३. ॐ भेरीशब्दपरायणाय नमः ।
६५४. ॐ परमेशाय नमः ।
६५५. ॐ पराविज्ञाय नमः ।
६५६. ॐ ज्ञानगम्याय नमः ।
६५७. ॐ गणेश्वराय नमः ।
६५८. ॐ पार्श्वमौलये नमः ।
६५९. ॐ चन्द्रमौलये नमः ।
६६०. ॐ धर्ममौलये नमः ।
६६१. ॐ सुरारिघ्ने नमः ।
६६२. ॐ जङ्घाप्रतर्दनाय नमः ।
६६३. ॐ जम्भाय नमः ।
६६४. ॐ जम्भारातये नमः ।
६६५. ॐ अतीन्द्रियाय नमः ।
६६६. ॐ ॐकारगम्याय नमः ।
६६७. ॐ नादेशाय नमः ।
६६८. ॐ सोमेशाय नमः ।
६६९. ॐ सिद्धिकारणाय नमः ।
६७०. ॐ अकाराय नमः ।
६७१. ॐ अमृतकल्पाय नमः ।
६७२. ॐ आनन्दाय नमः ।
६७३. ॐ वृषभध्वजाय नमः ।
६७४. ॐ आत्मने नमः ।
६७५. ॐ रतये नमः ।
६७६. ॐ आत्मगम्याय नमः ।
६७७. ॐ यथार्थात्मने नमः ।
६७८. ॐ नरारिघ्ने नमः ।
६७९. ॐ इकाराय नमः ।
६८०. ॐ इतिकालाय नमः ।
६८१. ॐ इति होतिप्रभञ्जनाय नमः ।
६८२. ॐ ईशितारिभवाय नमः ।
६८३. ॐ ऋक्षाय नमः ।
६८४. ॐ ऋकारवरपूजिताय नमः ।
६८५. ॐ लृवर्णरूपाय नमः ।
६८६. ॐ लृकाराय नमः ।
६८७. ॐ लृवर्णस्थाय नमः ।
६८८. ॐ लरात्मवते नमः ।
६८९. ॐ ऐरूपाय नमः ।

६९०. ॐ महानेत्रिणे नमः ।
६९१. ॐ जन्ममृत्युविवर्जिताय नमः ।
६९२. ॐ ओतवे नमः ।
६९३. ॐ औतवे नमः ।
६९४. ॐ अण्डजस्थाय नमः ।
६९५. ॐ हन्तहन्त्रे नमः ।
६९६. ॐ कलाकराय नमः ।
६९७. ॐ कालीनाथाय नमः ।
६९८. ॐ खञ्जनाक्षाय नमः ।
६९९. ॐ खण्डाय नमः ।
**७००. ॐ अखण्डितविक्रमाय नमः ।**
७०१. ॐ गन्धर्वेशाय नमः ।
७०२. ॐ गणारातये नमः ।
७०३. ॐ घण्टाभरणपूजिताय नमः ।
७०४. ॐ ङकाराय नमः ।
७०५. ॐ ङीप्रत्ययाय नमः ।
७०६. ॐ चामराय नमः ।
७०७. ॐ अमराश्रयाय नमः ।
७०८. ॐ चीराम्बरधराय नमः ।
७०९. ॐ चारवे नमः ।
७१०. ॐ चारुचञ्चुश्वरेश्वराय नमः ।
[७११. ॐ चारुचञ्चवे वरेश्वराय नमः ।]
७१२. ॐ छत्रिणे नमः ।
७१३. ॐ छत्रपतये नमः ।
७१४. ॐ छात्राय नमः ।
७१५. ॐ छत्रेशाय नमः ।
७१६. ॐ छात्रपूजिताय नमः ।
७१७. ॐ झर्झराय नमः ।
७१८. ॐ झंकृतये नमः ।
७१९. ॐ झञ्झायै नमः ।
७२०. ॐ झञ्झेशाय नमः ।
७२१. ॐ झम्पराय नमः ।
७२२. ॐ झराय नमः ।
७२३. ॐ झङ्केशाण्डधराय नमः ।
७२४. ॐ झारिष्टाय नमः ।
७२५. ॐ कष्टाय नमः ।
७२६. ॐ कारपूजिताय नमः ।
७२७. ॐ रोमहारये नमः ।
७२८. ॐ वृषारये नमः ।
७२९. ॐ ढुण्डिराजाय नमः ।
७३०. ॐ झलात्मजाय नमः ।
७३१. ॐ ढोलशब्दरताय नमः ।
७३२. ॐ ढक्कायै नमः ।
७३३. ॐ ढकारेण प्रपूजिताय नमः ।
७३४. ॐ तारापतये नमः ।
७३५. ॐ तन्तवे नमः ।
७३६. ॐ तारेशाय नमः ।
७३७. ॐ स्त[illegible]संश्रिताय नमः ।

७३८. ॐ थवर्णाय नमः ।
७३९. ॐ थूत्कराय नमः ।
७४०. ॐ स्थूलाय नमः ।
७४१. ॐ दनुजाय नमः ।
७४२. ॐ दनुजान्तकृते नमः ।
७४३. ॐ दाडिमीकुसुमप्रख्याय नमः ।
७४४. ॐ दान्तारये नमः ।
७४५. ॐ दर्दरातिगाय नमः ।
७४६. ॐ दन्तवक्त्राय नमः ।
७४७. ॐ दन्तजिह्वायै नमः ।
७४८. ॐ दन्तवक्त्रविनाशनाय नमः ।
७४९. ॐ धवाय नमः ।
७५०. ॐ धवाग्रजाय नमः ।
७५१. ॐ धुन्धुधौन्धुमारये नमः ।
७५२. ॐ धराधराय नमः ।
७५३. ॐ धम्मिल्लिनिने नमः ।
७५४. ॐ जनानन्दाय नमः ।
७५५. ॐ धर्माधर्मविवर्जिताय नमः ।
७५६. ॐ नागेशाय नमः ।
७५७. ॐ नागनिलियाय नमः ।
७५८. ॐ नारदादिभिरर्चिताय नमः ।
७५९. ॐ नन्दाय नमः ।
७६०. ॐ नन्दीपतये नमः ।
७६१. ॐ नन्दिने नमः ।
७६२. ॐ नन्दीश्वरसहायवते नमः ।
७६३. ॐ पणाय नमः ।
७६४. ॐ पणीश्वराय नमः ।
७६५. ॐ पान्थाय नमः ।
७६६. ॐ पाथेयाय नमः ।
७६७. ॐ पथिकार्चिताय नमः ।
७६८. ॐ पानीयाधिपतये नमः ।
७६९. ॐ पाथाय नमः ।
७७०. ॐ फलवते नमः ।
७७१. ॐ फलसंस्कृताय नमः ।
७७२. ॐ फणीशतविभूषायै नमः ।
७७३. ॐ फणीफूत्कारमण्डिताय नमः ।
७७४. ॐ फालाय नमः ।
७७५. ॐ फल्गुरथाय नमः ।
७७६. ॐ फान्ताय नमः ।
७७७. ॐ वेणुनाथाय नमः ।
७७८. ॐ वनेचराय नमः ।
७७९. ॐ वन्यप्रियाय नमः ।
७८०. ॐ वनानन्दाय नमः ।
७८१. ॐ वनस्पतिगणेश्वराय नमः ।
७८२. ॐ वालीनिहन्त्रे नमः ।
७८३. ॐ वाल्मीकाय नमः ।

७८४. ॐ वृन्दावनकुतूहलिने नमः ।
७८५. ॐ वेणुनादप्रियाय नमः ।
७८६. ॐ वैद्याय नमः ।
७८७. ॐ भगणाय नमः ।
७८८. ॐ भगणार्चिताय नमः ।
७८९. ॐ भेरुण्डाय नमः ।
७९०. ॐ भासकाय नमः ।
७९१. ॐ भासिने नमः ।
७९२. ॐ भास्कराय नमः ।
७९३. ॐ भानुपूजिताय नमः ।
७९४. ॐ भद्राय नमः ।
७९५. ॐ भाद्रपदाय नमः ।
७९६. ॐ भाद्राय नमः ।
७९७. ॐ भद्रदाय नमः ।
७९८. ॐ भाद्रतत्पराय नमः ।
७९९. ॐ मेनकापतिमन्द्राश्वाय नमः ।
**८००. ॐ महामैनाकपर्वताय नमः ।**
८०१. ॐ मानवाय नमः ।
८०२. ॐ मनुनाथाय नमः ।
८०३. ॐ मदघ्ने नमः ।
८०४. ॐ मदलोचनाय नमः ।
८०५. ॐ यज्ञाशिने नमः ।
८०६. ॐ याज्ञिकाय नमः ।
८०७. ॐ यामिने नमः ।
८०८. ॐ यमभीतिविमर्दनाय नमः ।
८०९. ॐ यमकाय नमः ।
८१०. ॐ यमुनावासाय नमः ।
८११. ॐ यमसंयमदायकाय नमः ।
८१२. ॐ रक्ताक्षाय नमः ।
८१३. ॐ रक्तदन्ताय नमः ।
८१४. ॐ राजसाय नमः ।
८१५. ॐ राजसप्रियाय नमः ।
८१६. ॐ रन्तिदेवाय नमः ।
८१७. ॐ रत्नमतये नमः ।
८१८. ॐ रामनाथाय नमः ।
८१९. ॐ रमाप्रियाय नमः ।
८२०. ॐ लक्ष्मीकराय नमः ।
८२१. ॐ लाक्षणिकाय नमः ।
८२२. ॐ लक्षेशाय नमः ।
८२३. ॐ लक्षपूजिताय नमः ।
८२४. ॐ लम्बोदराय नमः ।
८२५. ॐ लाङ्गलिकाय नमः ।
८२६. ॐ लक्षलाभपितामहाय नमः ।
८२७. ॐ बालकाय नमः ।
८२८. ॐ बालकप्रीताय नमः ।
८२९. ॐ वरेण्याय नमः ।
८३०. ॐ बालपूजिताय नमः ।
८३१. ॐ शर्वाय नमः ।

८३२. ॐ शर्विणे नमः ।
८३३. ॐ शरिणे नमः ।
८३४. ॐ शास्त्रिणे नमः ।
८३५. ॐ शर्वरीगणसुन्दराय नमः ।
८३६. ॐ शाकाम्भरीपीठसंस्थाय नमः ।
८३७. ॐ शाकपूजनतत्पराय नमः ।
८३८. ॐ षोढासमासनिलयाय नमः ।
८३९. ॐ षण्ढाय नमः ।
८४०. ॐ षाढवमन्दिराय नमः ।
८४१. ॐ षाण्डवाडम्बराय नमः ।
८४२. ॐ षाण्ड्याय नमः ।
८४३. ॐ षष्ठीपूजनतत्पराय नमः ।
८४४. ॐ सर्वेश्वराय नमः ।
८४५. ॐ सर्वतत्त्वाय नमः ।
८४६. ॐ सामगम्याय नमः ।
८४७. ॐ असमानकाय नमः ।
८४८. ॐ सेतवे नमः ।
८४९. ॐ संसारसंहर्त्रे नमः ।
८५०. ॐ साराय नमः ।
८५१. ॐ सारस्वतप्रियाय नमः ।
८५२. ॐ हर्म्यनाथाय नमः ।
८५३. ॐ हर्म्यकर्त्रे नमः ।
८५४. ॐ हेतुघ्ने नमः ।
८५५. ॐ निह्नाय नमः ।
८५६. ॐ हराय नमः ।
८५७. ॐ हालाप्रियाय नमः ।
८५८. ॐ हलापाङ्गाय नमः ।
८५९. ॐ हनुमते नमः ।
८६०. ॐ पतये नमः ।
८६१. ॐ अव्ययाय नमः ।
८६२. ॐ सर्वायुधधराय नमः ।
८६३. ॐ अभीष्टाय नमः ।
८६४. ॐ भयाय नमः ।
८६५. ॐ भास्वते नमः ।
८६६. ॐ भयान्तकृते नमः ।
८६७. ॐ कुब्जाम्रकनिवासाय नमः ।
८६८. ॐ झिण्टीशाय नमः ।
८६९. ॐ वाग्विदाम्वराय नमः ।
८७०. ॐ रेणुकायै नमः ।
८७१. ॐ दुःखहन्त्रे नमः ।
८७२. ॐ विराटनगरस्थिताय नमः ।
८७३. ॐ जमदग्नये नमः ।
८७४. ॐ भार्गवाय नमः ।
८७५. ॐ पुलस्त्याय नमः ।

८७६. ॐ पुलहाय नमः ।
८७७. ॐ क्रतवे नमः ।
८७८. ॐ क्रान्तिराजाय नमः ।
८७९. ॐ द्रोणपुत्राय नमः ।
८८०. ॐ अश्वत्थाम्ने नमः ।
८८१. ॐ सुरथिने नमः ।
८८२. ॐ कृपाय नमः ।
८८३. ॐ कामाख्यनिलयाय नमः ।
८८४. ॐ विश्वनिलयाय नमः ।
८८५. ॐ भुवनेश्वराय नमः ।
८८६. ॐ रघूद्वहाय नमः ।
८८७. ॐ राज्यदात्रे नमः ।
८८८. ॐ राजनीतिकराय नमः ।
८८९. ॐ व्रणाय नमः ।
८९०. ॐ राजराजेश्वरीकान्ताय नमः ।
८९१. ॐ राजराजसुपूजिताय नमः ।
८९२. ॐ सर्वबन्धविनिर्मुक्ताय नमः ।
८९३. ॐ सर्वदारिद्र्यनाशनाय नमः ।
८९४. ॐ जटामण्डलसर्वस्वाय नमः ।
८९५. ॐ गंगाधारासुमण्डिताय नमः ।
८९६. ॐ जीवदाताशयाय नमः ।
८९७. ॐ धेनवे नमः ।
८९८. ॐ यादवाय नमः ।
८९९. ॐ यदुपुंगवाय नमः ।
९००. ॐ **मूर्खवागीश्वराय नमः ।**
९०१. ॐ भर्गाय नमः ।
९०२. ॐ मूर्खविद्यायै नमः ।
९०३. ॐ दयानिधये नमः ।
९०४. ॐ दीनदुःखनिहन्त्रे नमः ।
९०५. ॐ दीनदात्रे नमः ।
९०६. ॐ दयार्णवाय नमः ।
९०७. ॐ गंगातरंगभूषायै नमः ।
९०८. ॐ गंगाभक्तिपरायणाय नमः ।
९०९. ॐ भगीरथप्राणदात्रे नमः ।
९१०. ॐ ककुत्स्थनृपपूजिताय नमः ।
९११. ॐ मान्धातृजयदाय नमः ।
९१२. ॐ वेणवे नमः ।
९१३. ॐ पृथवे नमः ।
९१४. ॐ पृथुयशसे नमः ।
९१५. ॐ स्थिराय नमः ।
९१६. ॐ जाल्मपादाय नमः ।
९१७. ॐ जाल्मनाथाय नमः ।
९१८. ॐ जाल्मप्रीतिविवर्द्धनाय नमः ।

९१९. ॐ सन्ध्याभर्त्रे नमः ।
९२०. ॐ रौद्रवपुषे नमः ।
९२१. ॐ महानीलशिलास्थिताय नमः ।
९२२. ॐ शंभलग्रामवासाय नमः ।
९२३. ॐ प्रियानूपमपत्तनाय नमः ।
९२४. ॐ शाण्डिल्याय नमः ।
९२५. ॐ ब्रह्मशौण्डाख्याय नमः ।
९२६. ॐ शारदाय नमः ।
९२७. ॐ वैद्यजीवनाय नमः ।
९२८. ॐ राजवृक्षाय नमः ।
९२९. ॐ ज्वरघ्नाय नमः ।
९३०. ॐ निर्गुण्डीमूलसंस्थिताय नमः ।
९३१. ॐ अतिसारहराय नमः ।
९३२. ॐ जातीवल्कबीजाय नमः ।
९३३. ॐ जलाय नमः ।
९३४. ॐ नभाय नमः ।
९३५. ॐ जाह्नवीदेशनिलयाय नमः ।
९३६. ॐ भक्तग्रामनिकेतनाय नमः ।
९३७. ॐ पुराणगम्याय नमः ।
९३८. ॐ गम्येशाय नमः ।
९३९. ॐ स्कान्दादिप्रतिपादकाय नमः ।
९४०. ॐ अष्टादशपुराणानां कर्त्रे नमः ।
९४१. ॐ काव्येश्वराय नमः ।
९४२. ॐ प्रभवे नमः ।
९४३. ॐ जलयन्त्राय नमः ।
९४४. ॐ जलावासाय नमः ।
९४५. ॐ जलधेनवे नमः ।
९४६. ॐ जलोदराय नमः ।
९४७. ॐ चिकित्सकाय नमः ।
९४८. ॐ भिषजे नमः ।
९४९. ॐ वैद्याय नमः ।
९५०. ॐ निर्लोभाय नमः ।
९५१. ॐ लोभतस्कराय नमः ।
९५२. ॐ चिदानन्दाय नमः ।
९५३. ॐ चिदाभासाय नमः ।
९५४. ॐ चिदात्मने नमः ।
९५५. ॐ चित्तवर्जिताय नमः ।
९५६. ॐ चित्स्वरूपाय नमः ।
९५७. ॐ चिरायुषे नमः ।
९५८. ॐ चिरायुरभिदायकाय नमः ।
९५९. ॐ चीत्कारगुणसन्तुष्टाय नमः ।

९६०. ॐ अचलाय नमः ।
९६१. ॐ अनन्तप्रदायकाय नमः ।
९६२. ॐ मासाय नमः ।
९६३. ॐ पक्षाय नमः ।
९६४. ॐ अहोरात्राय नमः ।
९६५. ॐ ऋतवे नमः ।
९६६. ॐ अयनरूपकाय नमः ।
९६७. ॐ सम्वत्सराय नमः ।
९६८. ॐ पराय नमः ।
९६९. ॐ कालाय नमः ।
९७०. ॐ कलाकाष्ठात्मकाय नमः ।
९७१. ॐ कलये नमः ।
९७२. ॐ सत्याय नमः ।
९७३. ॐ त्रेतायै नमः ।
९७४. ॐ द्वापराय नमः ।
९७५. ॐ स्वायम्भुवाय नमः ।
९७६. ॐ स्मृताय नमः ।
९७७. ॐ स्वारोचिषाय नमः ।
९७८. ॐ तामसाय नमः ।
९७९. ॐ औत्तमिने नमः ।
९८०. ॐ रैवताय नमः ।
९८१. ॐ चाक्षुषाय नमः ।
९८२. ॐ वैवस्वताय नमः ।
९८३. ॐ सावर्णये नमः ।
९८४. ॐ सूर्यसम्भवाय नमः ।
९८५. ॐ दक्षसावर्णिकाय नमः ।
९८६. ॐ मेरुसावर्णिकाय नमः ।
९८७. ॐ इतिप्रभाय नमः ।
९८८. ॐ रौच्याय नमः ।
९८९. ॐ भौत्याय नमः ।
९९०. ॐ गव्याय नमः ।
९९१. ॐ भूतिदाय नमः ।
९९२. ॐ दराय नमः ।
९९३. ॐ रागज्ञानप्रदाय नमः ।
९९४. ॐ रागिणे नमः ।
९९५. ॐ रागिणे नमः ।
९९६. ॐ रागपरायणाय नमः ।
९९७. ॐ नारदाय नमः ।
९९८. ॐ प्राणनिलयाय नमः ।
९९९. ॐ नीलाम्बरधराय नमः ।
**१०००. ॐ अव्ययाय नमः ।**
१००१. ॐ अनेकनाम्ने नमः ।
१००२. ॐ गंगेशाय नमः ।
१००३. ॐ गंगातीरनिकेतनाय नमः ।
१००४. ॐ गंगाजलनिवासाय नमः ।
१००५. ॐ गंगाजलपरायणाय नमः ।

॥ ॐ तत्सत् ॥

ॐ

श्रीसौरपुराणान्तर्गतं

# श्रीशिवसहस्रनामस्तोत्रम्

## ऋषय ऊचुः

सुदर्शनाख्यं यच्चक्रं लब्धवांस्तत्कथं हरिः ।
महादेवाद्भगवतः सूत तद्वक्तुमर्हसि ॥ १ ॥

## सूत उवाच

देवासुराणामभवत्सङ्ग्रामोऽद्भुतदर्शनः ।
देवा विनिर्जिता दैत्यैर्विष्णुं शरणमागताः ॥ २ ॥

स्तुत्वा तं विविधैः स्तोत्रैः प्रणम्य पुरतः स्थिताः ।
भयभीताश्च ते सर्वे क्षताङ्गाः क्लेशिता भृशम् ॥ ३ ॥

तान्दृष्ट्वा प्राह भगवान्देवदेवो जनार्दनः ।
किमर्थमागता देवा वक्तुमर्हथ साम्प्रतम् ॥ ४ ॥

वचः श्रुत्वा हरेर्देवाः प्रणम्योचुः सुरोत्तमाः ।
निर्जिता दानवैः सर्वे शरणं त्वामिहाऽऽगताः ॥ ५ ॥

गतिस्त्वमेव देवानां त्राता त्वं पुरुषोत्तम ।
हन्तुमर्हसि तान्शीघ्रमवध्यान्वारिजेक्षण ॥ ६ ॥

जालंधरवधार्थाय यच्चक्रं शूलपाणिनः।
महादेववराल्लब्धं जहि तेन महाबलान् ॥ ७ ॥

तेषां तद्वचनं श्रुत्वा भगवान्वारिजेक्षणः ।
अहं देवास्तथा नूनं करिष्यामीति सुव्रताः ॥ ८ ॥

हिमवत्पर्वतं गत्वा पूजयामास शंकरम् ।
लिङ्गं तत्र प्रतिष्ठाप्य स्नाप्य गन्धोदकैः शुभैः ॥ ९ ॥

त्वरिताख्येन रुद्रेण संपूज्य च महेश्वरम् ।
ततो नाम्नां सहस्रेण तुष्टाव परमेश्वरम् ॥ १० ॥

प्रतिनाम च पद्मानि तैरिष्ट्वा वृषभध्वजम् ।
भवाद्यैर्नामभिर्भक्त्या स्तोतुं समुपचक्रमे ॥ ११ ॥

**विष्णुरुवाच**

भवः शिवो हरो रुद्रः पुष्कलो मुग्धलोचनः ।
अग्रगण्यः सदाचारः सर्वः शंभुर्महेश्वरः ॥ १२ ॥

ईश्वरः स्थाणुरीशानः सहस्राक्षः सहस्रपात् ।
वरीयान्वरदो वन्द्यः शंकरः परमेश्वरः ॥ १३ ॥

गङ्गाधरः शूलधरः परार्थैकप्रयोजकः ।
सर्वज्ञः सर्वदेवादिर्गिरिधन्वा जटाधरः ॥ १४ ॥

चन्द्रापीडश्चन्द्रमौलिर्वेधा विश्वामरेश्वरः ।
वेदान्तसारसंदोहः कपाली नीललोहितः ॥ १५ ॥

ध्यानाहारोऽपरिच्छेद्यो गौरीभर्ता गणेश्वरः ।
अष्टमूर्तिर्विश्वमूर्तिस्त्रिवर्गः स्वर्गसाधनः ॥ १६ ॥

ज्ञानगम्यो दृढप्रज्ञो देवदेवस्त्रिलोचनः ।
वामदेवो महादेवः पटुः परिवृढो दृढः ॥ १७ ॥

विश्वरूपो विरूपाक्षो वागीशः श्रुतिमन्त्रगः ।
सर्वप्रणवसंवादी वृषाङ्को वृषवाहनः ॥ १८ ॥

ईशः पिनाकी खट्वाङ्गी चित्रवेषश्चिरंतनः ।
मनोमयो महायोगी स्थिरो ब्रह्माण्डधूर्जटी ॥ १९ ॥

कालकालः कृत्तिवासाः सुभगः प्रणवात्मकः ।
नागचूडः सुचक्षुष्यो दुर्वासा पुरशासनः ॥ २० ॥

दृगायुधः स्कन्दगुरुः परमेष्ठी परायणः ।
अनादिमध्यनिधनो गिरीशो गिरिजाधवः ॥ २१ ॥

कुबेरबन्धुः श्रीकण्ठो लोकवन्द्योत्तमो मृदुः ।
सामान्यो देवको दण्डी नीलकण्ठः परश्वधी ॥ २२ ॥

विशालाक्षो महाव्याधः सुरेशः सूर्यतापनः ।
धर्मधामा क्षमाक्षेत्रं भगवान्भगनेत्रहा ॥ २३ ॥

उग्रः पशुपतिस्तार्क्ष्यः प्रियभक्तः प्रियंवदः ।
दाता दयाकरो दक्षः कपर्दी कामशासनः ॥ २४ ॥

श्मशाननिलयस्तिष्यः श्मशानस्थो महेश्वरः ।
लोककर्ता भूतपतिर्महाकर्ता महौषधिः ॥ २५ ॥

उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः ।
नीतिः सुनीतिः शुद्धात्मा सोमः सोमरतः सुधीः ॥ २६ ॥

सोमपोऽमृतपः सौम्यो महानीतिर्महास्मृतिः ।
अजातशत्रुरालोक्यः संभाव्यो हव्यवाहनः ॥ २७ ॥

लोककारो वेदकारः सूत्रकारः सनातनः ।
महर्षिः कपिलाचार्यो विश्वदीप्तिर्विलोचनः ॥ २८ ॥

पिनाकपाणिर्भूदेवः स्वस्तिकृत्स्वस्तिदः सुधा ।
धात्रीधामा धामकरः सर्वगः सर्वगोचरः ॥ २९ ॥

ब्रह्मसृग्विश्वसृक्सर्गः कर्णिकारः प्रियः कविः ।
शाखो विशाखो गोशाखः शिवो भिषगनुत्तमः ॥ ३० ॥

गङ्गाप्लवोदको भव्यः पुष्कलः स्थपतिः स्थितः ।
विजितात्मा विधेयात्मा भूतवाहनसारथिः ॥ ३१ ॥

सगणो गणकायश्च सुकीर्तिश्छिन्नसंशयः ।
कामदेवः कामकालो भस्मोद्धूलितविग्रहः ॥ ३२ ॥

भस्मप्रियो भस्मशायी कामी कान्तः कृतागमः ।
समावृत्तो निवृत्तात्मा धर्मपुञ्जः सदाशिवः ॥ ३३ ॥

अकल्मषश्चतुर्बाहुः सर्वावासो दुरासदः ।
दुर्लभो दुर्गमो दुर्गः सर्वायुधविशारदः ॥ ३४ ॥

अध्यात्मयोगनिलयः सुतन्तुस्तन्तुवर्धनः ।
शुभाङ्गो योगसारङ्गो जगदीशो जनार्दनः ॥ ३५ ॥

भस्मशुद्धिकरो मेरुस्तेजस्वी शुद्धविग्रहः ।
हिरण्यरेतास्तरणिर्मरीचिर्महिमालयः ॥ ३६ ॥

महाह्रदो महागर्तः सिद्धवृन्दारवन्दितः ।
व्याघ्रचर्मधरो व्याली महाभूतो महानिधिः ॥ ३७ ॥

अमृतात्माऽमृतवपुः पञ्चयज्ञः प्रभञ्जनः ।
पञ्चविंशतितत्त्वस्थः पारिजातः परापरः ॥ ३८ ॥

सुलभः सुव्रतः शूरो वाग्मायैकनिधिर्निधिः ।
वर्णाश्रमगुरुर्वर्णी शत्रुजिच्छत्रुतापनः ॥ ३९ ॥

आश्रमः क्षपणः क्षामो ज्ञानवानचलश्चलः ।
प्रमाणभूतो दुर्ज्ञेयः सुपर्णो वायुवाहनः ॥ ४० ॥

धनुर्धरो धनुर्वेदो गुणराशिर्गुणाकरः ।
अनन्तदृष्टिरानन्दो दण्डो दमयिता दमः ॥ ४१ ॥

अविवाद्यो महाकायो विश्वकर्मा विशारदः ।
वीतरागो विनीतात्मा तपस्वी भूतवाहनः ॥ ४२ ॥

उन्मत्तवेषः प्रच्छन्नो जितकामो जितप्रियः ।
कल्याणप्रकृतिः कल्पः सर्वलोकप्रजापतिः ॥ ४३ ॥

तपस्वी तारको धीमान्प्रधानप्रभुरव्ययः ।
लोकपालोऽन्तर्हितात्मा कल्पादिः कमलेक्षणः ॥ ४४ ॥

वेदशास्त्रार्थतत्त्वज्ञो नियमो नियमाश्रयः ।
राहुः सूर्यः शनिः केतुर्विरामो विद्रुमच्छविः ॥ ४५ ॥

भक्तिगम्यः परं ब्रह्म मृगबाणार्पणोऽनघः ।
अद्रिद्रोणिकृतस्थानः पवनात्मा जगत्पतिः ॥ ४६ ॥

सर्वकर्माचलस्त्वष्टा मङ्गल्यो मङ्गलप्रदः ।
महातपा दीर्घतपाः स्थविष्णुः स्थविरो ध्रुवः ॥ ४७ ॥

अहः संवत्सरो व्यालः प्रमाणं परमं तपः ।
संवत्सरकरो मन्त्रः प्रत्ययः सर्वदर्शनः ॥ ४८ ॥

अजः सर्वेश्वरः सिद्धो महारेता महाबलः ।
योगी योगो महादेवः सिद्धः सर्वादिरच्युतः॥ ४९ ॥

वसुर्वसुमनाः सत्यः सर्वपापहरो हरः ।
अमृतः शाश्वतः शान्तो बाणहस्तः प्रतापवान् ॥ ५० ॥

कमण्डलुधरो धन्वी वेदाङ्गो वेदविन्मुनिः ।
भ्राजिष्णुर्भोजनं भोक्ता लोकनेता दुराधरः॥ ५१ ॥

अतीन्द्रियो महामायः सर्वावासश्चतुष्पथः ।
कालयोगी महानादो महोत्साहो महाबलः ॥ ५२ ॥

महाबुद्धिर्महावीर्यो भूतचारी पुरंधरः ।
निशाचरः प्रेतचारी महाशक्तिर्महाद्युतिः ॥ ५३ ॥

अनिर्देश्यवपुः श्रीमान्सर्वाकर्षकरो मतः ।
बहुश्रुतो बहुमायो नियतात्माऽभयोद्भवः ॥ ५४ ॥

ओजस्तेजोद्युतिधरो नर्तकः सर्वनायकः ।
नित्यघण्टाप्रियो नित्यप्रकाशात्मा प्रतापनः ॥ ५५ ॥

ऋद्धः स्पष्टाक्षरो मन्त्रः सङ्ग्रामः शारदप्लवः ।
युगादिकृद्युगावर्तो गम्भीरो वृषवाहनः ॥ ५६ ॥

इष्टो विशिष्टः शिष्टेष्टः शरभः सरभो धनुः ।
अपां निधिरधिष्ठानं विजयो जयकालवित् ॥ ५७ ॥

प्रतिष्ठितः प्रमाणज्ञो हिरण्यकवचो हरिः ।
विमोचनं सुरगणो विद्येशो विबुधाश्रयः ॥ ५८॥

बालरूपो बलोन्माथी विकर्ता गहनो गुहः ।
करणं कारणं कर्ता सर्वबन्धप्रमोचनः ॥ ५९ ॥

व्यवसायो व्यवस्थानः स्थानदो जगदादिजः ।
दुन्दुभो ललितो विश्वो भवात्माऽऽत्मनि संस्थितः ॥ ६० ॥

राजराजप्रियो रामो राजचूडामणिः प्रभुः ।
वीरेश्वरो वीरभद्रो वीरासनविधिर्विराट् ॥ ६१ ॥

वीरचूडामणिर्हर्ता तीव्रानन्दो नदीधरः ।
आत्माधारस्त्रिशूलाङ्कः शिपिविष्टः शिवाश्रयः ॥ ६२ ॥

बालखिल्यो महाचारस्तिग्मांशुर्वारिधिः खगः ।
अभिरामः सुशरण्यः सुब्रह्मण्यः सुधापतिः ॥ ६३ ॥

मधुमान्कौशिको गोमान्विरामः सर्वसाधनः ।
ललाटाक्षो विश्वदेहः सारः संसारचक्रभृत् ॥ ६४ ॥

अमोघदण्डो मध्यस्थो हिरण्यो ब्रह्मवर्चसी ।
परब्रह्मपदो हंसः शबरो व्याघ्रकोऽनलः ॥ ६५ ॥

रुचिर्वररुचिर्वन्द्यो वाचस्पतिरहर्पतिः ।
रविर्विरोचनः स्कन्दः शास्ता वैवस्वतोऽर्जुनः ॥ ६६ ॥

मुक्तिरुन्नतकीर्तिश्च शान्तरामः पुरंजयः ।
कैलासपतिः कामारिः सविता रविलोचनः ॥ ६७ ॥

विद्वत्तमो वीतभयो विश्वकर्माऽनिवारितः ।
नित्यो नियतकल्याणः पुण्यश्रवणकीर्तनः ॥ ६८ ॥

दूरश्रवा विश्वसहो ध्येयो दुःस्वप्ननाशनः ।
उत्तारको दुष्कृतिहा दुर्धर्षो दुःसहोऽभयः ॥ ६९ ॥

अनादिर्भूर्भुवो लक्ष्मीः किरीटी त्रिदशाधिपः ।
विश्वगोप्ता विश्वहर्ता सुवीरो रुचिराङ्गदी ॥ ७० ॥

जननो जनजन्मादिः प्रीतिमान्नीतिमानथ ।
वसिष्ठः कश्यपो भानुर्भीमो भीमपराक्रमः ॥ ७१ ॥

प्रणवः सत्पथाचारो महाकायो महाधनुः ।
जन्माधिपो महादेवः सकलागमपारगः ॥ ७२ ॥

तत्त्वं तत्त्वविदेकात्मा विभूतिर्भूतिभूषणः ।
ऋषिर्ब्राह्मणविद्विष्णुर्जन्ममृत्युजरातिगः ॥ ७३ ॥

यज्ञो यज्ञपतिर्यज्वा यज्ञान्तोऽमोघविक्रमः ।
महेन्द्रो दुर्भरः सेनी यज्ञाङ्गो यज्ञवाहनः ॥ ७४ ॥

पञ्चब्रह्मसमुत्पत्तिर्विश्वतो विमलोदयः ।
आत्मयोनिरनाद्यन्तः षट्त्रिंशो लोकभृत्कविः ॥ ७५ ॥

गायत्रीवल्लभः प्रांशुर्विश्वावासः सदाशिवः ।
शिशुर्गिरिरतः सम्राट् सुषेणः सुरशत्रुहा ॥ ७६ ॥

अमेयोऽरिष्टमथनो मुकुन्दो विगतज्वरः ।
स्वयंज्योतिरनुज्योतिरचलः परमेश्वरः ॥ ७७ ॥

पिङ्गलः कपिलश्मश्रुः शास्त्रनेत्रस्त्रयीतनुः ॥ ७८ ॥

भगो विवस्वानादित्यो योगाचारो दिवस्पतिः ।
उदारकीर्तिरुद्योगी सद्योगी सदसन्मयः ॥ ७९ ॥
नक्षत्रमाली नाकेशः स्वाधिष्ठानषडाश्रयः ।
पवित्रपादः पापारिर्मणिपूरो नभोगतिः ॥ ८० ॥

हृत्पुण्डरीकमासीनः शुक्राशानो वृषाकपिः ।
तुष्टो गृहपतिः कृष्णः समर्थोऽनर्थशासनः ॥ ८१ ॥

अधर्मशत्रुरक्षय्यः पुरुहूतः पुरुष्टुतः ।
बृहद्भुजो ब्रह्मगर्भो धर्मधेनुर्धनागमः ॥ ८२ ॥
जगद्धितैषी सुगतः कुमारः कुशलागमः ।
हिरण्यगर्भो ज्योतिष्मानुपेन्द्रस्तिमिरापहः ॥ ८३ ॥

अरोगस्तपनाध्यक्षो विश्वामित्रो द्विजेश्वरः ।
ब्रह्मज्योतिः सुबुद्धात्मा बृहज्ज्योतिरनुत्तमः ॥ ८४ ॥

मातामहो मातरिश्वा मनस्वी नागहारधृक् ।
पुलस्त्यः पुलहोऽगस्त्यो जातूकर्ण्यः पराशरः ॥ ८५ ॥

निरावरणविज्ञानो विरञ्चो विष्टरश्रवाः ।
आत्मभूरनिरुद्धोऽत्रिर्ज्ञानमूर्तिर्महायशाः ॥ ८६ ॥

लोकचूडामणिर्वीरश्चन्द्रः सत्यपराक्रमः ।
व्यालकल्पो महाकल्पः कल्पवृक्षः कलानिधिः ॥ ८७ ॥

अलंकरिष्णुरचलो रोचिष्णुर्विक्रमोत्तमः ।
आशुः सप्तपतिर्वेगी प्लवनः शिखिसारथिः ॥ ८८ ॥

असंतुष्टोऽतिथिः शुक्रः प्रमाथी पापशासनः ।
वसुश्रवाः कव्यवाहः प्रतप्तो विश्वभोजनः ॥ ८९ ॥

जयो जरारिशमनो लोहिताश्वस्तनूनपात् ।
पृषदश्वो नभोयोनिः सुप्रतीकस्तमिस्रहा ॥ ९०. ॥

निदाघस्तपनो मेघः पक्षः परपुरंजयः ।
सुखी नीलः सुनिष्पन्नः सुरभिः शिशिरात्मकः ॥ ९१ ॥

वसन्तो माधवो ग्रीष्मो नभस्यो बीजवाहनः ।
मनो बुद्धिरहंकारः क्षेत्रज्ञः क्षेत्रपालकः ॥ ९२ ॥

जमदग्निर्जलनिधिर्विपाको विश्वकारकः ।
अधरोऽनुत्तरो ज्ञेयो ज्येष्ठो निःश्रेयसालयः ॥ ९३ ॥

शैलो नाम तरुर्दाहो दानवारिररिंदमः ।
चामुण्डी ज़ानकश्चारुर्निःशल्यो लोकशल्यहृत् ॥ ९४ ॥

चतुर्वेदश्चतुर्भावश्चतुरश्चत्वरप्रियः ।
आम्नायोऽथ समाम्नायस्तीर्थदेवः शिवालयः ॥ ९५ ॥

वज्ररूपो महादेवः सर्वरूपश्चराचरः ।
न्यायनिर्वाहको न्यायो न्यायगम्यो निरञ्जनः ॥ ९६ ॥

सहस्रमूर्धा देवेन्द्रः सर्वशस्त्रप्रभञ्जनः ।
मुण्डो विरूपो विकृतो दण्डी दान्तो गुणोत्तरः ॥ ९७ ॥

पिङ्गलाक्षोऽथ हर्यश्वो नीलग्रीवो निरामयः ।
सहस्रबाहुः सर्वेशः शरण्यः सर्वलोकधृक् ॥ ९८ ॥

पद्मासनः परं ज्योतिः परावरः परं फलम् ।
पद्मगर्भो महागर्भो विश्वगर्भो विलक्षणः ॥ ९९ ॥

यज्ञभुग्वरदो देवो वरेशश्च महास्वनः ।
देवासुरगुरुर्देवः शंकरो लोकसंभवः ॥ १०० ॥

सर्ववेदमयोऽचिन्त्यो देवतासत्यसंभवः ।
देवाधिदेवो देवर्षिर्देवासुरवरप्रदः ॥ १०१ ॥

देवासुरेश्वरो दिव्यो देवासुरमहेश्वरः ।
देवासुराणां वरदो देवासुरनमस्कृतः ॥ १०२ ॥

देवासुरमहामात्रो देवासुरमहाश्रयः ।
सर्वदेवमयोऽचिन्त्यो देवानामात्मसंभवः ॥ १०३ ॥

ईड्योऽनीशः सुरव्याप्तो देवसिंहो दिवाकरः ।
विबुधाग्रवरः श्रेष्ठः सर्वदेवोत्तमोत्तमः ॥ १०४ ॥

शिवध्यानरतः श्रीमाञ्शिखी श्रीपर्वतप्रियः ।
वज्रहस्तः प्रतिष्टम्भी विश्वज्ञानी निशाकरः ॥ १०५ ॥

ब्रह्मचारी लोकचारी धर्मचारी धनाधिपः ।
नन्दी नन्दीश्वरो नग्नो नग्नव्रतधरः शुचिः ॥ १०६ ॥

लिङ्गाध्यक्षः सुराध्यक्षो धर्माध्यक्षो युगावहः ।
स्ववशः स्वर्गतः स्वर्गः सर्गः स्वरमयः स्वनः ॥ १०७ ॥

बीजाध्यक्षो बीजकर्ता धर्मकृद्धर्मवर्धनः ।
दम्भोऽदम्भो महादम्भः सर्वभूतमहेश्वरः ॥ १०८ ॥

श्मशाननिलयस्तिष्यः सेतुरप्रतिमाकृतिः ।
लोकोत्तरः स्फुटालोकस्त्र्यम्बको भक्तवत्सलः ॥ १०९ ॥

अन्धकारिर्मखद्वेषी विष्णुकंधरपातनः ।
वीतदोषोऽक्षयगुणोऽन्तकारिः पूषदन्तभित् ॥ ११० ॥

धूर्जटिः खण्डपरशुः सकलो निष्कलोऽनघः ।
आकारः सकलाधारः पाण्डुरागो मृगो नटः ॥ १११ ॥

पूर्णः पूरयिता पुण्यः सुकुमारः सुलोचनः ।
सामगेयः प्रियः क्रूरः पुण्यकीर्तिरनामयः ॥ ११२ ॥

मनोजवस्तीर्थकरो जटिलो जीवितेश्वरः ।
जीवितान्तकरोऽनन्तो वसुरेता वसुप्रदः ॥ ११३ ॥

सद्गतिः सत्कृतिः शान्तः कालकण्ठः कलाधरः ।
मानी मन्तुर्महाकालः सद्भूतिः सत्परायणः ॥ ११४ ॥

चन्द्रसंजीवनः शास्ता लोकरूढो महाधिपः ।
लोकबन्धुर्लोकनाथः कृतज्ञः कृतभूषणः ॥ ११५ ॥

अनपायोऽक्षरः शान्तः सर्वशस्त्रभृतां वरः ।
तेजोमयो द्युतिधरो लोकमायोऽग्रणीरणुः ॥ ११६ ॥

सुविस्मितः प्रसन्नात्मा दुर्जयो दुरतिक्रमः ।
ज्योतिर्मयो निराकारो जगन्नाथो जलेश्वरः ॥ ११७ ॥

तुम्बी वीणा महाशोको विशोकः शोकनाशनः ।
त्रिलोकेशस्त्रिलोकात्मा सिद्धिः शुद्धिरधोक्षजः ॥ ११८ ॥

अव्यक्तलक्षणो व्यक्तो व्यक्ताव्यक्तो विशांपतिः ।
वरशीलो वरगुणो गतो गव्ययनो मयः ॥ ११९ ॥

ब्रह्मा विष्णुः प्रजापालो हंसो हंसगतिर्मतः ।
वेधा विधाता स्त्रष्टा च कर्ता हर्ता चतुर्मुखः ॥ १२० ॥

कैलासशिखरावासी सर्वावासी सदागतिः ।
हिरण्यगर्भो गगनः पुरुषः पूर्वजः पिता ॥ १२१ ॥

भूतालयो भूतपतिर्भूतिदो भुवनेश्वरः ।
संयमो योगविद्भ्रष्टो ब्रह्मण्यो ब्राह्मणप्रियः ॥ १२२ ॥

देवप्रियो देवनाथो दैवज्ञो देवचिन्तकः ।
विषमाक्षो विशालाक्षो वृषदो वृषवर्धनः ॥ १२३ ॥

निर्ममो निरहंकारो निर्मोहो निरुपप्लवः ।
दर्पहा दर्पणो दृप्तः सर्वर्तुपरिवर्तकः ॥ १२४ ॥

सप्तजिह्वः सहस्रार्चिः स्निग्धः प्रकृतिदक्षिणः ।
भूतभव्यभवन्नाथः प्रभवो भ्रान्तिनाशनः ॥ १२५ ॥

अर्थोऽनर्थो महाकोशः परकार्यैकपण्डितः ।
निष्कण्टकः कृतानन्दो निर्व्याजो व्याजदर्शनः ॥ १२६ ॥

सत्त्ववान्सात्त्विकः सत्यः कीर्तिस्तम्भः कृतागमः ।
अकम्पितो गुणग्राही नैकात्मा लोककर्मकृत् ॥ १२७॥

श्रीवल्लभः शिवारम्भः शान्तभद्रः समञ्जसः ।
भूशयो भूतिकृद्भूतिर्विभूतिर्भूतिवाहनः ॥ १२८ ॥

अकायो भूतकायस्थः कालज्ञानो महापटुः ।
सत्यव्रतो महात्याग इच्छाशान्तिपरायणः ॥ १२९ ॥

परार्थवृत्तिवरदो विविक्तः श्रुतिसागरः ।
अनिर्विण्णो गुणग्राही निष्कलङ्कः कलङ्कहा ॥ १३० ॥

स्वभावभद्रो मध्यस्थः शत्रुघ्नः शत्रुनाशनः ।
शिखण्डी कवची शूली जटी मुण्डी च कुण्डली ॥ १३१॥

मेखली कञ्चुकी खड्गी माली संसारसारथिः ।
अमृत्युः सर्वजित्सिंहस्तेजोराशिर्महामणिः ॥ १३२ ॥

असंख्येयोऽप्रमेयात्मा वीर्यवान्कार्यकोविदः ।
वेद्यो वैद्यो वियद्गोप्ता सप्तावरमुनीश्वरः ॥ १३३॥

अनुत्तमो दुराधर्षो मधुरः प्रियदर्शनः ।
सुरेशः शरणं शर्म सर्वः शब्दवतां गतिः ॥ १३४ ॥

कालः पक्षः करङ्कारिः कङ्कणीकृतवासुकिः ।
महेष्वासो महीभर्ता निष्कलङ्को विशृङ्खलः ॥ १३५॥

द्युमणिस्तरणिर्धन्यः सिद्धिदः सिद्धिसाधनः ।
विवृतः संवृतः शिल्पी व्यूढोरस्को महाभुजः ॥ १३६ ॥

एकज्योतिर्निरातङ्को नरनारायणप्रियः ।
निर्लेपो निष्प्रपञ्चात्मा निर्व्यग्रो व्यग्रनाशनः ॥ १३७॥

स्तव्यः स्तवप्रियः स्तोता व्योममूर्तिरनाकुलः ।
निरवद्यपदोपायो विद्याराशिरकृत्रिमः ॥ १३८ ॥

प्रशान्तबुद्धिरक्षुद्रः क्षुद्रहा नित्यसुन्दरः ।
ध्येयोऽग्रधुर्यो धात्रीशः साकल्यः शर्वरीपतिः ॥ १३९ ॥

परमार्थगुरुर्व्यापी शुचिराश्रितवत्सलः ।
रसो रसज्ञः सारज्ञः सर्वसत्त्वावलम्बनः ॥ १४०॥

एवं नाम्नां सहस्रेण तुष्टाव गिरिजापतिम् ।
संपूज्य परया भक्त्या पुण्डरीकैर्द्विजोत्तमाः ॥ १४१॥

जिज्ञासार्थं हरेर्भक्त्या कमलेषु शिवः स्वयम् ।
तत्रैकं गोपयामास कमलं मुनिपुंगवाः ॥ १४२ ॥

हृते पुष्पे तदा विष्णुश्चिन्तयन्किमिदं त्विति ।
ज्ञात्वाऽऽत्मनोऽक्षिमुद्धृत्य पूजयामास शंकरम् ॥ १४३॥

अथ ज्ञात्वा महादेवो हरेर्भक्तिं सुनिश्चलाम् ।
प्रादुर्भूतो महादेवो मण्डलात्तिग्मदीधितेः ॥ १४४ ॥

सूर्यकोटिप्रतीकाशस्त्रिनेत्रश्चन्द्रशेखरः ।
शूलटङ्कगदाचक्रकुन्तपाशधरो विभुः ॥ १४५ ॥

वरदाभयपाणिश्च सर्वाभरणभूषितः ।
तं दृष्ट्वा देवदेवेशं भगवान्कमलेक्षणः ॥ १४६ ॥

पुनर्ननाम चरणौ दण्डवच्छूलपाणिनः ।
दृष्ट्वा शंभुं तदा देवा दुद्रुवुर्भयविह्वलाः ॥ १४७॥

चचाल ब्रह्मभुवनं चकम्पे च वसुंधरा ।
अधश्चोर्ध्वं ततः प्रीते ददाह शतयोजनम् ॥ १४८ ॥

शंभोर्भगवतस्तेजस्तद्दृष्ट्वा प्रहसञ्शिवः ।
अब्रवीच्छार्ङ्गिणं विप्राः कृताञ्जलिपुटं स्थितम् ॥ १४९ ॥

देवकार्यमिदं ज्ञातमिदानीं मधुसूदन ।
दिव्यं ददामि ते चक्रमद्भुतं तत्सुदर्शनम् ॥ १५० ॥

हितार्थं सर्वदेवानां निर्मितं यन्मया पुरा ।
गृहीत्वा तद्गुणैर्दैत्याञ्जहि विष्णो ममाऽऽज्ञया ॥ १५१॥

एवमुक्त्वा ददौ चक्रं सूर्यायुतसमप्रभम् ।
लोकेषु पुण्डरीकाक्ष इति ख्यातिं गतो हरिः ॥ १५२ ॥

पुनस्तमब्रवीच्छंभुर्नारायणमनामयम् ।
वरानन्यान्सुरश्रेष्ठ वरयस्व यथेप्सितान् ॥ १५३ ॥

एवं शंभोर्निगदितं श्रुत्वा देवो जनार्दनः ।
अब्रवीत्खण्डपरशुं प्राञ्जलिः प्रणयान्वितः ॥ १५४ ॥

## श्रीविष्णुरुवाच

भगवन्देवदेवेश परमात्मञ्शिवाव्यय ।
निश्चला त्वयि मे भक्तिर्भवत्विति वरो मम ॥ १५५ ॥

## ईश्वर उवाच

भक्तिर्मयि दृढा विष्णो भविष्यति तवानघ ।
अजेयस्त्रिषु लोकेषु मत्प्रसादाद्भविष्यति ॥ १५६ ॥

## सूत उवाच

एवं दत्त्वा वरं शंभुर्विष्णवे प्रभविष्णवे ।
अन्तर्हितो द्विजश्रेष्ठा इति देवो ऽब्रवीद्रविः ॥ १५७ ॥

नाम्नां सहस्रं यद्दिव्यं विष्णुना समुदीरितम् ।
यः पठेच्छृणुयाद्वाऽपि सर्वपापैः प्रमुच्यते ॥ १५८ ॥

अश्वमेधसहस्रस्य फलं प्राप्नोति निश्चितम् ।
पठतः सर्वभावेन विद्या वा महती भवेत् ॥ १५९ ॥

जायते महदैश्वर्यं शिवस्य दयितो भवेत् ।
दुस्तरे जलसंघाते यज्जलं स्थलतां व्रजेत् ॥ १६० ॥

हारायन्ते महासर्पाः सिंहः क्रीडामृगायते ।
तस्मान्नाम्नां सहस्रेण स्तोतव्यो भगवाञ्शिवः ॥ १६१ ॥
प्रयच्छत्यखिलान्कामान्देहान्ते च परां गतिम् ॥१६२॥

**॥ इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे विष्णुचक्रप्राप्तिकथनं नामैकचत्वारिंशोऽध्यायः ॥**

## ॥ अथ नामावलिः ॥

१. ॐ भवाय नमः।
२. ॐ शिवाय नमः।
३. ॐ हराय नमः।
४. ॐ रुद्राय नमः।
५. ॐ पुष्कलाय नमः।
६. ॐ मुग्धलोचनाय नमः।
७. ॐ अग्रगण्याय नमः।
८. ॐ सदाचाराय नमः।
९. ॐ सर्वस्मै नमः।
१०. ॐ शम्भवे नमः।
११. ॐ महेश्वराय नमः।
१२. ॐ ईश्वराय नमः।
१३. ॐ स्थाणवे नमः।
१४. ॐ ईशानाय नमः।
१५. ॐ सहस्राक्षाय नमः।
१६. ॐ सहस्रपदे नमः।
१७. ॐ वरीयसे नमः।
१८. ॐ वरदाय नमः।
१९. ॐ वन्द्याय नमः।
२०. ॐ शंकराय नमः।
२१. ॐ परमेश्वराय नमः।
२२. ॐ गङ्गाधराय नमः।
२३. ॐ शूलधराय नमः।
२४. ॐ परार्थैकप्रयोजकाय नमः।
२५. ॐ सर्वज्ञाय नमः।
२६. ॐ सर्वदेवादये नमः।
२७. ॐ गिरिधन्वने नमः।
२८. ॐ जटाधराय नमः।
२९. ॐ चन्द्रापीडाय नमः।
३०. ॐ चन्द्रमौलये नमः।
३१. ॐ वेधसे नमः।
३२. ॐ विश्वामरेश्वराय नमः।
३३. ॐ वेदान्तसारसन्दोहाय नमः।
३४. ॐ कपालिने नमः।
३५. ॐ नीललोहिताय नमः।
३६. ॐ ध्यानाहाराय नमः।
३७. ॐ अपरिच्छेद्याय नमः।
३८. ॐ गौरीभर्त्रे नमः।
३९. ॐ गणेश्वराय नमः।
४०. ॐ अष्टमूर्तये नमः।
४१. ॐ विश्वमूर्तये नमः।
४२. ॐ त्रिवर्गाय नमः।

४३. ॐ स्वर्गसाधनाय नमः।
४४. ॐ ज्ञानगम्याय नमः।
४५. ॐ दृढप्रज्ञाय नमः।
४६. ॐ देवदेवाय नमः।
४७. ॐ त्रिलोचनाय नमः।
४८. ॐ वामदेवाय नमः।
४९. ॐ महादेवाय नमः।
५०. ॐ पटवे नमः।
५१. ॐ परिवृढाय नमः।
५२. ॐ दृढाय नमः।
५३. ॐ विश्वरूपाय नमः।
५४. ॐ विरूपाक्षाय नमः।
५५. ॐ वागीशाय नमः।
५६. ॐ श्रुतिमन्त्रगाय नमः।
५७. ॐ सर्वप्रणवसंवादिने नमः।
५८. ॐ वृषाङ्काय नमः।
५९. ॐ वृषवाहनाय नमः।
६०. ॐ ईशाय नमः।
६१. ॐ पिनाकिने नमः।
६२. ॐ खट्वाङ्गिने नमः।
६३. ॐ चित्रवेषाय नमः।
६४. ॐ चिरन्तनाय नमः।
६५. ॐ मनोमयाय नमः।
६६. ॐ महायोगिने नमः।
६७. ॐ स्थिराय नमः।
६८. ॐ ब्रह्माण्डधूर्जटिने नमः।
६९. ॐ कालकालाय नमः।
७०. ॐ कृत्तिवाससे नमः।
७१. ॐ सुभगाय नमः।
७२. ॐ प्रणवात्मकाय नमः।
७३. ॐ नागचूडाय नमः।
७४. ॐ सुचक्षुष्याय नमः।
७५. ॐ दुर्वाससे नमः।
७६. ॐ पुरशासनाय नमः।
७७. ॐ दृगायुधाय नमः।
७८. ॐ स्कन्दगुरवे नमः।
७९. ॐ परमेष्ठिने नमः।
८०. ॐ परायणाय नमः।
८१. ॐ अनादिमध्यनिधनाय नमः।
८२. ॐ गिरीशाय नमः।
८३. ॐ गिरिजाधवाय नमः।
८४. ॐ कुबेरबन्धवे नमः।
८५. ॐ श्रीकण्ठाय नमः।
८६. ॐ लोकवन्द्योत्तमाय नमः।

८७. ॐ मृदवे नमः।
८८. ॐ सामान्याय नमः।
८९. ॐ देवकाय नमः।
९०. ॐ दण्डिने नमः।
९१. ॐ नीलकण्ठाय नमः।
९२. ॐ परश्वधिने नमः।
९३. ॐ विशालाक्षाय नमः।
९४. ॐ महाव्याधाय नमः।
९५. ॐ सुरेशाय नमः।
९६. ॐ सूर्यतापनाय नमः।
९७. ॐ धर्मधाम्ने नमः।
९८. ॐ क्षमाक्षेत्राय नमः।
९९. ॐ भगवते नमः।
**१००. ॐ भगनेत्रघ्ने नमः।**
१०१. ॐ उग्राय नमः।
१०२. ॐ पशुपतये नमः।
१०३. ॐ तार्क्ष्याय नमः।
१०४. ॐ प्रियभक्ताय नमः।
१०५. ॐ प्रियंवदाय नमः।
१०६. ॐ दात्रे नमः।
१०७. ॐ दयाकराय नमः।
१०८. ॐ दक्षाय नमः।
१०९. ॐ कपर्दिने नमः।
११०. ॐ कामशासनाय नमः।
१११. ॐ श्मशाननिलयाय नमः।
११२. ॐ तिष्याय नमः।
११३. ॐ श्मशानस्थाय नमः।
११४. ॐ महेश्वराय नमः।
११५. ॐ लोककर्त्रे नमः।
११६. ॐ भूतपतये नमः।
११७. ॐ महाकर्त्रे नमः।
११८. ॐ महौषधये नमः।
११९. ॐ उत्तराय नमः।
१२०. ॐ गोपतये नमः।
१२१. ॐ गोप्त्रे नमः।
१२२. ॐ ज्ञानगम्याय नमः।
१२३. ॐ पुरातनाय नमः।
१२४. ॐ नीतये नमः।
१२५. ॐ सुनीतये नमः।
१२६. ॐ शुद्धात्मने नमः।
१२७. ॐ सोमाय नमः।
१२८. ॐ सोमरताय नमः।
१२९. ॐ सुधिये नमः।
१३०. ॐ सोमपाय नमः।

१३१. ॐ अमृतपाय नमः।
१३२. ॐ सौम्याय नमः।
१३३. ॐ महानीतये नमः।
१३४. ॐ महास्मृतये नमः।
१३५. ॐ अजातशत्रवे नमः।
१३६. ॐ आलोक्याय नमः।
१३७. ॐ संभाव्याय नमः।
१३८. ॐ हव्यवाहनाय नमः।
१३९. ॐ लोककाराय नमः।
१४०. ॐ वेदकाराय नमः।
१४१. ॐ सूत्रकाराय नमः।
१४२. ॐ सनातनाय नमः।
१४३. ॐ महर्षये नमः।
१४४. ॐ कपिलाचार्याय नमः।
१४५. ॐ विश्वदीप्तये नमः।
१४६. ॐ विलोचनाय नमः।
१४७. ॐ पिनाकपाणये नमः।
१४८. ॐ भूदेवाय नमः।
१४९. ॐ स्वस्तिकृते नमः।
१५०. ॐ स्वस्तिदाय नमः।
१५१. ॐ सुधाम्ने नमः।
१५२. ॐ धात्रीधाम्ने नमः।
१५३. ॐ धामकराय नमः।
१५४. ॐ सर्वगाय नमः।
१५५. ॐ सर्वगोचराय नमः।
१५६. ॐ ब्रह्मसृजे नमः।
१५७. ॐ विश्वसृजे नमः।
१५८. ॐ सर्गाय नमः।
१५९. ॐ कर्णिकाराय नमः।
१६०. ॐ प्रियाय नमः।
१६१. ॐ कवये नमः।
१६२. ॐ शाखाय नमः।
१६३. ॐ विशाखाय नमः।
१६४. ॐ गोशाखाय नमः।
१६५. ॐ शिवाय नमः।
१६६. ॐ भिषजे नमः।
१६७. ॐ अनुत्तमाय नमः।
१६८. ॐ गङ्गाप्लवोदकाय नमः।
१६९. ॐ भव्याय नमः।
१७०. ॐ पुष्कलाय नमः।
१७१. ॐ स्थपतये नमः।
१७२. ॐ स्थिताय नमः।
१७३. ॐ विजितात्मने नमः।
१७४. ॐ विधेयात्मने नमः।

१७५. ॐ भूतवाहनसारथये नमः।
१७६. ॐ सगणाय नमः।
१७७. ॐ गणकायाय नमः।
१७८. ॐ सुकीर्तये नमः।
१७९. ॐ छिन्नसंशयाय नमः।
१८०. ॐ कामदेवाय नमः।
१८१. ॐ कामकालाय नमः।
१८२. ॐ भस्मोद्धूलित-विग्रहाय नमः।
१८३. ॐ भस्मप्रियाय नमः।
१८४. ॐ भस्मशायिने नमः।
१८५. ॐ कामिने नमः।
१८६. ॐ कान्ताय नमः।
१८७. ॐ कृतागमाय नमः।
१८८. ॐ समावृत्ताय नमः।
१८९. ॐ निवृत्तात्मने नमः।
१९०. ॐ धर्मपुञ्जाय नमः।
१९१. ॐ सदाशिवाय नमः।
१९२. ॐ अकल्मषाय नमः।
१९३. ॐ चतुर्बाहवे नमः।
१९४. ॐ सर्वावासाय नमः।
१९५. ॐ दुरासदाय नमः।
१९६. ॐ दुर्लभाय नमः।
१९७. ॐ दुर्गमाय नमः।
१९८. ॐ दुर्गाय नमः।
१९९. ॐ सर्वायुधविशारदाय नमः।
**२००. ॐ अध्यात्मयोगनिलयाय नमः।**
२०१. ॐ सुतन्तवे नमः।
२०२. ॐ तन्तुवर्धनाय नमः।
२०३. ॐ शुभाङ्गाय नमः।
२०४. ॐ योगसारङ्गाय नमः।
२०५. ॐ जगदीशाय नमः।
२०६. ॐ जनार्दनाय नमः।
२०७. ॐ भस्मशुद्धिकराय नमः।
२०८. ॐ मेरवे नमः।
२०९. ॐ तेजस्विने नमः।
२१०. ॐ शुद्धविग्रहाय नमः।
२११. ॐ हिरण्यरेतसे नमः।
२१२. ॐ तरणये नमः।
२१३. ॐ मरीचये नमः।
२१४. ॐ महिमालयाय नमः।
२१५. ॐ महाह्रदाय नमः।
२१६. ॐ महागर्ताय नमः।

२१७. ॐ सिद्धवृन्दारवन्दिताय नमः।
२१८. ॐ व्याघ्रचर्मधराय नमः।
२१९. ॐ व्यालिने नमः।
२२०. ॐ महाभूताय नमः।
२२१. ॐ महानिधये नमः।
२२२. ॐ अमृतात्मने नमः।
२२३. ॐ अमृतवपुषे नमः।
२२४. ॐ पञ्चयज्ञाय नमः।
२२५. ॐ प्रभञ्जनाय नमः।
२२६. ॐ पंचविंशतितत्त्वस्थाय नमः।
२२७. ॐ पारिजाताय नमः।
२२८. ॐ परापराय नमः।
२२९. ॐ सुलभाय नमः।
२३०. ॐ सुव्रताय नमः।
२३१. ॐ शूराय नमः।
२३२. ॐ वाचे नमः।
२३३. ॐ मायैकनिधये नमः।
२३४. ॐ निधये नमः।
२३५. ॐ वर्णाश्रमगुरवे नमः।
२३६. ॐ वर्णिने नमः।
२३७. ॐ शत्रुजिते नमः।
२३८. ॐ शत्रुतापनाय नमः।
२३९. ॐ आश्रमाय नमः।
२४०. ॐ क्षपणाय नमः।
२४१. ॐ क्षामाय नमः।
२४२. ॐ ज्ञानवते नमः।
२४३. ॐ अचलाय नमः।
२४४. ॐ चलाय नमः।
२४५. ॐ प्रमाणभूताय नमः।
२४६. ॐ दुर्ज्ञेयाय नमः।
२४७. ॐ सुपर्णाय नमः।
२४८. ॐ वायुवाहनाय नमः।
२४९. ॐ धनुर्धराय नमः।
२५०. ॐ धनुर्वेदाय नमः।
२५१. ॐ गुणराशये नमः।
२५२. ॐ गुणाकराय नमः।
२५३. ॐ अनन्तदृष्टये नमः।
२५४. ॐ आनन्दाय नमः।
२५५. ॐ दण्डाय नमः।
२५६. ॐ दमयित्रे नमः।
२५७. ॐ दमाय नमः।
२५८. ॐ अविवाद्याय नमः।
२५९. ॐ महाकायाय नमः।

२६०. ॐ विश्वकर्मणे नमः।
२६१. ॐ विशारदाय नमः।
२६२. ॐ वीतरागाय नमः।
२६३. ॐ विनीतात्मने नमः।
२६४. ॐ तपस्विने नमः।
२६५. ॐ भूतवाहनाय नमः।
२६६. ॐ उन्मत्तवेषाय नमः।
२६७. ॐ प्रच्छन्नाय नमः।
२६८. ॐ जितकामाय नमः।
२६९. ॐ जितप्रियाय नमः।
२७०. ॐ कल्याणप्रकृतये नमः।
२७१. ॐ कल्पाय नमः।
२७२. ॐ सर्वलोकप्रजापतये नमः।
२७३. ॐ तपस्विने नमः।
२७४. ॐ तारकाय नमः।
२७५. ॐ धीमते नमः।
२७६. ॐ प्रधानप्रभवे नमः।
२७७. ॐ अव्ययाय नमः।
२७८. ॐ लोकपालाय नमः।
२७९. ॐ अन्तर्हितात्मने नमः।
२८०. ॐ कल्पादये नमः।
२८१. ॐ कमलेक्षणाय नमः।
२८२. ॐ वेदशास्त्रार्थतत्त्वज्ञाय नमः।
२८३. ॐ नियमाय नमः।
२८४. ॐ नियमाश्रयाय नमः।
२८५. ॐ राहवे नमः।
२८६. ॐ सूर्याय नमः।
२८७. ॐ शनये नमः।
२८८. ॐ केतवे नमः।
२८९. ॐ विरामाय नमः।
२९०. ॐ विद्रुमच्छवये नमः।
२९१. ॐ भक्तिगम्याय नमः।
२९२. ॐ पराय नमः।
२९३. ॐ ब्रह्मणे नमः।
२९४. ॐ मृगबाणार्पणाय नमः।
२९५. ॐ अनघाय नमः।
२९६. ॐ अद्रिद्रोणिकृतस्थानाय नमः।
२९७. ॐ पवनात्मने नमः।
२९८. ॐ जगत्पतये नमः।
२९९. ॐ सर्वकर्माचलाय नमः।
**३००. ॐ त्वष्ट्रे नमः।**
३०१. ॐ मङ्गल्याय नमः।

३०२. ॐ मङ्गलप्रदाय नमः।
३०३. ॐ महातपसे नमः।
३०४. ॐ दीर्घतपसे नमः।
३०५. ॐ स्थविष्णवे नमः।
३०६. ॐ स्थविराय नमः।
३०७. ॐ ध्रुवाय नमः।
३०८. ॐ अह्ने नमः।
३०९. ॐ सम्वत्सराय नमः।
३१०. ॐ व्यालाय नमः।
३११. ॐ प्रमाणाय नमः।
३१२. ॐ परमाय नमः।
३१३. ॐ तपसे नमः।
३१४. ॐ संवत्सरकराय नमः।
३१५. ॐ मन्त्राय नमः।
३१६. ॐ प्रत्ययाय नमः।
३१७. ॐ सर्वदर्शनाय नमः।
३१८. ॐ अजाय नमः।
३१९. ॐ सर्वेश्वराय नमः।
३२०. ॐ सिद्धाय नमः।
३२१. ॐ महारेतसे नमः।
३२२. ॐ महाबलाय नमः।
३२३. ॐ योगिने नमः।
३२४. ॐ योगाय नमः।
३२५. ॐ महादेवाय नमः।
३२६. ॐ सिद्धाय नमः।
३२७. ॐ सर्वादये नमः।
३२८. ॐ अच्युताय नमः।
३२९. ॐ वसवे नमः।
३३०. ॐ वसुमनसे नमः।
३३१. ॐ सत्याय नमः।
३३२. ॐ सर्वपापहराय नमः।
३३३. ॐ हराय नमः।
३३४. ॐ अमृताय नमः।
३३५. ॐ शाश्वताय नमः।
३३६. ॐ शान्ताय नमः।
३३७. ॐ बाणहस्ताय नमः।
३३८. ॐ प्रतापवते नमः।
३३९. ॐ कमण्डलुधराय नमः।
३४०. ॐ धन्विने नमः।
३४१. ॐ वेदाङ्गाय नमः।
३४२. ॐ वेदविदे नमः।
३४३. ॐ मुनये नमः।
३४४. ॐ भ्राजिष्णवे नमः।
३४५. ॐ भोजनाय नमः।

३४६. ॐ भोक्त्रे नमः।
३४७. ॐ लोकनेत्रे नमः।
३४८. ॐ दुराधराय नमः।
३४९. ॐ अतीन्द्रियाय नमः।
३५०. ॐ महामायाय नमः।
३५१. ॐ सर्वावासाय नमः।
३५२. ॐ चतुष्पथाय नमः।
३५३. ॐ कालयोगिने नमः।
३५४. ॐ महानादाय नमः।
३५५. ॐ महोत्साहाय नमः।
३५६. ॐ महाबलाय नमः।
३५७. ॐ महाबुद्धये नमः।
३५८. ॐ महावीर्याय नमः।
३५९. ॐ भूतचारिणे नमः।
३६०. ॐ पुरंधराय नमः।
३६१. ॐ निशाचराय नमः।
३६२. ॐ प्रेतचारिणे नमः।
३६३. ॐ महाशक्तये नमः।
३६४. ॐ महाद्युतये नमः।
३६५. ॐ अनिर्देश्यवपुषे नमः।
३६६. ॐ श्रीमते नमः।
३६७. ॐ सर्वाकर्षकराय नमः।
३६८. ॐ मताय नमः।
३६९. ॐ बहुश्रुताय नमः।
३७०. ॐ बहुमायाय नमः।
३७१. ॐ नियतात्मने नमः।
३७२. ॐ अभयोद्भवाय नमः।
३७३. ॐ ओजसे नमः।
३७४. ॐ तेजसे नमः।
३७५. ॐ द्युतिधराय नमः।
३७६. ॐ नर्तकाय नमः।
३७७. ॐ सर्वनायकाय नमः।
३७८. ॐ नित्यघण्टाप्रियाय नमः।
३७९. ॐ नित्यप्रकाशात्मने नमः।
३८०. ॐ प्रतापनाय नमः।
३८१. ॐ ऋद्धाय नमः।
३८२. ॐ स्पष्टाक्षराय नमः।
३८३. ॐ मन्त्राय नमः।
३८४. ॐ सङ्ग्रामाय नमः।
३८५. ॐ शारदप्लवाय नमः।
३८६. ॐ युगादिकृते नमः।
३८७. ॐ युगावर्ताय नमः।
३८८. ॐ गम्भीराय नमः।
३८९. ॐ वृषवाहनाय नमः।

३९०. ॐ इष्टाय नमः।
३९१. ॐ विशिष्टाय नमः।
३९२. ॐ शिष्टेष्टाय नमः।
३९३. ॐ शरभाय नमः।
३९४. ॐ सरभाय नमः।
३९५. ॐ धनुषे नमः।
३९६. ॐ अपां निधये नमः।
३९७. ॐ अधिष्ठानाय नमः।
३९८. ॐ विजयाय नमः।
३९९. ॐ जयकालविदे नमः।
४००. **ॐ प्रतिष्ठिताय नमः।**
४०१. ॐ प्रमाणज्ञाय नमः।
४०२. ॐ हिरण्यकवचाय नमः।
४०३. ॐ हरये नमः।
४०४. ॐ विमोचनाय नमः।
४०५. ॐ सुरगणाय नमः।
४०६. ॐ विद्येशाय नमः।
४०७. ॐ विबुधाश्रयाय नमः।
४०८. ॐ बालरूपाय नमः।
४०९. ॐ बलोन्माथिने नमः।
४१०. ॐ विकर्त्रे नमः।
४११. ॐ गहनाय नमः।
४१२. ॐ गुहाय नमः।
४१३. ॐ करणाय नमः।
४१४. ॐ कारणाय नमः।
४१५. ॐ कर्त्रे नमः।
४१६. ॐ सर्वबन्धप्रमोचनाय नमः।
४१७. ॐ व्यवसायाय नमः।
४१८. ॐ व्यवस्थानाय नमः।
४१९. ॐ स्थानदाय नमः।
४२०. ॐ जगदादिजाय नमः।
४२१. ॐ दुन्दुभाय नमः।
४२२. ॐ ललिताय नमः।
४२३. ॐ विश्वाय नमः।
४२४. ॐ भवात्मने नमः।
४२५. ॐ आत्मनिसंस्थिताय नमः।
४२६. ॐ राजराजप्रियाय नमः।
४२७. ॐ रामाय नमः।
४२८. ॐ राजचूडामणये नमः।
४२९. ॐ प्रभवे नमः।
४३०. ॐ वीरेश्वराय नमः।
४३१. ॐ वीरभद्राय नमः।
४३२. ॐ वीरासनविधये नमः।

४३३. ॐ विराजे नमः।
४३४. ॐ वीरचूडामणये नमः।
४३५. ॐ हर्त्रे नमः।
४३६. ॐ तीव्रानन्दाय नमः।
४३७. ॐ नदीधराय नमः।
४३८. ॐ आत्माधाराय नमः।
४३९. ॐ त्रिशूलाङ्काय नमः।
४४०. ॐ शिपिविष्टाय नमः।
४४१. ॐ शिवाश्रयाय नमः।
४४२. ॐ बालखिल्याय नमः।
४४३. ॐ महाचाराय नमः।
४४४. ॐ तिग्मांशवे नमः।
४४५. ॐ वारिधये नमः।
४४६. ॐ खगाय नमः।
४४७. ॐ अभिरामाय नमः।
४४८. ॐ सुशरण्याय नमः।
४४९. ॐ सुब्रह्मण्याय नमः।
४५०. ॐ सुधापतये नमः।
४५१. ॐ मधुमते नमः।
४५२. ॐ कौशिकाय नमः।
४५३. ॐ गोमते नमः।
४५४. ॐ विरामाय नमः।
४५५. ॐ सर्वसाधनाय नमः।
४५६. ॐ ललाटाक्षाय नमः।
४५७. ॐ विश्वदेहाय नमः।
४५८. ॐ साराय नमः।
४५९. ॐ संसारचक्रभृते नमः।
४६०. ॐ अमोघदण्डाय नमः।
४६१. ॐ मध्यस्थाय नमः।
४६२. ॐ हिरण्याय नमः।
४६३. ॐ ब्रह्मवर्चसिने नमः।
४६४. ॐ परब्रह्मपदाय नमः।
४६५. ॐ हंसाय नमः।
४६६. ॐ शबराय नमः।
४६७. ॐ व्याघ्रकाय नमः।
४६८. ॐ अनलाय नमः।
४६९. ॐ रुचये नमः।
४७०. ॐ वररुचये नमः।
४७१. ॐ वन्द्याय नमः।
४७२. ॐ वाचस्पतये नमः।
४७३. ॐ अहर्पतये नमः।
४७४. ॐ रवये नमः।
४७५. ॐ विरोचनाय नमः।
४७६. ॐ स्कन्दाय नमः।

४७७. ॐ शास्त्रे नमः।
४७८. ॐ वैवस्वताय नमः।
४७९. ॐ अर्जुनाय नमः।
४८०. ॐ मुक्तये नमः।
४८१. ॐ उन्नतकीर्तये नमः।
४८२. ॐ शान्तरामाय नमः।
४८३. ॐ पुरञ्जयाय नमः।
४८४. ॐ कैलासपतये नमः।
४८५. ॐ कामारये नमः।
४८६. ॐ सवित्रे नमः।
४८७. ॐ रविलोचनाय नमः।
४८८. ॐ विद्वत्तमाय नमः।
४८९. ॐ वीतभयाय नमः।
४९०. ॐ विश्वकर्मणे नमः।
४९१. ॐ अनिवारिताय नमः।
४९२. ॐ नित्याय नमः।
४९३. ॐ नियतकल्याणाय नमः।
४९४. ॐ पुण्यश्रवणकीर्तनाय नमः।
४९५. ॐ दूरश्रवसे नमः।
४९६. ॐ विश्वसहाय नमः।
४९७. ॐ ध्येयाय नमः।
४९८. ॐ दुःस्वप्ननाशनाय नमः।
४९९. ॐ उत्तारकाय नमः।
**५००. ॐ दुष्कृतिघ्ने नमः।**
५०१. ॐ दुर्धर्षाय नमः।
५०२. ॐ दुःसहाय नमः।
५०३. ॐ अभयाय नमः।
५०४. ॐ अनादये नमः।
५०५. ॐ भूः नमः।
५०६. ॐ भुवः नमः।
५०७. ॐ लक्ष्म्यै नमः।
५०८. ॐ किरीटिने नमः।
५०९. ॐ त्रिदशाधिपाय नमः।
५१०. ॐ विश्वगोप्त्रे नमः।
५११. ॐ विश्वहर्त्रे नमः।
५१२. ॐ सुवीराय नमः।
५१३. ॐ रुचिराङ्गदिने नमः।
५१४. ॐ जननाय नमः।
५१५. ॐ जनजन्मादये नमः।
५१६. ॐ प्रीतिमते नमः।
५१७. ॐ नीतिमते नमः।
५१८. ॐ वसिष्ठाय नमः।
५१९. ॐ कश्यपाय नमः।

५२०. ॐ भानवे नमः।
५२१. ॐ भीमाय नमः।
५२२. ॐ भीमपराक्रमाय नमः।
५२३. ॐ प्रणवाय नमः।
५२४. ॐ सत्पथाचाराय नमः।
५२५. ॐ महाकायाय नमः।
५२६. ॐ महाधनुषे नमः।
५२७. ॐ जन्माधिपाय नमः।
५२८. ॐ महादेवाय नमः।
५२९. ॐ सकलागमपारगाय नमः।
५३०. ॐ तत्त्वाय नमः।
५३१. ॐ तत्त्वविदे नमः।
५३२. ॐ एकात्मने नमः।
५३३. ॐ विभूतये नमः।
५३४. ॐ भूतिभूषणाय नमः।
५३५. ॐ ऋषये नमः।
५३६. ॐ ब्राह्मणविदे नमः।
५३७. ॐ विष्णवे नमः।
५३८. ॐ जन्ममृत्युजरातिगाय नमः।
५३९. ॐ यज्ञाय नमः।
५४०. ॐ यज्ञपतये नमः।
५४१. ॐ यज्वने नमः।
५४२. ॐ यज्ञान्ताय नमः।
५४३. ॐ अमोघविक्रमायं नमः।
५४४. ॐ महेन्द्राय नमः।
५४५. ॐ दुर्भराय नमः।
५४६. ॐ सेनिने नमः।
५४७. ॐ यज्ञाङ्गाय नमः।
५४८. ॐ यज्ञवाहनाय नमः।
५४९. ॐ पञ्चब्रह्मसमुत्पत्तये नमंः।
५५०. ॐ विश्वतोविमलोदयाय नमः।
५५१. ॐ आत्मयोनये नमः।
५५२. ॐ अनाद्यन्ताय नमः।
५५३. ॐ षट्त्रिंशाय नमः।
५५४. ॐ लोकभृते नमः।
५५५. ॐ कवये नमः।
५५६. ॐ गायत्रीवल्लभाय नमः।
५५७. ॐ प्रांशवे नमः।
५५८. ॐ विश्वावासाय नमः।
५५९. ॐ सदाशिवाय नमः।
५६०. ॐ शिशवे नमः।

५६१. ॐ गिरिरताय नमः।
५६२. ॐ सम्राजे नमः।
५६३. ॐ सुषेणाय नमः।
५६४. ॐ सुरशत्रुघ्ने नमः।
५६५. ॐ अमेयाय नमः।
५६६. ॐ अरिष्टमथनाय नमः।
५६७. ॐ मुकुन्दाय नमः।
५६८. ॐ विगतज्वराय नमः।
५६९. ॐ स्वयंज्योतिषे नमः।
५७०. ॐ अनुज्योतिषे नमः।
५७१. ॐ अचलाय नमः।
५७२. ॐ परमेश्वराय नमः।
५७३. ॐ पिंगलाय नमः।
५७४. ॐ कपिलश्मश्रवे नमः।
५७५. ॐ शास्त्रनेत्राय नमः।
५७६. ॐ त्रयीतनवे नमः।
५७७. ॐ भगाय नमः।
५७८. ॐ विवस्वते नमः।
५७९. ॐ आदित्याय नमः।
५८०. ॐ योगाचाराय नमः।
५८१. ॐ दिवस्पतये नमः।
५८२. ॐ उदारकीर्तये नमः।
५८३. ॐ उद्योगिने नमः।
५८४. ॐ सद्योगिने नमः।
५८५. ॐ सदसन्मयाय नमः।
५८६. ॐ नक्षत्रमालिने नमः।
५८७. ॐ नाकेशाय नमः।
५८८. ॐ स्वाधिष्ठानषडाश्रयाय नमः।
५८९. ॐ पवित्रपादाय नमः।
५९०. ॐ पापारये नमः।
५९१. ॐ मणिपूराय नमः।
५९२. ॐ नभोगतये नमः।
५९३. ॐ हृत्पुण्डरीकाय नमः।
५९४. ॐ आसीनाय नमः।
५९५. ॐ शुक्राशानाय नमः।
५९६. ॐ वृषाकपये नमः।
५९७. ॐ तुष्टाय नमः।
५९८. ॐ गृहपतये नमः।
५९९. ॐ कृष्णाय नमः।
**६००. ॐ समर्थाय नमः।**
६०१. ॐ अनर्थशासनाय नमः।
६०२. ॐ अधर्मशत्रवे नमः।
६०३. ॐ अक्षय्याय नमः।

६०४. ॐ पुरुहूताय नमः।
६०५. ॐ पुरुष्टुताय नमः।
६०६. ॐ बृहद्भुजाय नमः।
६०७. ॐ ब्रह्मगर्भाय नमः।
६०८. ॐ धर्मधेनवे नमः।
६०९. ॐ धनागमाय नमः।
६१०. ॐ जगद्धितैषिणे नमः।
६११. ॐ सुगताय नमः।
६१२. ॐ कुमाराय नमः।
६१३. ॐ कुशलागमाय नमः।
६१४. ॐ हिरण्यगर्भाय नमः।
६१५. ॐ ज्योतिष्मते नमः।
६१६. ॐ उपेन्द्राय नमः।
६१७. ॐ तिमिरापहाय नमः।
६१८. ॐ अरोगाय नमः।
६१९. ॐ तपनाध्यक्षाय नमः।
६२०. ॐ विश्वामित्राय नमः।
६२१. ॐ द्विजेश्वराय नमः।
६२२. ॐ ब्रह्मज्योतिषे नमः।
६२३. ॐ सुबुद्धात्मने नमः।
६२४. ॐ बृहज्ज्योतिषे नमः।
६२५. ॐ अनुत्तमाय नमः।
६२६. ॐ मातामहाय नमः।
६२७. ॐ मातरिश्वने नमः।
६२८. ॐ मनस्विने नमः।
६२९. ॐ नागहारधृषे नमः।
६३०. ॐ पुलस्त्याय नमः।
६३१. ॐ पुलहाय नमः।
६३२. ॐ अगस्त्याय नमः।
६३३. ॐ जातूकर्ण्याय नमः।
६३४. ॐ पराशराय नमः।
६३५. ॐ निरावरणविज्ञानाय नमः।
६३६. ॐ विरञ्चाय नमः।
६३७. ॐ विष्टरश्रवसे नमः।
६३८. ॐ आत्मभुवे नमः।
६३९. ॐ अनिरुद्धाय नमः।
६४०. ॐ अत्रये नमः।
६४१. ॐ ज्ञानमूर्तये नमः।
६४२. ॐ महायशसे नमः।
६४३. ॐ लोकचूडामणये नमः।
६४४. ॐ वीराय नमः।
६४५. ॐ चन्द्राय नमः।
६४६. ॐ सत्यपराक्रमाय नमः।

६४७. ॐ व्यालकल्पाय नमः।
६४८. ॐ महाकल्पाय नमः।
६४९. ॐ कल्पवृक्षाय नमः।
६५०. ॐ कलानिधये नमः।
६५१. ॐ अलंकरिष्णवे नमः।
६५२. ॐ अचलाय नमः।
६५३. ॐ रोचिष्णवे नमः।
६५४. ॐ विक्रमोत्तमाय नमः।
६५५. ॐ आशवे नमः।
६५६. ॐ सप्तपतये नमः।
६५७. ॐ वेगिने नमः।
६५८. ॐ प्लवनाय नमः।
६५९. ॐ शिखिसारथये नमः।
६६०. ॐ असन्तुष्टाय नमः।
६६१. ॐ अतिथये नमः।
६६२. ॐ शुक्राय नमः।
६६३. ॐ प्रमाथिने नमः।
६६४. ॐ पापशासनाय नमः।
६६५. ॐ वसुश्रवसे नमः।
६६६. ॐ कव्यवाहाय नमः।
६६७. ॐ प्रतप्ताय नमः।
६६८. ॐ विश्वभोजनाय नमः।
६६९. ॐ जयाय नमः।
६७०. ॐ जरारिशमनाय नमः।
६७१. ॐ लोहिताश्वाय नमः।
६७२. ॐ तनूनपदे नमः।
६७३. ॐ पृषदश्वाय नमः।
६७४. ॐ नभोयोनये नमः।
६७५. ॐ सुप्रतीकाय नमः।
६७६. ॐ तमिस्रघ्ने नमः।
६७७. ॐ निदाघाय नमः।
६७८. ॐ तपनाय नमः।
६७९. ॐ मेघाय नमः।
६८०. ॐ पक्षाय नमः।
६८१. ॐ परपुरञ्जयाय नमः।
६८२. ॐ सुखिने नमः।
६८३. ॐ नीलाय नमः।
६८४. ॐ सुनिष्पन्नाय नमः।
६८५. ॐ सुरभये नमः।
६८६. ॐ शिशिरात्मकाय नमः।
६८७. ॐ वसन्ताय नमः।
६८८. ॐ माधवाय नमः।
६८९. ॐ ग्रीष्माय नमः।
६९०. ॐ नभस्याय नमः।

६९१. ॐ बीजवाहनाय नमः।
६९२. ॐ मनसे नमः।
६९३. ॐ बुद्धये नमः।
६९४. ॐ अहंकाराय नमः।
६९५. ॐ क्षेत्रज्ञाय नमः।
६९६. ॐ क्षेत्रपालकाय नमः।
६९७. ॐ जमदग्नये नमः।
६९८. ॐ जलनिधये नमः।
६९९. ॐ विपाकाय नमः।
**७००. ॐ विश्वकारकाय नमः।**
७०१. ॐ अधराय नमः।
७०२. ॐ अनुत्तराय नमः।
७०३. ॐ ज्ञेयाय नमः।
७०४. ॐ ज्येष्ठाय नमः।
७०५. ॐ निश्रेयसालयाय नमः।
७०६. ॐ शैलाय नमः।
७०७. ॐ नाम्ने नमः।
७०८. ॐ तरवे नमः।
७०९. ॐ दाहाय नमः।
७१०. ॐ दानवारये नमः।
७११. ॐ अरिन्दमाय नमः।
७१२. ॐ चामुण्डिने नमः।
७१३. ॐ जानकाय नमः।
७१४. ॐ चारुनिःशल्याय नमः।
७१५. ॐ लोकशल्यहृते नमः।
७१६. ॐ चतुर्वेदाय नमः।
७१७. ॐ चतुर्भावाय नमः।
७१८. ॐ चतुराय नमः।
७१९. ॐ चत्वरप्रियाय नमः।
७२०. ॐ आम्नायाय नमः।
७२१. ॐ समाम्नायाय नमः।
७२२. ॐ अतीर्थदेवाय नमः।
७२३. ॐ शिवालयाय नमः।
७२४. ॐ वज्ररूपाय नमः।
७२५. ॐ महादेवाय नमः।
७२६. ॐ सर्वरूपाय नमः।
७२७. ॐ चराचराय नमः।
७२८. ॐ न्यायनिर्वाहकाय नमः।
७२९. ॐ न्यायाय नमः।
७३०. ॐ न्यायगम्याय नमः।
७३१. ॐ निरञ्जनाय नमः।
७३२. ॐ सहस्रमूर्ध्ने नमः।
७३३. ॐ देवेन्द्राय नमः।
७३४. ॐ सर्वशस्त्रप्रभञ्जनाय नमः।

७३५. ॐ मुण्डाय नमः।
७३६. ॐ विरूपाय नमः।
७३७. ॐ विकृताय नमः।
७३८. ॐ दण्डिने नमः।
७३९. ॐ दान्ताय नमः।
७४०. ॐ गुणोत्तराय नमः।
७४१. ॐ पिंगलाक्षाय नमः।
७४२. ॐ हर्यश्वाय नमः।
७४३. ॐ नीलग्रीवाय नमः।
७४४. ॐ निरामयाय नमः।
७४५. ॐ सहस्रबाहवे नमः।
७४६. ॐ सर्वेशाय नमः।
७४७. ॐ शरण्याय नमः।
७४८. ॐ सर्वलोकधृषे नमः।
७४९. ॐ पद्मासनाय नमः।
७५०. ॐ परंज्योतिषे नमः।
७५१. ॐ परावराय नमः।
७५२. ॐ परं फलाय नमः।
७५३. ॐ पद्मगर्भाय नमः।
७५४. ॐ महागर्भाय नमः।
७५५. ॐ विश्वगर्भाय नमः।
७५६. ॐ विलक्षणाय नमः।
७५७. ॐ यज्ञभुजे नमः।
७५८. ॐ वरदाय नमः।
७५९. ॐ देवाय नमः।
७६०. ॐ वरेशाय नमः।
७६१. ॐ महास्वनाय नमः।
७६२. ॐ देवासुरगुरवे नमः।
७६३. ॐ देवाय नमः।
७६४. ॐ शंकराय नमः।
७६५. ॐ लोकसंभवाय नमः।
७६६. ॐ सर्ववेदमयाय नमः।
७६७. ॐ अचिन्त्याय नमः।
७६८. ॐ देवतायै नमः।
७६९. ॐ सत्यसंभवाय नमः।
७७०. ॐ देवाधिदेवाय नमः।
७७१. ॐ देवर्षये नमः।
७७२. ॐ देवासुरवरप्रदाय नमः।
७७३. ॐ देवासुरेश्वराय नमः।
७७४. ॐ दिव्याय नमः।
७७५. ॐ देवासुरमहेश्वराय नमः।
७७६. ॐ देवासुराणां वरदाय नमः।
७७७. ॐ देवासुरनमस्कृताय नमः।

७७८. ॐ देवासुरमहामात्राय नमः।

७७९. ॐ देवासुरमहाश्रयाय नमः।

७८०. ॐ सर्वदेवमयाय नमः।

७८१. ॐ अचिन्त्याय नमः।

७८२. ॐ देवानामात्मसंभवाय नमः।

७८३. ॐ ईड्याय नमः।

७८४. ॐ अनीशाय नमः।

७८५. ॐ सुरव्याप्ताय नमः।

७८६. ॐ देवसिंहाय नमः।

७८७. ॐ दिवाकराय नमः।

७८८. ॐ विबुधाग्रवराय नमः।

७८९. ॐ श्रेष्ठाय नमः।

७९०. ॐ सर्वदेवोत्तमोत्तमाय नमः।

७९१. ॐ शिवध्यानरताय नमः।

७९२. ॐ श्रीमते नमः।

७९३. ॐ शिखिने नमः।

७९४. ॐ श्रीपर्वतप्रियाय नमः।

७९५. ॐ वज्रहस्ताय नमः।

७९६. ॐ प्रतिष्टम्भिने नमः।

७९७. ॐ विश्वज्ञानिने नमः।

७९८. ॐ निशाकराय नमः।

७९९. ॐ ब्रह्मचारिणे नमः।

**८००. ॐ लोकचारिणे नमः।**

८०१. ॐ धर्मचारिणे नमः।

८०२. ॐ धनाधिपाय नमः।

८०३. ॐ नन्दिने नमः।

८०४. ॐ नन्दीश्वराय नमः।

८०५. ॐ नग्नाय नमः।

८०६. ॐ नग्नव्रतधराय नमः।

८०७. ॐ शुचये नमः।

८०८. ॐ लिंगाध्यक्षाय नमः।

८०९. ॐ सुराध्यक्षाय नमः।

८१०. ॐ धर्माध्यक्षाय नमः।

८११. ॐ युगावहाय नमः।

८१२. ॐ स्ववशाय नमः।

८१३. ॐ स्वर्गताय नमः।

८१४. ॐ स्वर्गाय नमः।

८१५. ॐ सर्गाय नमः।

८१६. ॐ स्वरमयाय नमः।

८१७. ॐ स्वनाय नमः।

८१८. ॐ बीजाध्यक्षाय नमः।

८१९. ॐ बीजकर्त्रे नमः।
८२०. ॐ धर्मकृते नमः।
८२१. ॐ धर्मवर्धनाय नमः।
८२२. ॐ दम्भाय नमः।
८२३. ॐ अदम्भाय नमः।
८२४. ॐ महादम्भाय नमः।
८२५. ॐ सर्वभूतमहेश्वराय नमः।
८२६. ॐ श्मशाननिलयाय नमः।
८२७. ॐ तिष्याय नमः।
८२८. ॐ सेतवे नमः।
८२९. ॐ अप्रतिमाकृतये नमः।
८३०. ॐ लोकोत्तराय नमः।
८३१. ॐ स्फुटालोकाय नमः।
८३२. ॐ त्र्यम्बकाय नमः।
८३३. ॐ भक्तवत्सलाय नमः।
८३४. ॐ अन्धकारये नमः।
८३५. ॐ मखद्वेषिणे नमः।
८३६. ॐ विष्णुकन्धरपातनाय नमः।
८३७. ॐ वीतदोषाय नमः।
८३८. ॐ अक्षयगुणाय नमः।
८३९. ॐ अन्तकारये नमः।
८४०. ॐ पूषदन्तभिदे नमः।
८४१. ॐ धूर्जटये नमः।
८४२. ॐ खण्डपरशवे नमः।
८४३. ॐ सकलाय नमः।
८४४. ॐ निष्कलाय नमः।
८४५. ॐ अनघाय नमः।
८४६. ॐ आकाराय नमः।
८४७. ॐ सकलाधाराय नमः।
८४८. ॐ पाण्डुरागाय नमः।
८४९. ॐ मृगाय नमः।
८५०. ॐ नटाय नमः।
८५१. ॐ पूर्णाय नमः।
८५२. ॐ पूरयित्रे नमः।
८५३. ॐ पुण्याय नमः।
८५४. ॐ सुकुमाराय नमः।
८५५. ॐ सुलोचनाय नमः।
८५६. ॐ सामगेयाय नमः।
८५७. ॐ प्रियाय नमः।
८५८. ॐ क्रूराय नमः।

८५९. ॐ पुण्यकीर्तये नमः।
८६०. ॐ अनामयाय नमः।
८६१. ॐ मनोजवाय नमः।
८६२. ॐ तीर्थकराय नमः।
८६३. ॐ जटिलाय नमः।
८६४. ॐ जीवितेश्वराय नमः।
८६५. ॐ जीवितान्तकराय नमः।
८६६. ॐ अनन्ताय नमः।
८६७. ॐ वसुरेतसे नमः।
८६८. ॐ वसुप्रदाय नमः।
८६९. ॐ सद्गतये नमः।
८७०. ॐ सत्कृतये नमः।
८७१. ॐ शान्ताय नमः।
८७२. ॐ कालकण्ठाय नमः।
८७३. ॐ कलाधराय नमः।
८७४. ॐ मानिने नमः।
८७५. ॐ मन्तवे नमः।
८७६. ॐ महाकालाय नमः।
८७७. ॐ सद्भूतये नमः।
८७८. ॐ सत्परायणाय नमः।
८७९. ॐ चन्द्रसञ्जीवनाय नमः।
८८०. ॐ शास्त्रे नमः।
८८१. ॐ लोकरूढाय नमः।
८८२. ॐ महाधिपत्य नमः।
८८३. ॐ लोकबन्धवे नमः।
८८४. ॐ लोकनाथाय नमः।
८८५. ॐ कृतज्ञाय नमः।
८८६. ॐ कृतभूषणाय नमः।
८८७. ॐ अनपायाय नमः।
८८८. ॐ अक्षराय नमः।
८८९. ॐ शान्ताय नमः।
८९०. ॐ सर्वशस्त्रभृतां वराय नमः।
८९१. ॐ तेजोमयाय नमः।
८९२. ॐ द्युतिधराय नमः।
८९३. ॐ लोकमायाय नमः।
८९४. ॐ अग्रण्ये नमः।
८९५. ॐ अणवे नमः।
८९६. ॐ सुविस्मिताय नमः।
८९७. ॐ प्रसन्नात्मने नमः।
८९८. ॐ दुर्जयाय नमः।
८९९. ॐ दुरतिक्रमाय नमः।

**९००. ॐ ज्योतिर्मयाय नमः।**
९०१. ॐ निराकाराय नमः।
९०२. ॐ जगन्नाथाय नमः।
९०३. ॐ जलेश्वराय नमः।
९०४. ॐ तुम्बिने नमः।
९०५. ॐ वीणायै नमः।
९०६. ॐ महाशोकाय नमः।
९०७. ॐ विशोकाय नमः।
९०८. ॐ शोकनाशनाय नमः।
९०९. ॐ त्रिलोकेशाय नमः।
९१०. ॐ त्रिलोकात्मने नमः।
९११. ॐ सिद्धये नमः।
९१२. ॐ शुद्धये नमः।
९१३. ॐ अधोक्षजाय नमः।
९१४. ॐ अव्यक्तलक्षणाय नमः।
९१५. ॐ व्यक्ताय नमः।
९१६. ॐ व्यक्ताव्यक्ताय नमः।
९१७. ॐ विशांपत्ये नमः।
९१८. ॐ वरशीलाय नमः।
९१९. ॐ वरगुणाय नमः।
९२०. ॐ गताय नमः।
९२१. ॐ गव्ययनाय नमः।
९२२. ॐ मयाय नमः।
९२३. ॐ ब्रह्मणे नमः।
९२४. ॐ विष्णवे नमः।
९२५. ॐ प्रजापालाय नमः।
९२६. ॐ हंसाय नमः।
९२७. ॐ हंसगतये नमः।
९२८. ॐ मताय नमः।
९२९. ॐ वेधसे नमः।
९३०. ॐ विधात्रे नमः।
९३१. ॐ स्रष्ट्रे नमः।
९३२. ॐ कर्त्रे नमः।
९३३. ॐ हर्त्रे नमः।
९३४. ॐ चतुर्मुखाय नमः।
९३५. ॐ कैलासशिखरावासिने नमः।
९३६. ॐ सर्वावासिने नमः।
९३७. ॐ सदागतये नमः।
९३८. ॐ हिरण्यगर्भाय नमः।
९३९. ॐ गगनाय नमः।
९४०. ॐ पुरुषाय नमः।

९४१. ॐ पूर्वजाय नमः।

९४२. ॐ पित्रे नमः।

९४३. ॐ भूतालयाय नमः।

९४४. ॐ भूतपतये नमः।

९४५. ॐ भूतिदाय नमः।

९४६. ॐ भुवनेश्वराय नमः।

९४७. ॐ संयमाय नमः।

९४८. ॐ योगविद्भ्रष्टाय नमः।

९४९. ॐ ब्रह्मण्याय नमः।

९५०. ॐ ब्राह्मणप्रियाय नमः।

९५१. ॐ देवप्रियाय नमः।

९५२. ॐ देवनाथाय नमः।

९५३. ॐ दैवज्ञाय नमः।

९५४. ॐ देवचिन्तकाय नमः।

९५५. ॐ विषमाक्षाय नमः।

९५६. ॐ विशालाक्षाय नमः।

९५७. ॐ वृषदाय नमः।

९५८. ॐ वृषवर्धनाय नमः।

९५९. ॐ निर्ममाय नमः।

९६०. ॐ निरहंकाराय नमः।

९६१. ॐ निर्मोहाय नमः।

९६२. ॐ निरुपप्लवाय नमः।

९६३. ॐ दर्पघ्ने नमः।

९६४. ॐ दर्पणाय नमः।

९६५. ॐ दृप्ताय नमः।

९६६. ॐ सर्वर्तुपरिवर्तकाय नमः।

९६७. ॐ सप्तजिह्वाय नमः।

९६८. ॐ सहस्रार्चिषे नमः।

९६९. ॐ स्निग्धाय नमः।

९७०. ॐ प्रकृतिदक्षिणाय नमः।

९७१. ॐ भूतभव्यभवन्नाथाय नमः।

९७२. ॐ प्रभवाय नमः।

९७३. ॐ भ्रान्तिनाशनाय नमः।

९७४. ॐ अर्थाय नमः।

९७५. ॐ अनर्थाय नमः।

९७६. ॐ महाकोशाय नमः।

९७७. ॐ परकार्यैकपण्डिताय नमः।

९७८. ॐ निष्कण्टकाय नमः।

९७९. ॐ कृतानन्दाय नमः।

९८०. ॐ निर्व्याजाय नमः।

९८१. ॐ व्याजदर्शनाय नमः।
९८२. ॐ सत्त्ववते नमः।
९८३. ॐ सात्त्विकाय नमः।
९८४. ॐ सत्याय नमः।
९८५. ॐ कीर्तिस्तम्भाय नमः।
९८६. ॐ कृतागमाय नमः।
९८७. ॐ अकम्पिताय नमः।
९८८. ॐ गुणग्राहिणे नमः।
९८९. ॐ नैकात्मने नमः।
९९०. ॐ लोककर्मकृते नमः।
९९१. ॐ श्रीवल्लभाय नमः।
९९२. ॐ शिवारम्भाय नमः।
९९३. ॐ शान्तभद्राय नमः।
९९४. ॐ समञ्जसाय नमः।
९९५. ॐ भूशयाय नमः।
९९६. ॐ भूतिकृते नमः।
९९७. ॐ भूतये नमः।
९९८. ॐ विभूतये नमः।
९९९. ॐ भूतिवाहनाय नमः।
**१०००. ॐ अकायाय नमः।**
१००१. ॐ भूतकायस्थाय नमः।
१००२. ॐ कालज्ञानाय नमः।
१००३. ॐ महापटवे नमः।
१००४. ॐ सत्यव्रताय नमः।
१००५. ॐ महात्यागाय नमः।
१००६. ॐ इच्छाशान्तिपरायणाय नमः।
१००७. ॐ परार्थवृत्तिवरदाय नमः।
१००८. ॐ विविक्ताय नमः।
१००९. ॐ श्रुतिसागराय नमः।
१०१०. ॐ अनिर्विण्णाय नमः।
१०११. ॐ गुणग्राहिणे नमः।
१०१२. ॐ निष्कलङ्काय नमः।
१०१३. ॐ कलङ्कघ्ने नमः।
१०१४. ॐ स्वभावभद्राय नमः।
१०१५. ॐ मध्यस्थाय नमः।
१०१६. ॐ शत्रुघ्नाय नमः।
१०१७. ॐ शत्रुनाशनाय नमः।
१०१८. ॐ शिखण्डिने नमः।
१०१९. ॐ कवचिने नमः।
१०२०. ॐ शूलिने नमः।
१०२१. ॐ जटिने नमः।

१०२२. ॐ मुण्डिने नमः।
१०२३. ॐ कुण्डलिने नमः।
१०२४. ॐ मेखलिने नमः।
१०२५. ॐ कञ्चुकिने नमः।
१०२६. ॐ खड्गिने नमः।
१०२७. ॐ मालिने नमः।
१०२८. ॐ संसारसारथये नमः।
१०२९. ॐ अमृत्यवे नमः।
१०३०. ॐ सर्वजिते नमः।
१०३१. ॐ सिंहाय नमः।
१०३२. ॐ तेजोराशये नमः।
१०३३. ॐ महामणये नमः।
१०३४. ॐ असंख्येयाय नमः।
१०३५. ॐ अप्रमेयात्मने नमः।
१०३६. ॐ वीर्यवते नमः।
१०३७. ॐ कार्यकोविदाय नमः।
१०३८. ॐ वेद्याय नमः।
१०३९. ॐ वैद्याय नमः।
१०४०. ॐ वियद्गोप्त्रे नमः।
१०४१. ॐ सप्तावरमुनीश्वराय नमः।
१०४२. ॐ अनुत्तमाय नमः।
१०४३. ॐ दुराधर्षाय नमः।
१०४४. ॐ मधुराय नमः।
१०४५. ॐ प्रियदर्शनाय नमः।
१०४६. ॐ सुरेशाय नमः।
१०४७. ॐ शरणाय नमः।
१०४८. ॐ शर्मणे नमः।
१०४९. ॐ सर्वस्मै नमः।
१०५०. ॐ शब्दवतांगतये नमः।
१०५१. ॐ कालाय नमः।
१०५२. ॐ पक्षाय नमः।
१०५३. ॐ करङ्कारये नमः।
१०५४. ॐ कंकणीकृतवासुकये नमः।
१०५५. ॐ महेष्वासाय नमः।
१०५६. ॐ महीभर्त्रे नमः।
१०५७. ॐ निष्कलंकाय नमः।
१०५८. ॐ विशृङ्खलाय नमः।
१०५९. ॐ द्युमणये नमः।
१०६०. ॐ तरणये नमः।
१०६१. ॐ धन्याय नमः।
१०६२. ॐ सिद्धिदाय नमः।

१०६३. ॐ सिद्धिसाधनाय नमः।

१०६४. ॐ विवृताय नमः।

१०६५. ॐ संवृताय नमः।

१०६६. ॐ शिल्पिने नमः।

१०६७. ॐ व्यूढोरस्काय नमः।

१०६८. ॐ महाभुजाय नमः।

१०६९. ॐ एकज्योतिषे नमः।

१०७०. ॐ निरातंकाय नमः।

१०७१. ॐ नरनारायणप्रियाय नमः।

१०७२. ॐ निर्लेपाय नमः।

१०७३. ॐ निष्प्रपञ्चात्मने नमः।

१०७४. ॐ निर्व्यग्राय नमः।

१०७५. ॐ व्यग्रनाशनाय नमः।

१०७६. ॐ स्तव्याय नमः।

१०७७. ॐ स्तवप्रियाय नमः।

१०७८. ॐ स्तोत्रे नमः।

१०७९. ॐ व्योममूर्तये नमः।

१०८०. ॐ अनाकुलाय नमः।

१०८१. ॐ निरवद्यपदोपायाय नमः।

१०८२. ॐ विद्याराशये नमः।

१०८३. ॐ अकृत्रिमाय नमः।

१०८४. ॐ प्रशान्तबुद्धये नमः।

१०८५. ॐ अक्षुद्राय नमः।

१०८६. ॐ क्षुद्रघ्ने नमः।

१०८७. ॐ नित्यसुन्दराय नमः।

१०८८. ॐ ध्येयाय नमः।

१०८९. ॐ अग्रधुर्याय नमः।

१०९०. ॐ धात्रीशाय नमः।

१०९१. ॐ साकल्याय नमः।

१०९२. ॐ शर्वरीपतये नमः।

१०९३. ॐ परमार्थगुरवे नमः।

१०९४. ॐ व्यापिने नमः।

१०९५. ॐ शुचये नमः।

१०९६. ॐ आश्रितवत्सलाय नमः।

१०९७. ॐ रसाय नमः।

१०९८. ॐ रसज्ञाय नमः।

१०९९. ॐ सारज्ञाय नमः।

**११००. ॐ सर्वसत्त्वावलम्बनाय नमः।**

ॐ

*महाभारतेऽनुशासनपर्वणि*

# श्रीशिवसहस्त्रनामस्तोत्रम्

## उपमन्युरुवाच

स्थिरः स्थाणुः प्रभुर्भीमः प्रवरो वरदो वरः ।
सर्वात्मा सर्वविख्यातः सर्वः सर्वकरो भवः ॥ १ ॥

जटी चर्मी शिखण्डी च सर्वाङ्गः सर्वभावनः ।
हरश्च हरिणाक्षश्च सर्वभूतहरः प्रभुः ॥ २ ॥

प्रवृत्तिश्च निवृत्तिश्च नियतः शाश्वतो ध्रुवः ।
श्मशानवासी भगवान् खचरो गोचरोऽर्दनः ॥ ३ ॥

अभिवाद्यो महाकर्मा तपस्वी भूतभावनः ।
उन्मत्तवेषप्रच्छन्नः सर्वलोकप्रजापतिः ॥ ४ ॥

महारूपो महाकायो वृषरूपो महायशाः ।
महात्मा सर्वभूतात्मा विश्वरूपो महाहनुः ॥ ५ ॥

लोकपालोऽन्तर्हितात्मा प्रसादो हयगर्दभिः ।
पवित्रं च महांश्चैव नियमो नियमाश्रितः ॥ ६ ॥

सर्वकर्मा स्वयम्भूत आदिरादिकरो निधिः ।
सहस्राक्षो विशालाक्षः सोमो नक्षत्रसाधकः ॥ ७ ॥

चन्द्रः सूर्यः शनिः केतुर्ग्रहो ग्रहपतिर्वरः ।
अत्रिरत्र्या नमस्कर्ता मृगबाणार्पणोऽनघः ॥ ८ ॥

महातपा घोरतपा अदीनो दीनसाधकः ।
संवत्सरकरो मन्त्रः प्रमाणं परमं तपः ॥ ९ ॥

योगी योज्यो महाबीजो महारेता महाबलः ।
सुवर्णरेताः सर्वज्ञः सुबीजो बीजवाहनः ॥ १० ॥

दशबाहुस्त्वनिमिषो नीलकण्ठ उमापतिः ।
विश्वरूपः स्वयं श्रेष्ठो बलवीरोऽबलो गणः ॥ ११ ॥

गणकर्ता गणपतिर्दिग्वासाः काम एव च ।
मन्त्रवित् परमो मन्त्रः सर्वभावकरो हरः ॥ १२ ॥

कमण्डलुधरो धन्वी बाणहस्तः कपालवान् ।
अशनी शतघ्नी खड्गी पट्टिशी चायुधी महान् ॥ १३ ॥

स्रुवहस्तः सुरूपश्च तेजस्तेजस्करो निधिः ।
उष्णीषी च सुवक्त्रश्च उदग्रो विनतस्तथा ॥ १४ ॥

दीर्घश्च हरिकेशश्च सुतीर्थः कृष्ण एव च ।
शृगालरूपः सिद्धार्थो मुण्डः सर्वशुभङ्करः ॥ १५ ॥

अजश्च बहुरूपश्च गन्धधारी कपर्द्यपि ।
ऊर्ध्वरेता ऊर्ध्वलिङ्ग ऊर्ध्वशायी नभःस्थलः ॥ १६ ॥

त्रिजटी चीरवासाश्च रुद्रः सेनापतिर्विभुः ।
अहश्चरो नक्तञ्चरस्तिग्ममन्युः सुवर्चसः ॥ १७ ॥

गजहा दैत्यहा कालो लोकधाता गुणाकरः ।
सिंहशार्दूलरूपश्च आर्द्रचर्माम्बरावृतः ॥ १८ ॥
कालयोगी महानादः सर्वकामश्चतुष्पथः ।
निशाचरः प्रेतचारी भूतचारी महेश्वरः ॥ १९ ॥

बहुभूतो बहुधरः स्वर्भानुरमितो गतिः ।
नृत्यप्रियो नित्यनर्तो नर्तकः सर्वलालसः ॥ २० ॥

घोरो महातपाः पाशो नित्यो गिरिरुहो नभः ।
सहस्रहस्तो विजयो व्यवसायो ह्यतन्द्रितः ॥ २१ ॥

अधर्षणो धर्षणात्मा यज्ञहा कामनाशकः ।
दक्षयागापहारी च सुसहो मध्यमस्तथा ॥ २२ ॥

तेजोऽपहारी बलहा मुदितोऽर्थोऽजितोऽवरः ।
गम्भीरघोषो गंभीरो गम्भीरबलवाहनः ॥ २३ ॥

न्यग्रोधरूपो न्यग्रोधो वृक्षकर्णस्थितिर्विभुः ।
सुतीक्ष्णदशनश्चैव महाकायो महाननः ॥ २४ ॥

विष्वक्सेनो हरिर्यज्ञः संयुगापीडवाहनः ।
तीक्ष्णतापश्च हर्यश्वः सहायः कर्मकालवित् ॥ २५ ॥

विष्णुप्रसादितो यज्ञः समुद्रो वडवामुखः ।
हुताशनसहायश्च प्रशान्तात्मा हुताशनः ॥ २६ ॥

उग्रतेजा महातेजा जन्यो विजयकालवित् ।
ज्योतिषामयनं सिद्धिः सर्वविग्रह एव च ॥ २७ ॥

शिखी मुण्डी जटी ज्वाली मूर्तिजो मूर्द्धगो बली ।
वेणवी पणवी ताली खली कालकटंकटः ॥ २८ ॥

नक्षत्रविग्रहमतिर्गुणबुद्धिर्लयोऽगमः ।
प्रजापतिर्विश्वबाहुर्विभागः सर्वतोऽमुखः ॥ २९ ॥

विमोचनः सुसरणो हिरण्यकवचोद्भवः ।
मेढ्रजो बलचारी च महीचारी स्रुतस्तथा ॥ ३० ॥

सर्वतूर्यनिनादी च सर्वातोद्यपरिग्रहः ।
व्यालरूपो गुहावासी गुहो माली तरंगवित् ॥ ३१ ॥

त्रिदशस्त्रिकालधृक् कर्मसर्वबन्धविमोचनः ।
बन्धनस्त्वसुरेन्द्राणां युधि शत्रुविनाशनः ॥ ३२ ॥

सांख्यप्रसादो दुर्वासाः सर्वसाधुनिषेवितः ।
प्रस्कन्दनो विभागज्ञोऽतुल्यो यज्ञविभागवित् ॥ ३३ ॥

सर्ववासः सर्वचारी दुर्वासा वासवोऽमरः ।
हैमो हेमकरोऽयज्ञः सर्वधारी धरोत्तमः ॥ ३४ ॥

लोहिताक्षो महाक्षश्च विजयाक्षो विशारदः ।
संग्रहो निग्रहः कर्ता सर्पचीरनिवासनः ॥ ३५ ॥

मुख्योऽमुख्यश्च देहश्च काहलिः सर्वकामदः ।
सर्वकालप्रसादश्च सुबलो बलरूपधृक् ॥ ३६ ॥

सर्वकामवरश्चैव सर्वदः सर्वतोमुखः ।
आकाशनिर्विरूपश्च निपाती ह्यवशः खगः ॥ ३७ ॥

रौद्ररूपोंऽशुरादित्यो बहुरश्मिः सुवर्चसी ।
वसुवेगो महावेगो मनोवेगो निशाचरः ॥ ३८ ॥

सर्ववासी श्रियावासी उपदेशकरोऽकरः ।
मुनिरात्मनिरालोकः सम्भग्नश्च सहस्रदः ॥ ३९ ॥

पक्षी च पक्षरूपश्च अतिदीप्तो विशाम्पतिः ।
उन्मादो मदनः कामो ह्यश्वत्थोऽर्थकरो यशः ॥ ४० ॥

वामदेवश्च वामश्च प्राग् दक्षिणश्च वामनः ।
सिद्धयोगी महर्षिश्च सिद्धार्थः सिद्धसाधकः ॥ ४१ ॥

भिक्षुश्च भिक्षुरूपश्च विपणो मृदुरव्ययः ।
महासेनो विशाखश्च षष्टिभागो गवां पतिः ॥ ४२ ॥

वज्रहस्तश्च विष्कम्भी चमूस्तम्भन एव च ।
वृत्तावृत्तकरस्तालो मधुर्मधुकलोचनः ॥ ४३ ॥

वाचस्पत्यो वाजसनो नित्यमाश्रमपूजितः ।
ब्रह्मचारी लोकचारी सर्वचारी विचारवित् ॥ ४४ ॥

ईशान ईश्वरः कालो निशाचारी पिनाकवान् ।
निमित्तस्थो निमित्तं च नन्दिर्नन्दिकरो हरिः ॥ ४५ ॥

नन्दीश्वरश्च नन्दी च नन्दनो नन्दिवर्द्धनः ।
भगहारी निहन्ता च कालो ब्रह्मा पितामहः ॥ ४६ ॥

चतुर्मुखो महालिंगश्चारुलिंगस्तथैव च ।
लिंगाध्यक्षः सुराध्यक्षो योगाध्यक्षो युगावहः ॥ ४७ ॥

बीजाध्यक्षो बीजकर्ता अध्यात्मानुगतो बलः ।
इतिहासः सकल्पश्च गौतमोऽथ निशाकरः ॥ ४८ ॥

दम्भो ह्यदम्भो वैदम्भो वश्यो वशकरः कलिः ।
लोककर्ता पशुपतिर्महाकर्ता ह्यनौषधः ॥ ४९ ॥

अक्षरं परमं ब्रह्म बलवच्छक्र एव च ।
नीतिर्ह्यनीतिः शुद्धात्मा शुद्धो मान्यो गतागतः ॥ ५० ॥

बहुप्रसादः सुस्वप्नो दर्पणोऽथ त्वमित्रजित् ।
वेदकारो मन्त्रकारो विद्वान् समरमर्दनः ॥ ५१ ॥

महामेघनिवासी च महाघोरो वशी करः ।
अग्निज्वालो महाज्वालो अतिधूम्रो हुतो हविः ॥ ५२ ॥

वृषणः शङ्करो नित्यं वर्चस्वी धूमकेतनः ।
नीलस्तथाङ्गलुब्धश्च शोभनो निरवग्रहः ॥ ५३ ॥

स्वस्तिदः ·स्वस्तिभावश्च भागी भागकरो लघुः ।
उत्सङ्गश्च महाङ्गश्च महागर्भपरायणः ॥ ५४ ॥

कृष्णवर्णः सुवर्णश्च इन्द्रियं सर्वदेहिनाम् ।
महापादो महाहस्तो महाकायो महायशाः ॥ ५५ ॥

महामूर्धा महामात्रो महानेत्रो निशालयः ।
महान्तको महाकर्णो महोष्ठश्च महाहनुः ॥ ५६ ॥

महानासो महाकम्बुर्महाग्रीवः श्मशानभाक् ।
महावक्षा महोरस्को ह्यन्तरात्मा मृगालयः ॥ ५७ ॥

लम्बनो लम्बितोष्ठश्च महामायः पयोनिधिः ।
महादन्तो महादंष्ट्रो महाजिह्वो महामुखः ॥ ५८ ॥

महानखो महारोमा महाकोशो महाजटः ।
प्रसन्नश्च प्रसादश्च प्रत्ययो गिरिसाधनः ॥ ५९ ॥

स्नेहनोऽस्नेहनश्चैव अजितश्च महामुनिः ।
वृक्षाकारो वृक्षकेतुरनलो वायुवाहनः ॥ ६० ॥

गण्डली मेरुधामा च देवाधिपतिरेव च ।
अथर्वशीर्षः सामास्य ऋक्सहस्रामितेक्षणः ॥ ६१ ॥

यजुःपादभुजो गुह्यः प्रकाशो जंगमस्तथा ।
अमोघार्थः प्रसादश्च अभिगम्यः सुदर्शनः ॥ ६२ ॥

उपकारः प्रियः सर्वः कनकः काञ्चनच्छविः ।
नाभिर्नन्दिकरो भावः पुष्करस्थपतिः स्थिरः ॥ ६३ ॥

द्वादशस्त्रासनश्चाद्यो यज्ञो यज्ञसमाहितः ।
नक्तं कलिश्च कालश्च मकरः कालपूजितः ॥ ६४ ॥

सगणो गणकारश्च भूतवाहनसारथिः ।
भस्मशयो भस्मगोप्ता भस्मभूतस्तरुर्गणः ॥ ६५ ॥

लोकपालस्तथालोको महात्मा सर्वपूजितः ।
शुक्लस्त्रिशुक्लः सम्पन्नः शुचिर्भूतनिषेवितः ॥ ६६ ॥

आश्रमस्थः क्रियावस्थो विश्वकर्ममतिर्वरः ।
विशालशाखस्ताम्रोष्ठो ह्यम्बुजालः सुनिश्चलः ॥ ६७ ॥

कपिलः कपिशः शुक्ल आयुश्चैव परोऽपरः ।
गन्धर्वो ह्यदितिस्तार्क्ष्यः सुविज्ञेयः सुशारदः ॥ ६८ ॥

परश्वधायुधो देवो अनुकारी सुबान्धवः ।
तुम्बवीणो महाक्रोध ऊर्ध्वरेता जलेशयः ॥ ६९ ॥

उग्रो वंशकरो वंशो वंशनादो ह्यनिन्दितः ।
सर्वाङ्गरूपो मायावी सुहृदो ह्यनिलोऽनलः ॥ ७० ॥

बन्धनो बन्धकर्ता च सुबन्धनविमोचनः ।
सयज्ञारिः सकामारिर्महादंष्ट्रो महायुधः ॥ ७१ ॥

बहुधा निन्दितः शर्वः शङ्करः शङ्करोऽधनः ।
अमरेशो महादेवो विश्वदेवः सुरारिहा ॥ ७२ ॥

अहिर्बुध्न्योऽनिलाभश्च चेकितानो हविस्तथा ।
अजैकपाच्च कापाली त्रिशंकुरजितः शिवः ॥ ७३ ॥

धन्वन्तरिर्धूमकेतुः स्कन्दो वैश्रवणस्तथा ।
धाता शक्रश्च विष्णुश्च मित्रस्त्वष्टा ध्रुवो धरः ॥ ७४ ॥

प्रभावः सर्वगो वायुरर्यमा सविता रविः ।
उषङ्गुश्च विधाता च मान्धाता भूतभावनः ॥ ७५ ॥

विभुर्वर्णविभावी च सर्वकामगुणावहः ।
पद्मनाभो महागर्भश्चन्द्रवक्त्रोऽनिलोऽनलः ॥ ७६ ॥

बलवांश्चोपशान्तश्च पुराणः पुण्यचञ्चुरी ।
कुरुकर्ता कुरुवासी कुरुभूतो गुणौषधः ॥ ७७ ॥

सर्वाशयो दर्भचारी सर्वेषां प्राणिनां पतिः ।
देवदेवः सुखासक्तः सदसत्सर्वरत्नवित् ॥ ७८ ॥

कैलासगिरिवासी च हिमवद्गिरिसंश्रयः ।
कूलहारी कूलकर्ता बहुविद्यो बहुप्रदः ॥ ७९ ॥

वणिजो वर्धकी वृक्षो बकुलश्चन्दनश्छदः ।
सारग्रीवो महाजत्रुरलोलश्च महौषधः ॥ ८० ॥

सिद्धार्थकारी सिद्धार्थश्छन्दोव्याकरणोत्तरः ।
सिंहनादः सिंहदंष्ट्रः सिंहगः सिंहवाहनः ॥ ८१ ॥

प्रभावात्मा जगत्कालस्थालो लोकहितस्तरुः ।
सारङ्गो नवचक्राङ्गः केतुमाली सभावनः ॥ ८२ ॥

भूतालयो भूतपतिरहोरात्रमनिन्दितः ।
वाहिता सर्वभूतानां निलयश्च विभुर्भवः ।
अमोघः संयतो ह्यश्वो भोजनः प्राणधारणः ॥ ८३ ॥

धृतिमान् मतिमान् दक्षः सत्कृतश्च युगाधिपः ।
गोपालिर्गोपतिर्ग्रामो गोचर्मवसनो हरिः ॥ ८४ ॥

हिरण्यबाहुश्च तथा गुहापालः प्रवेशिनाम् ।
प्रकृष्टारिर्महाहर्षो जितकामो जितेन्द्रियः ॥ ८५ ॥

गान्धारश्च सुवासश्च तपःसक्तो रतिर्नरः ।
महागीतो महानृत्यो ह्यप्सरोगणसेवितः ॥ ८६ ॥

महाकेतुर्महाधातुर्नैकसानुचरश्चलः ।
आवेदनीय आदेशः सर्वगन्धसुखावहः ॥ ८७ ॥

तोरणस्तारणो वातः परिधी पतिखेचरः ।
संयोगो वर्धनो वृद्धो अतिवृद्धो गुणाधिकः ॥ ८८ ॥

नित्य आत्मसहायश्च देवासुरपतिः पतिः ।
युक्तश्च युक्तबाहुश्च देवो दिविसुपर्वणः ॥ ८९ ॥

आषाढश्च सुषाढश्च ध्रुवोऽथ हरिणो हरः ।
वपुरावर्तमानेभ्यो वसुश्रेष्ठो महापथः ॥ ९० ॥

शिरोहारी विमर्शश्च सर्वलक्षणलक्षितः ।
अक्षश्च रथयोगी च सर्वयोगी महाबलः ॥ ९१ ॥

समाम्नायोऽसमाम्नायस्तीर्थदेवो महारथः ।
निर्जीवो जीवनो मन्त्रः शुभाक्षो बहुकर्कशः ॥ ९२ ॥

रत्नप्रभूतो रत्नाङ्गो महार्णवनिपानवित् ।
मूलं विशालो ह्यमृतो व्यक्ताव्यक्तस्तपोनिधिः ॥ ९३ ॥

आरोहणोऽधिरोहश्च शीलधारी महायशाः ।
सेनाकल्पो महाकल्पो योगो युगकरो हरिः ॥ ९४ ॥

युगरूपो महारूपो महानागहनोऽवधः ।
न्यायनिर्वपणः पादः पण्डितो ह्यचलोपमः ॥ ९५ ॥

बहुमालो महामालः शशी हरसुलोचनः ।
विस्तारो लवणः कूपस्त्रियुगः सफलोदयः ॥ ९६ ॥

त्रिलोचनो विषण्णाङ्गो मणिविद्धो जटाधरः ।
बिन्दुर्विसर्गः सुमुखः शरः सर्वायुधः सहः ॥ ९७ ॥

निवेदनः सुखाजातः सुगन्धारो महाधनुः ।
गन्धपाली च भगवानुत्थानः सर्वकर्मणाम् ॥ ९८ ॥

मन्थानो बहुलो वायुः सकलः सर्वलोचनः ।
तलस्तालः करस्थाली ऊर्ध्वसंहननो महान् ॥ ९९ ॥

छत्रं सुच्छत्रो विख्यातो लोकः सर्वाश्रयः क्रमः ।
मुण्डो विरूपो विकृतो दण्डी कुण्डी विकुर्वणः ॥ १०० ॥

हर्यक्षः ककुभो वज्री शतजिह्वः सहस्रपात् ।
सहस्रमूर्धा देवेन्द्रः सर्वदेवमयो गुरुः ॥ १०१ ॥

सहस्रबाहुः सर्वाङ्गः शरण्यः सर्वलोककृत् ।
पवित्रं त्रिककुन्मन्त्रः कनिष्ठः कृष्णपिङ्गलः ॥ १०२ ॥

ब्रह्मदण्डविनिर्माता शतघ्नीपाशशक्तिमान् ।
पद्मगर्भो महागर्भो ब्रह्मगर्भो जलोद्भवः ॥ १०३ ॥

गभस्तिर्ब्रह्मकृद् ब्रह्मी ब्रह्मविद् ब्राह्मणो गतिः ।
अनन्तरूपो नैकात्मा तिग्मतेजाः स्वयम्भुवः ॥ १०४ ॥

ऊर्ध्वगात्मा पशुपतिर्वातरंहा मनोजवः ।
चन्दनी पद्मनालाग्रः सुरभ्युत्तरणो नरः ॥ १०५ ॥

कर्णिकारमहास्रग्वी नीलमौलिः पिनाकधृत् ।
उमापतिरुमाकान्तो जाह्नवीधृदुमाधवः ॥ १०६ ॥

वरो वराहो वरदो वरेण्यः सुमहास्वनः ।
महाप्रसादो दमनः शत्रुहा श्वेतपिङ्गलः ॥ १०७ ॥

पीतात्मा परमात्मा च प्रयतात्मा प्रधानधृत् ।
सर्वपार्श्वमुखस्त्र्यक्षो धर्मसाधारणो वरः ॥ १०८ ॥

चराचरात्मा सूक्ष्मात्मा अमृतो गोवृषेश्वरः ।
साध्यर्षिर्वसुरादित्यो विवस्वान् सवितामृतः ॥ १०९ ॥

व्यासः सर्गः सुसंक्षेपो विस्तरः पर्ययो नरः ।
ऋतुः संवत्सरो मासः पक्षः संख्यासमापनः ॥ ११० ॥

कलाः काष्ठा लवा मात्रा मुहूर्ताहः क्षपाः क्षणाः ।
विश्वक्षेत्रं प्रजाबीजं लिङ्गमाद्यस्तु निर्गमः ॥ १११ ॥

सदसद् व्यक्तमव्यक्तं पिता माता पितामहः ।
स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं त्रिविष्टपम् ॥ ११२ ॥

निर्वाणं ह्लादनश्चैव ब्रह्मलोकः परा गतिः ।
देवासुरविनिर्माता देवासुरपरायणः ॥ ११३ ॥

देवासुरगुरुर्देवो देवासुरनमस्कृतः ।
देवासुरमहामात्रो देवासुरगणाश्रयः ॥ ११४ ॥

देवासुरगणाध्यक्षो देवासुरगणाग्रणीः ।
देवातिदेवो देवर्षिर्देवासुरवरप्रदः ॥ ११५ ॥

देवासुरेश्वरो विश्वो देवासुरमहेश्वरः ।
सर्वदेवमयोऽचिन्त्यो देवतात्माऽऽत्मसम्भवः ॥ ११६ ॥

उद्भित् त्रिविक्रमो वैद्यो विरजो नीरजोऽमरः ।
ईड्यो हस्तीश्वरो व्याघ्रो देवसिंहो नरर्षभः ॥ ११७ ॥

विबुधोऽग्रवरः सूक्ष्मः सर्वदेवस्तपोमयः ।
सुयुक्तः शोभनो वज्री प्रासानां प्रभवोऽव्ययः ॥ ११८ ॥

गुहः कान्तो निजः सर्गः पवित्रं सर्वपावनः ।
शृङ्गी शृङ्गप्रियो बभ्रूः राजराजो निरामयः ॥ ११९ ॥

अभिरामः सुरगणो विरामः सर्वसाधनः ।
ललाटाक्षो विश्वदेवो हरिणो ब्रह्मवर्चसः ॥ १२० ॥

स्थावराणां पतिश्चैव नियमेन्द्रियवर्धनः ।
सिद्धार्थः सिद्धभूतार्थोऽचिन्त्यः सत्यव्रतः शुचिः ॥ १२१ ॥

व्रताधिपः परं ब्रह्म भक्तानां परमा गतिः ।
विमुक्तो मुक्ततेजाश्च श्रीमान् श्रीवर्धनो जगत् ॥ १२२ ॥

—

यथाप्रधानं भगवानिति भक्त्या स्तुतो मया ।
यन्न ब्रह्मादयो देवा विदुस्तत्त्वेन नर्षयः ॥ १२३ ॥

स्तोतव्यमर्च्यं वन्द्यं च कः स्तोष्यति जगत्पतिम् ।
भक्त्या त्वेवं पुरस्कृत्य मया यज्ञपतिर्विभुः ॥ १२४ ॥

ततोऽभ्यनुज्ञां सम्प्राप्य स्तुतो मतिमतां वरः ।
शिवमेभिः स्तुवन् देवं नामभिः पुष्टिवर्धनैः ॥ १२५ ॥

नित्ययुक्तः शुचिर्भक्तः प्राप्नोत्यात्मानमात्मना ॥ १२६ ॥

**॥ इति श्रीमहाभारतेऽनुशासनपर्वणि दानधर्मपर्वणि सप्तदशाध्याये महादेवसहस्रनामस्तोत्रम् ॥**

# ॥ अथ नामावलिः ॥

## विनियोगः

ॐ अस्य श्रीसदाशिवसहस्रनामस्तोत्रमंन्त्रस्य नारायण ऋषिः, श्रीसदाशिवो देवता, अनुष्टुप् छन्दः, सदाशिवो बीजं, गौरी शक्तिः, श्रीसदाशिवप्रीत्यर्थं बिल्वपत्राद्यर्पणे विनियोगः ।

## न्यासः

ॐ ॐ अंगुष्ठाभ्यां नमः । ॐ नं तर्जनीभ्यां नमः ।

ॐ मः मध्यमाभ्यां नमः । ॐ शिं अनामिकाभ्यां नमः ।

ॐ वां कनिष्ठिकाभ्यां नमः । ॐ यं करतलकरपृष्ठाभ्यां नमः ।

ॐ ॐ हृदयाय नमः । ॐ नं शिरसे स्वाहा ।

ॐ मः शिखायै वषट् । ॐ शिं कवचाय हुम् ।

ॐ वां नेत्रत्रयाय वौषट् । ॐ यं अस्त्राय फट् ।

## ध्यानम्

ॐ ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं
रत्नाकल्पोज्ज्वलांगं परशुमृगवराऽभीतिहस्तं प्रसन्नम् ।
पद्मासीनं समन्तात् स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं
विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पंचवक्त्रं त्रिनेत्रम् ।

१. ॐ स्थिराय नमः ।
२. ॐ स्थाणवे नमः ।
३. ॐ प्रभवे नमः ।
४. ॐ भीमाय नमः ।
५. ॐ प्रवराय नमः ।
६. ॐ वरदाय नमः ।
७. ॐ वराय नमः ।
८. ॐ सर्वात्मने नमः ।
९. ॐ सर्वविख्याताय नमः ।
१०. ॐ सर्वस्मै नमः ।
११. ॐ सर्वकराय नमः ।
१२. ॐ भवाय नमः ।
१३. ॐ जटिने नमः ।
१४. ॐ चर्मिणे नमः ।
१५. ॐ शिखण्डिने नमः ।
१६. ॐ सर्वाङ्गाय नमः ।
१७. ॐ सर्वभावनाय नमः ।
१८. ॐ हराय नमः ।
१९. ॐ हरिणाक्षाय नमः ।
२०. ॐ सर्वभूतहराय नमः ।
२१. ॐ प्रभवे नमः ।
२२. ॐ प्रवृत्तये नमः ।
२३. ॐ निवृत्तये नमः ।
२४. ॐ नियताय नमः ।
२५. ॐ शाश्वताय नमः ।
२६. ॐ ध्रुवाय नमः ।
२७. ॐ श्मशानवासिने नमः ।
२८. ॐ भगवते नमः ।
२९. ॐ खचराय नमः ।
३०. ॐ गोचराय नमः ।
३१. ॐ अर्दनाय नमः ।
३२. ॐ अभिवाद्याय नमः ।
३३. ॐ महाकर्मणे नमः ।
३४. ॐ तपस्विने नमः ।
३५. ॐ भूतभावनाय नमः ।
३६. ॐ उन्मत्तवेषप्रच्छन्नाय नमः।
३७. ॐ सर्वलोकप्रजापतये नमः।
३८. ॐ महारूपाय नमः ।
३९. ॐ महाकायाय नमः ।
४०. ॐ वृषरूपाय नमः ।
४१. ॐ महायशसे नमः ।
४२. ॐ महात्मने नमः ।
४३. ॐ सर्वभूतात्मने नमः ।
४४. ॐ विश्वरूपाय नमः ।

४५. ॐ महाह्नवे नमः ।
४६. ॐ लोकपालाय नमः ।
४७. ॐ अन्तर्हितात्मने नमः ।
४८. ॐ प्रसादाय नमः ।
४९. ॐ हयगर्दभये नमः ।
५०. ॐ पवित्राय नमः ।
५१. ॐ महते नमः ।
५२. ॐ नियमाय नमः ।
५३. ॐ नियमाश्रिताय नमः ।
५४. ॐ सर्वकर्मणे नमः ।
५५. ॐ स्वयम्भूताय नमः ।
५६. ॐ आदये नमः ।
५७. ॐ आदिकराय नमः ।
५८. ॐ निधये नमः ।
५९. ॐ सहस्राक्षाय नमः ।
६०. ॐ विशालाक्षाय नमः ।
६१. ॐ सोमाय नमः ।
६२. ॐ नक्षत्रसाधकाय नमः ।
६३. ॐ चन्द्राय नमः ।
६४. ॐ सूर्याय नमः ।
६५. ॐ शनये नमः ।
६६. ॐ केतवे नमः ।
६७. ॐ ग्रहाय नमः ।
६८. ॐ ग्रहपतये नमः ।
६९. ॐ वराय नमः ।
७०. ॐ अत्रये नमः ।
७१. ॐ अत्र्या नमस्कर्त्रे नमः ।
७२. ॐ मृगबाणार्पणाय नमः ।
७३. ॐ अनघाय नमः ।
७४. ॐ महातपसे नमः ।
७५. ॐ घोरतपसे नमः ।
७६. ॐ अदीनाय नमः ।
७७. ॐ दीनसाधकाय नमः ।
७८. ॐ संवत्सरकराय नमः ।
७९. ॐ मन्त्राय नमः ।
८०. ॐ प्रमाणाय नमः ।
८१. ॐ परमतपसे नमः ।
८२. ॐ योगिने नमः ।
८३. ॐ योज्याय नमः ।
८४. ॐ महाबीजाय नमः ।
८५. ॐ महारेतसे नमः ।
८६. ॐ महाबलाय नमः ।
८७. ॐ सुवर्णरेतसे नमः ।
८८. ॐ सर्वज्ञाय नमः ।

८९. ॐ सुबीजाय नमः ।
९०. ॐ बीजवाहनाय नमः ।
९१. ॐ दशबाहवे नमः ।
९२. ॐ अनिमिषाय नमः ।
९३. ॐ नीलकण्ठाय नमः ।
९४. ॐ उमापतये नमः ।
९५. ॐ विश्वरूपाय नमः ।
९६. ॐ स्वयं श्रेष्ठाय नमः ।
९७. ॐ बलवीराय नमः ।
९८. ॐ अबलगणाय नमः ।
९९. ॐ गणकर्त्रे नमः ।
**१००. ॐ गणपतये नमः ।**
१०१. ॐ दिग्वाससे नमः ।
१०२. ॐ कामाय नमः ।
१०३. ॐ मन्त्रविदे नमः ।
१०४. ॐ परममन्त्राय नमः ।
१०५. ॐ सर्वभावकराय नमः ।
१०६. ॐ हराय नमः ।
१०७. ॐ कमण्डलुधराय नमः ।
१०८. ॐ धन्विने नमः ।
१०९. ॐ बाणहस्ताय नमः ।
११०. ॐ कपालवते नमः ।
१११. ॐ अशनिने नमः ।
११२. ॐ शतघ्निने नमः ।
११३. ॐ खड्गिने नमः ।
११४. ॐ पट्टिशिने नमः ।
११५. ॐ आयुधिने नमः ।
११६. ॐ महते नमः ।
११७. ॐ स्रुवहस्ताय नमः ।
११८. ॐ सुरूपाय नमः ।
११९. ॐ तेजसे नमः :
१२०. ॐ तेजस्करनिधये नमः ।
१२१. ॐ उष्णीषिणे नमः ।
१२२. ॐ सुवक्त्राय नमः ।
१२३. ॐ उदग्राय नमः ।
१२४. ॐ विनताय नमः ।
१२५. ॐ दीर्घाय नमः ।
१२६. ॐ हरिकेशाय नमः ।
१२७. ॐ सुतीर्थाय नमः ।
१२८. ॐ कृष्णाय नमः ।
१२९. ॐ शृगालरूपाय नमः ।
१३०. ॐ सिद्धार्थाय नमः ।
१३१. ॐ मुण्डाय नमः ।
१३२. ॐ सर्वशुभङ्कराय नमः ।

१३३. ॐ अजाय नमः ।
१३४. ॐ बहुरूपाय नमः ।
१३५. ॐ गन्धधारिणे नमः ।
१३६. ॐ कपर्दिने नमः ।
१३७. ॐ ऊर्ध्वरेतसे नमः ।
१३८. ॐ ऊर्ध्वलिंगाय नमः ।
१३९. ॐ ऊर्ध्वशायिने नमः ।
१४०. ॐ नभःस्थलाय नमः ।
१४१. ॐ त्रिजटिने नमः ।
१४२. ॐ चीरवाससे नमः ।
१४३. ॐ रुद्राय नमः ।
१४४. ॐ सेनापतये नमः ।
१४५. ॐ विभवे नमः ।
१४६. ॐ अहश्चराय नमः ।
१४७. ॐ नक्तञ्चराय नमः ।
१४८. ॐ तिग्ममन्यवे नमः ।
१४९. ॐ सुवर्चसाय नमः ।
१५०. ॐ गजघ्ने नमः ।
१५१. ॐ दैत्यघ्ने नमः ।
१५२. ॐ कालाय नमः ।
१५३. ॐ लोकधात्रे नमः ।
१५४. ॐ गुणाकराय नमः ।
१५५. ॐ सिंहशार्दूलरूपाय नमः ।
१५६. ॐ आर्द्रचर्माम्बरावृताय नमः ।
१५७. ॐ कालयोगिने नमः ।
१५८. ॐ महानादाय नमः ।
१५९. ॐ सर्वकामाय नमः ।
१६०. ॐ चतुष्पथाय नमः ।
१६१. ॐ निशाचराय नमः ।
१६२. ॐ प्रेतचारिणे नमः ।
१६३. ॐ भूतचारिणे नमः ।
१६४. ॐ महेश्वराय नमः ।
१६५. ॐ बहुभूताय नमः ।
१६६. ॐ बहुधराय नमः ।
१६७. ॐ स्वर्भानवे नमः ।
१६८. ॐ अमिताय नमः ।
१६९. ॐ गतये नमः ।
१७०. ॐ नृत्यप्रियाय नमः ।
१७१. ॐ नित्यनर्ताय नमः ।
१७२. ॐ नर्तकाय नमः ।
१७३. ॐ सर्वलालसाय नमः ।
१७४. ॐ घोराय नमः ।
१७५. ॐ महातपसे नमः ।
१७६. ॐ पाशाय नमः ।
१७७. ॐ नित्याय नमः ।
१७८. ॐ गिरिरुहाय नमः ।

१७९. ॐ नभसे नमः ।
१८०. ॐ सहस्रहस्ताय नमः ।
१८१. ॐ विजयाय नमः ।
१८२. ॐ व्यवसायाय नमः ।
१८३. ॐ अतन्द्रिताय नमः ।
१८४. ॐ अधर्षणाय नमः ।
१८५. ॐ धर्षणात्मने नमः ।
१८६. ॐ यज्ञघ्ने नमः ।
१८७. ॐ कामनाशकाय नमः ।
१८८. ॐ दक्षयागापहारिणे नमः ।
१८९. ॐ सुसहाय नमः ।
१९०. ॐ मध्यमाय नमः ।
१९१. ॐ तेजोऽपहारिणे नमः ।
१९२. ॐ बलघ्ने नमः ।
१९३. ॐ मुदिताय नमः ।
१९४. ॐ अर्थाय नमः ।
१९५. ॐ अजिताय नमः ।
१९६. ॐ अवराय नमः ।
१९७. ॐ गम्भीरघोषाय नमः ।
१९८. ॐ गम्भीराय नमः ।
१९९. ॐ गम्भीरबलवाहनाय नमः।
**२००. ॐ न्यग्रोधरूपाय नमः ।**
२०१. ॐ न्यग्रोधाय नमः ।
२०२. ॐ वृक्षकर्णस्थितये नमः ।
२०३. ॐ विभवे नमः ।
२०४. ॐ सुतीक्ष्णदशनाय नमः ।
२०५. ॐ महाकायाय नमः ।
२०६. ॐ महाननाय नमः ।
२०७. ॐ विष्वक्सेनाय नमः ।
२०८. ॐ हरये नमः ।
२०९. ॐ यज्ञाय नमः ।
२१०. ॐ संयुगापीडवाहनाय नमः।
२११. ॐ तीक्ष्णतापाय नमः ।
२१२. ॐ हर्यश्वाय नमः ।
२१३. ॐ सहायाय नमः ।
२१४. ॐ कर्मकालविदे नमः ।
२१५. ॐ विष्णुप्रसादिताय नमः ।
२१६. ॐ यज्ञाय नमः ।
२१७. ॐ समुद्राय नमः ।
२१८. ॐ वडवामुखाय नमः ।
२१९. ॐ हुताशनसहायाय नमः ।
२२०. ॐ प्रशान्तात्मने नमः ।
२२१. ॐ हुताशनाय नमः ।
२२२. ॐ उग्रतेजसे नमः ।
२२३. ॐ महातेजसे नमः ।
२२४. ॐ जन्याय नमः ।

२२५. ॐ विजयकालविदे नमः ।
२२६. ॐ ज्योतिषामयनाय नमः ।
२२७. ॐ सिद्धये नमः ।
२२८. ॐ सर्वविग्रहाय नमः ।
२२९. ॐ शिखिने नमः ।
२३०. ॐ मुण्डिने नमः ।
२३१. ॐ जटिने नमः ।
२३२. ॐ ज्वालिने नमः ।
२३३. ॐ मूर्तिजाय नमः ।
२३४. ॐ मूर्द्धगाय नमः ।
२३५. ॐ बलिने नमः ।
२३६. ॐ वेणविने नमः ।
२३७. ॐ पणविने नमः ।
२३८. ॐ तालिने नमः ।
२३९. ॐ खलिने नमः ।
२४०. ॐ कालकटंकटाय नमः ।
२४१. ॐ नक्षत्रविग्रहमतये नमः ।
२४२. ॐ गुणबुद्धये नमः ।
२४३. ॐ लयाय नमः ।
२४४. ॐ अगमाय नमः ।
२४५. ॐ प्रजापतये नमः ।
२४६. ॐ विश्वबाहवे नमः ।
२४७. ॐ विभागाय नमः ।
२४८. ॐ सर्वगाय नमः ।
२४९. ॐ अमुखाय नमः ।
२५०. ॐ विमोचनाय नमः ।
२५१. ॐ सुसरणाय नमः ।
२५२. ॐ हिरण्यकवचोद्भवाय नमः।
२५३. ॐ मेढ्रजाय नमः ।
२५४. ॐ बलचारिणे नमः ।
२५५. ॐ महीचारिणे नमः ।
२५६. ॐ स्रुताय नमः ।
२५७. ॐ सर्वतूर्यनिनादिने नमः ।
२५८. ॐ सर्वातोद्यपरिग्रहाय नमः।
२५९. ॐ व्यालरूपाय नमः ।
२६०. ॐ गुहावासिने नमः ।
२६१. ॐ गुहाय नमः ।
२६२. ॐ मालिने नमः ।
२६३. ॐ तरङ्गविदे नमः ।
२६४. ॐ त्रिदशाय नमः ।
२६५. ॐ त्रिकालधृषे नमः ।
२६६. ॐ कर्मसर्वबन्धविमोचनाय नमः।
२६७. ॐ असुरेन्द्राणां बन्धनाय नमः।
२६८. ॐ युधिशत्रुविनाशनाय नमः।
२६९. ॐ सांख्यप्रसादाय नमः ।
२७०. ॐ दुर्वाससे नमः ।

२७१. ॐ सर्वसाधुनिषेविताय नमः।
२७२. ॐ प्रस्कन्दनाय नमः ।
२७३. ॐ विभागज्ञाय नमः ।
२७४. ॐ अतुल्याय नमः ।
२७५. ॐ यज्ञविभागविदे नमः ।
२७६. ॐ सर्ववासाय नमः ।
२७७. ॐ सर्वचारिणे नमः ।
२७८. ॐ दुर्वाससे नमः ।
२७९. ॐ वासवाय नमः ।
२८०. ॐ अमराय नमः ।
२८१. ॐ हैमाय नमः ।
२८२. ॐ हेमकराय नमः ।
२८३. ॐ अयज्ञाय नमः ।
२८४. ॐ सर्वधारिणे नमः ।
२८५. ॐ धरोत्तमाय नमः ।
२८६. ॐ लोहिताक्षाय नमः ।
२८७. ॐ महाक्षाय नमः ।
२८८. ॐ विजयाक्षाय नमः ।
२८९. ॐ विशारदाय नमः ।
२९०. ॐ संग्रहाय नमः ।
२९१. ॐ निग्रहाय नमः ।
२९२. ॐ कर्त्रे नमः ।
२९३. ॐ सर्पचीरनिवासनाय नमः।
२९४. ॐ मुख्याय नमः ।
२९५. ॐ अमुख्याय नमः ।
२९६. ॐ देहाय नमः ।
२९७. ॐ काहलये नमः ।
२९८. ॐ सर्वकामदाय नमः ।
२९९. ॐ सर्वकालप्रसादाय नमः।
**३००. ॐ सुबलाय नमः ।**
३०१. ॐ बलरूपधृषे नमः ।
३०२. ॐ सर्वकामवराय नमः ।
३०३. ॐ सर्वदाय नमः ।
३०४. ॐ सर्वतोमुखाय नमः ।
३०५. ॐ आकाशनिर्विरूपाय नमः ।
३०६. ॐ निपातिने नमः ।
३०७. ॐ अवशाय नमः ।
३०८. ॐ खगाय नमः ।
३०९. ॐ रौद्ररूपाय नमः ।
३१०. ॐ अंशवे नमः ।
३११. ॐ आदित्याय नमः ।
३१२. ॐ बहुरश्मये नमः ।
३१३. ॐ सुवर्चसिने नमः ।
३१४. ॐ वसुवेगाय नमः ।

३१५. ॐ महावेगाय नमः ।
३१६. ॐ मनोवेगाय नमः ।
३१७. ॐ निशाचराय नमः ।
३१८. ॐ सर्ववासिने नमः ।
३१९. ॐ श्रियावासिने नमः ।
३२०. ॐ उपदेशकराय नमः ।
३२१. ॐ अकराय नमः ।
३२२. ॐ मुनये नमः ।
३२३. ॐ आत्मनिरालोकाय नमः।
३२४. ॐ सम्भग्नाय नमः ।
३२५. ॐ सहस्रदाय नमः ।
३२६. ॐ पक्षिणे नमः ।
३२७. ॐ पक्षरूपाय नमः ।
३२८. ॐ अतिदीप्ताय नमः ।
३२९. ॐ विशाम्पतये नमः ।
३३०. ॐ उन्मादाय नमः ।
३३१. ॐ मदनाय नमः ।
३३२. ॐ कामाय नमः ।
३३३. ॐ अश्वत्थाय नमः ।
३३४. ॐ अर्थकराय नमः ।
३३५. ॐ यशसे नमः ।
३३६. ॐ वामदेवाय नमः ।
३३७. ॐ वामाय नमः ।
३३८. ॐ प्राचे नमः ।
३३९. ॐ दक्षिणाय नमः ।
३४०. ॐ वामनाय नमः ।
३४१. ॐ सिद्धयोगिने नमः ।
३४२. ॐ महर्षये नमः ।
३४३. ॐ सिद्धार्थाय नमः ।
३४४. ॐ सिद्धसाधकाय नमः ।
३४५. ॐ भिक्षवे नमः ।
३४६. ॐ भिक्षुरूपाय नमः ।
३४७. ॐ विपणाय नमः ।
३४८. ॐ मृदवे नमः ।
३४९. ॐ अव्ययाय नमः ।
३५०. ॐ महासेनाय नमः ।
३५१. ॐ विशाखाय नमः ।
३५२. ॐ षष्टिभागाय नमः ।
३५३. ॐ गवाम्पतये नमः ।
३५४. ॐ वज्रहस्ताय नमः ।
३५५. ॐ विष्कम्भिने नमः ।
३५६. ॐ चमूस्तम्भनाय नमः ।
३५७. ॐ वृत्तावृत्तकराय नमः ।
३५८. ॐ तालाय नमः ।
३५९. ॐ मधवे नमः ।
३६०. ॐ मधुकलोचनाय नमः ।

३६१. ॐ वाचस्पत्याय नमः ।
३६२. ॐ वाजसनाय नमः ।
३६३. ॐ नित्यमाश्रमपूजिताय नमः ।
३६४. ॐ ब्रह्मचारिणे नमः ।
३६५. ॐ लोकचारिणे नमः ।
३६६. ॐ सर्वचारिणे नमः ।
३६७. ॐ विचारविदे नमः ।
३६८. ॐ ईशानाय नमः ।
३६९. ॐ ईश्वराय नमः ।
३७०. ॐ कालाय नमः ।
३७१. ॐ निशाचारिणे नमः ।
३७२. ॐ पिनाकवते नमः ।
३७३. ॐ निमित्तस्थाय नमः ।
३७४. ॐ निमित्ताय नमः ।
३७५. ॐ नन्दये नमः ।
३७६. ॐ नन्दिकराय नमः ।
३७७. ॐ हरये नमः ।
३७८. ॐ नन्दीश्वराय नमः ।
३७९. ॐ नन्दिने नमः ।
३८०. ॐ नन्दनाय नमः ।
३८१. ॐ नन्दिवर्द्धनाय नमः ।
३८२. ॐ भगहारिणे नमः ।
३८३. ॐ निहन्त्रे नमः ।
३८४. ॐ कालाय नमः ।
३८५. ॐ ब्रह्मणे नमः ।
३८६. ॐ पितामहाय नमः ।
३८७. ॐ चतुर्मुखाय नमः ।
३८८. ॐ महालिंगाय नमः ।
३८९. ॐ चारुलिंगाय नमः ।
३९०. ॐ लिंगाध्यक्षाय नमः ।
३९१. ॐ सुराध्यक्षाय नमः ।
३९२. ॐ योगाध्यक्षाय नमः ।
३९३. ॐ युगावहाय नमः ।
३९४. ॐ बीजाध्यक्षाय नमः ।
३९५. ॐ बीजकर्त्रे नमः ।
३९६. ॐ अध्यात्मानुगताय नमः ।
३९७. ॐ बलाय नमः ।
३९८. ॐ इतिहासाय नमः ।
३९९. ॐ सकल्पाय नमः ।
**४००. ॐ गौतमाय नमः ।**
४०१. ॐ निशाकराय नमः ।
४०२. ॐ दम्भाय नमः ।
४०३. ॐ अदम्भाय नमः ।
४०४. ॐ वैदम्भाय नमः ।
४०५. ॐ वश्याय नमः ।
४०६. ॐ वशकराय नमः ।

४०७. ॐ कलये नमः ।
४०८. ॐ लोककर्त्रे नमः ।
४०९. ॐ पशुपतये नमः ।
४१०. ॐ महाकर्त्रे नमः ।
४११. ॐ अनौषधाय नमः ।
४१२. ॐ अक्षराय नमः ।
४१३. ॐ परब्रह्मणे नमः ।
४१४. ॐ बलवते नमः ।
४१५. ॐ शक्राय नमः ।
४१६. ॐ नीतये नमः ।
४१७. ॐ अनीतये नमः ।
४१८. ॐ शुद्धात्मने नमः ।
४१९. ॐ शुद्धाय नमः ।
४२०. ॐ मान्याय नमः ।
४२१. ॐ गतागताय नमः ।
४२२. ॐ बहुप्रसादाय नमः ।
४२३. ॐ सुस्वप्नाय नमः ।
४२४. ॐ दर्पणाय नमः ।
४२५. ॐ अमित्रजिते नमः ।
४२६. ॐ वेदकाराय नमः ।
४२७. ॐ मन्त्रकाराय नमः ।
४२८. ॐ विदुषे नमः ।
४२९. ॐ समरमर्दनाय नमः ।
४३०. ॐ महामेघनिवासिने नमः ।
४३१. ॐ महाघोराय नमः ।
४३२. ॐ वशिने नमः ।
४३३. ॐ कराय नमः ।
४३४. ॐ अग्निज्वालाय नमः ।
४३५. ॐ महाज्वालाय नमः ।
४३६. ॐ अतिधूम्राय नमः ।
४३७. ॐ हुताय नमः ।
४३८. ॐ हविषे नमः ।
४३९. ॐ वृषणाय नमः ।
४४०. ॐ शंकराय नमः ।
४४१. ॐ नित्यवर्चस्विने नमः ।
४४२. ॐ धूमकेतनाय नमः ।
४४३. ॐ नीलाय नमः ।
४४४. ॐ अंगलुब्धाय नमः ।
४४५. ॐ शोभनाय नमः ।
४४६. ॐ निरवग्रहाय नमः ।
४४७. ॐ स्वस्तिदाय नमः ।
४४८. ॐ स्वस्तिभावाय नमः ।
४४९. ॐ भागिने नमः ।
४५०. ॐ भागकराय नमः ।
४५१. ॐ लघवे नमः ।
४५२. ॐ उत्संगाय नमः ।

४५३. ॐ महांगाय नमः ।
४५४. ॐ महागर्भपरायणाय नमः।
४५५. ॐ कृष्णवर्णाय नमः ।
४५६. ॐ सुवर्णाय नमः ।
४५७. ॐ सर्वदेहिनामिन्द्रियाय नमः।
४५८. ॐ महापादाय नमः ।
४५९. ॐ महाहस्ताय नमः ।
४६०. ॐ महाकायाय नमः ।
४६१. ॐ महायशसे नमः ।
४६२. ॐ महामूर्ध्ने नमः ।
४६३. ॐ महामात्राय नमः ।
४६४. ॐ महानेत्राय नमः ।
४६५. ॐ निशालयाय नमः ।
४६६. ॐ महान्तकाय नमः ।
४६७. ॐ महाकर्णाय नमः ।
४६८. ॐ महोष्ठाय नमः ।
४६९. ॐ महाहनवे नमः ।
४७०. ॐ महानासाय नमः ।
४७१. ॐ महाकम्बवे नमः ।
४७२. ॐ महाग्रीवाय नमः ।
४७३. ॐ श्मशानभाजे नमः ।
४७४. ॐ महावक्षसे नमः ।
४७५. ॐ महोरस्काय नमः ।
४७६. ॐ अन्तरात्मने नमः ।
४७७. ॐ मृगालयाय नमः ।
४७८. ॐ लम्बनाय नमः ।
४७९. ॐ लम्बितोष्ठाय नमः ।
४८०. ॐ महामायाय नमः ।
४८१. ॐ पयोनिधये नमः ।
४८२. ॐ महादन्ताय नमः ।
४८३. ॐ महादंष्ट्राय नमः ।
४८४. ॐ महाजिह्वाय नमः ।
४८५. ॐ महामुखाय नमः ।
४८६. ॐ महानखाय नमः ।
४८७. ॐ महारोम्णे नमः ।
४८८. ॐ महाकोशाय नमः ।
४८९. ॐ महाजटाय नमः ।
४९०. ॐ प्रसन्नाय नमः ।
४९१. ॐ प्रसादाय नमः ।
४९२. ॐ प्रत्ययाय नमः ।
४९३. ॐ गिरिसाधनाय नमः ।
४९४. ॐ स्नेहनाय नमः ।
४९५. ॐ अस्नेहनाय नमः ।
४९६. ॐ अजिताय नमः ।
४९७. ॐ महामुनये नमः ।
४९८. ॐ वृक्षाकाराय नमः ।

४९९. ॐ वृक्षकेतवे नमः ।

**५००. ॐ अनलाय नमः ।**

५०१. ॐ वायुवाहनाय नमः ।

५०२. ॐ गण्डलिने नमः ।

५०३. ॐ मेरुधाम्ने नमः ।

५०४. ॐ देवाधिपतये नमः ।

५०५. ॐ अथर्वशीर्षाय नमः ।

५०६. ॐ सामास्याय नमः ।

५०७. ॐ ऋक्सहस्रामितेक्षणाय नमः।

५०८. ॐ यजुःपादभुजाय नमः ।

५०९. ॐ गुह्याय नमः ।

५१०. ॐ प्रकाशाय नमः ।

५११. ॐ जङ्गमाय नमः ।

५१२. ॐ अमोघार्थाय नमः ।

५१३. ॐ प्रसादाय नमः ।

५१४. ॐ अभिगम्याय नमः ।

५१५. ॐ सुदर्शनाय नमः ।

५१६. ॐ उपकाराय नमः ।

५१७. ॐ प्रियाय नमः ।

५१८. ॐ सर्वस्मै नमः ।

५१९. ॐ कनकाय नमः ।

५२०. ॐ काञ्चनच्छवये नमः ।

५२१. ॐ नाभये नमः ।

५२२. ॐ नन्दिकराय नमः ।

५२३. ॐ भावाय नमः ।

५२४. ॐ पुष्करस्थपतये नमः ।

५२५. ॐ स्थिराय नमः ।

५२६. ॐ द्वादशाय नमः ।

५२७. ॐ त्रासनाय नमः ।

५२८. ॐ आद्याय नमः ।

५२९. ॐ यज्ञाय नमः ।

५३०. ॐ यज्ञसमाहिताय नमः ।

५३१. ॐ नक्ताय नमः ।

५३२. ॐ कलये नमः ।

५३३. ॐ कालाय नमः ।

५३४. ॐ मकराय नमः ।

५३५. ॐ कालपूजिताय नमः ।

५३६. ॐ सगणाय नमः ।

५३७. ॐ गणकाराय नमः ।

५३८. ॐ भूतवाहनसारथये नमः।

५३९. ॐ भस्मशयाय नमः ।

५४०. ॐ भस्मगोप्त्रे नमः ।

५४१. ॐ भस्मभूताय नमः ।

५४२. ॐ तरवे नमः ।

५४३. ॐ गणाय नमः ।

५४४. ॐ लोकपालाय नमः ।
५४५. ॐ अलोकाय नमः ।
५४६. ॐ महात्मने नमः ।
५४७. ॐ सर्वपूजिताय नमः ।
५४८. ॐ शुक्लाय नमः ।
५४९. ॐ त्रिशुक्लाय नमः ।
५५०. ॐ सम्पन्नाय नमः ।
५५१. ॐ शुचये नमः ।
५५२. ॐ भूतनिषेविताय नमः ।
५५३. ॐ आश्रमस्थाय नमः ।
५५४. ॐ क्रियावस्थाय नमः ।
५५५. ॐ विश्वकर्ममतये नमः ।
५५६. ॐ वराय नमः ।
५५७. ॐ विशालशाखाय नमः ।
५५८. ॐ ताम्रोष्ठाय नमः ।
५५९. ॐ अम्बुजालाय नमः ।
५६०. ॐ सुनिश्चलाय नमः ।
५६१. ॐ कपिलाय नमः ।
५६२. ॐ कपिशाय नमः ।
५६३. ॐ शुक्लाय नमः ।
५६४. ॐ आयुषे नमः ।
५६५. ॐ पराय नमः ।
५६६. ॐ अपराय नमः ।
५६७. ॐ गन्धर्वाय नमः ।
५६८. ॐ अदितये नमः ।
५६९. ॐ तार्क्ष्याय नमः ।
५७०. ॐ सुविज्ञेयाय नमः ।
५७१. ॐ सुशारदाय नमः ।
५७२. ॐ परश्वधायुधाय नमः ।
५७३. ॐ देवाय नमः ।
५७४. ॐ अनुकारिणे नमः ।
५७५. ॐ सुबान्धवाय नमः ।
५७६. ॐ तुम्बवीणाय नमः ।
५७७. ॐ महाक्रोधाय नमः ।
५७८. ॐ ऊर्ध्वरेतसे नमः ।
५७९. ॐ जलेशयाय नमः ।
५८०. ॐ उग्राय नमः ।
५८१. ॐ वंशकराय नमः ।
५८२. ॐ वंशाय नमः ।
५८३. ॐ वंशनादाय नमः ।
५८४. ॐ अनिन्दिताय नमः ।
५८५. ॐ सर्वाङ्गरूपाय नमः ।
५८६. ॐ मायाविने नमः ।
५८७. ॐ सुहृदाय नमः ।
५८८. ॐ अनिलाय नमः ।
५८९. ॐ अनलाय नमः ।

५९०. ॐ बन्धनाय नमः ।
५९१. ॐ बन्धकर्त्रे नमः ।
५९२. ॐ सुबन्धनविमोचनाय नमः।
५९३. ॐ सयज्ञारये नमः ।
५९४. ॐ सकामारये नमः ।
५९५. ॐ महादंष्ट्राय नमः ।
५९६. ॐ महायुधाय नमः ।
५९७. ॐ बहुधानिन्दिताय नमः।
५९८. ॐ शर्वाय नमः ।
५९९. ॐ शंकराय नमः ।
**६००. ॐ शंकराय नमः ।**
६०१. ॐ अधनाय नमः ।
६०२. ॐ अमरेशाय नमः ।
६०३. ॐ महादेवाय नमः ।
६०४. ॐ विश्वदेवाय नमः ।
६०५. ॐ सुरारिघ्ने नमः ।
६०६. ॐ अहिर्बुध्न्याय नमः ।
६०७. ॐ अनिलाभाय नमः ।
६०८. ॐ चेकितानाय नमः ।
६०९. ॐ हविषे नमः ।
६१०. ॐ अजैकपदे नमः ।
६११. ॐ कापालिने नमः ।
६१२. ॐ त्रिशंकवे नमः ।
६१३. ॐ अजिताय नमः ।
६१४. ॐ शिवाय नमः ।
६१५. ॐ धन्वन्तरये नमः ।
६१६. ॐ धूमकेतवे नमः ।
६१७. ॐ स्कन्दाय नमः ।
६१८. ॐ वैश्रवणाय नमः ।
६१९. ॐ धात्रे नमः ।
६२०. ॐ शक्राय नमः ।
६२१. ॐ विष्णवे नमः ।
६२२. ॐ मित्राय नमः ।
६२३. ॐ त्वष्ट्रे नमः ।
६२४. ॐ ध्रुवाय नमः ।
६२५. ॐ धराय नमः ।
६२६. ॐ प्रभावाय नमः ।
६२७. ॐ सर्ववायवे नमः ।
६२८. ॐ अर्यम्णे नमः ।
६२९. ॐ सवित्रे नमः ।
६३०. ॐ रवये नमः ।
६३१. ॐ उषङ्गवे नमः ।
६३२. ॐ विधात्रे नमः ।
६३३. ॐ मान्धात्रे नमः ।
६३४. ॐ भूतभावनाय नमः ।

६३५. ॐ विभवे नमः ।
६३६. ॐ वर्णविभाविने नमः ।
६३७. ॐ सर्वकामगुणावहाय नमः।
६३८. ॐ पद्मनाभाय नमः ।
६३९. ॐ महागर्भाय नमः ।
६४०. ॐ चन्द्रवक्त्राय नमः ।
६४१. ॐ अनिलाय नमः ।
६४२. ॐ अनलाय नमः ।
६४३. ॐ बलवते नमः ।
६४४. ॐ उपशान्ताय नमः ।
६४५. ॐ पुराणाय नमः ।
६४६. ॐ पुण्यचञ्चवे नमः ।
६४७. ॐ ये नमः ।
६४८. ॐ कुरुकर्त्रे नमः ।
६४९. ॐ कुरुवासिने नमः ।
६५०. ॐ कुरुभूताय नमः ।
६५१. ॐ गुणौषधाय नमः ।
६५२. ॐ सर्वाशयाय नमः ।
६५३. ॐ दर्भचारिणे नमः ।
६५४. ॐ सर्वप्राणिपतये नमः ।
६५५. ॐ देवदेवाय नमः ।
६५६. ॐ सुखासक्ताय नमः ।
६५७. ॐ सते नमः ।
६५८. ॐ असते नमः ।
६५९. ॐ सर्वरत्नविदे नमः ।
६६०. ॐ कैलासगिरिवासिने नमः।
६६१. ॐ हिमवद्गिरिसंश्रयाय नमः।
६६२. ॐ कूलहारिणे नमः ।
६६३. ॐ कूलकर्त्रे नमः ।
६६४. ॐ बहुविद्याय नमः ।
६६५. ॐ बहुप्रदाय नमः ।
६६६. ॐ वणिजाय नमः ।
६६७. ॐ वर्धकिने नमः ।
६६८. ॐ वृक्षाय नमः ।
६६९. ॐ बकुलाय नमः ।
६७०. ॐ चन्दनाय नमः ।
६७१. ॐ छदाय नमः ।
६७२. ॐ सारग्रीवाय नमः ।
६७३. ॐ महाजत्रवे नमः ।
६७४. ॐ अलोलाय नमः ।
६७५. ॐ महौषधाय नमः ।
६७६. ॐ सिद्धार्थकारिणे नमः ।
६७७. ॐ सिद्धार्थाय नमः ।

६७८. ॐ छन्दोव्याकरणोत्तराय नमः ।
६७९. ॐ सिंहनादाय नमः ।
६८०. ॐ सिंहदंष्ट्राय नमः ।
६८१. ॐ सिंहगाय नमः ।
६८२. ॐ सिंहवाहनाय नमः ।
६८३. ॐ प्रभावात्मने नमः ।
६८४. ॐ जगत्कालस्थालाय नमः।
६८५. ॐ लोकहिताय नमः ।
६८६. ॐ तरवे नमः ।
६८७. ॐ सारङ्गाय नमः ।
६८८. ॐ नवचक्राङ्गाय नमः ।
६८९. ॐ केतुमालिने नमः ।
६९०. ॐ सभावनाय नमः ।
६९१. ॐ भूतालयाय नमः ।
६९२. ॐ भूतपतये नमः ।
६९३. ॐ अहोरात्राय नमः ।
६९४. ॐ अनिन्दिताय नमः ।
६९५. ॐ सर्वभूतवाहित्रे नमः ।
६९६. ॐ सर्वभूतनिलयाय नमः ।
६९७. ॐ विभवे नमः ।
६९८. ॐ भवाय नमः ।
६९९. ॐ अमोघाय नमः ।
**७००. ॐ संयताय नमः ।**
७०१. ॐ अश्वाय नमः ।
७०२. ॐ भोजनाय नमः ।
७०३. ॐ प्राणधारणाय नमः ।
७०४. ॐ धृतिमते नमः ।
७०५. ॐ मतिमते नमः ।
७०६. ॐ दक्षाय नमः ।
७०७. ॐ सत्कृताय नमः ।
७०८. ॐ युगाधिपाय नमः ।
७०९. ॐ गोपालये नमः ।
७१०. ॐ गोपतये नमः ।
७११. ॐ ग्रामाय नमः ।
७१२. ॐ गोचर्मवसनाय नमः ।
७१३. ॐ हरये नमः ।
७१४. ॐ हिरण्यबाहवे नमः ।
७१५. ॐ प्रवेशिनां गुहापालाय नमः ।
७१६. ॐ प्रकृष्टारये नमः ।
७१७. ॐ महाहर्षाय नमः ।
७१८. ॐ जितकामाय नमः ।
७१९. ॐ जितेन्द्रियाय नमः ।
७२०. ॐ गान्धाराय नमः ।

७२१. ॐ सुवासाय नमः ।
७२२. ॐ तपःसक्ताय नमः ।
७२३. ॐ रतये नमः ।
७२४. ॐ नराय नमः ।
७२५. ॐ महागीताय नमः ।
७२६. ॐ महानृत्याय नमः ।
७२७. ॐ अप्सरोगणसेविताय नमः।
७२८. ॐ महाकेतवे नमः ।
७२९. ॐ महाधातवे नमः ।
७३०. ॐ नैकसानुचराय नमः ।
७३१. ॐ चलाय नमः ।
७३२. ॐ आवेदनीयाय नमः ।
७३३. ॐ आदेशाय नमः ।
७३४. ॐ सर्वगन्धसुखावहाय नमः।
७३५. ॐ तोरणाय नमः ।
७३६. ॐ तारणाय नमः ।
७३७. ॐ वाताय नमः ।
७३८. ॐ परिधिने नमः ।
७३९. ॐ पतिखेचराय नमः ।
७४०. ॐ संयोगवर्द्धनाय नमः ।
७४१. ॐ वृद्धाय नमः ।
७४२. ॐ अतिवृद्धाय नमः ।
७४३. ॐ गुणाधिकाय नमः ।
७४४. ॐ नित्यात्मसहायाय नमः।
७४५. ॐ देवासुरपतये नमः ।
७४६. ॐ पत्ये नमः ।
७४७. ॐ युक्ताय नमः ।
७४८. ॐ युक्तबाहवे नमः ।
७४९. ॐ दिविसुपर्वणदेवाय नमः।
७५०. ॐ आषाढाय नमः ।
७५१. ॐ सुषाढाय नमः ।
७५२. ॐ ध्रुवाय नमः ।
७५३. ॐ हरिणाय नमः ।
७५४. ॐ हराय नमः ।
७५५. ॐ आवर्तमानवपुषे नमः ।
७५६. ॐ वसुश्रेष्ठाय नमः ।
७५७. ॐ महापथाय नमः ।
७५८. ॐ विमर्शशिरोहारिणे नमः।
७५९. ॐ सर्वलक्षणलक्षिताय नमः।
७६०. ॐ अक्षरथयोगिने नमः।
७६१. ॐ सर्वयोगिने नमः ।
७६२. ॐ महाबलाय नमः ।
७६३. ॐ समाम्नायाय नमः ।
७६४. ॐ असमाम्नायाय नमः ।

७६५. ॐ तीर्थदेवाय नमः ।
७६६. ॐ महारथाय नमः ।
७६७. ॐ निर्जीवाय नमः ।
७६८. ॐ जीवनाय नमः ।
७६९. ॐ मन्त्राय नमः ।
७७०. ॐ शुभाक्षाय नमः ।
७७१. ॐ बहुकर्कशाय नमः ।
७७२. ॐ रत्नप्रभूताय नमः ।
७७३. ॐ रत्नाङ्गाय नमः ।
७७४. ॐ महार्णवनिपानविदे नमः।
७७५. ॐ मूलाय नमः ।
७७६. ॐ विशालाय नमः ।
७७७. ॐ अमृताय नमः ।
७७८. ॐ व्यक्ताव्यक्ताय नमः ।
७७९. ॐ तपोनिधये नमः ।
७८०. ॐ आरोहणाय नमः ।
७८१. ॐ अधिरोहाय नमः ।
७८२. ॐ शीलधारिणे नमः ।
७८३. ॐ महायशसे नमः ।
७८४. ॐ सेनाकल्पाय नमः ।
७८५. ॐ महाकल्पाय नमः ।
७८६. ॐ योगाय नमः ।
७८७. ॐ युगकराय नमः ।
७८८. ॐ हरये नमः ।
७८९. ॐ युगरूपाय नमः ।
७९०. ॐ महारूपाय नमः ।
७९१. ॐ महानागहनाय नमः ।
७९२. ॐ अवधाय नमः ।
७९३. ॐ न्यायनिर्वपणाय नमः ।
७९४. ॐ पादाय नमः ।
७९५. ॐ पण्डिताय नमः ।
७९६. ॐ अचलोपमाय नमः ।
७९७. ॐ बहुमालाय नमः ।
७९८. ॐ महामालाय नमः ।
७९९. ॐ शशिहरसुलोचनाय नमः।
**८००. ॐ विस्तारलवणकूपाय नमः।**
८०१. ॐ त्रियुगाय नमः ।
८०२. ॐ सफलोदयाय नमः ।
८०३. ॐ त्रिलोचनाय नमः ।
८०४. ॐ विषण्णाङ्गाय नमः ।
८०५. ॐ मणिविद्धाय नमः ।
८०६. ॐ जटाधराय नमः ।
८०७. ॐ बिन्दवे नमः ।

८०८. ॐ विसर्गाय नमः ।
८०९. ॐ सुमुखाय नमः ।
८१०. ॐ शराय नमः ।
८११. ॐ सर्वायुधाय नमः ।
८१२. ॐ सहाय नमः ।
८१३. ॐ निवेदनाय नमः ।
८१४. ॐ सुखाजाताय नमः ।
८१५. ॐ सुगन्धाराय नमः ।
८१६. ॐ महाधनुषे नमः ।
८१७. ॐ गन्धपालिभगवते नमः।
८१८. ॐ सर्वकर्मोत्थानाय नमः ।
८१९. ॐ मन्थानबहुलवायवे नमः।
८२०. ॐ सकलाय नमः ।
८२१. ॐ सर्वलोचनाय नमः ।
८२२. ॐ तलस्तालाय नमः ।
८२३. ॐ करस्थालिने नमः ।
८२४. ॐ ऊर्ध्वसंहननाय नमः ।
८२५. ॐ महते नमः ।
८२६. ॐ छत्राय नमः ।
८२७. ॐ सुच्छत्राय नमः ।
८२८. ॐ विख्यातलोकाय नमः ।
८२९. ॐ सर्वाश्रयक्रमाय नमः ।
८३०. ॐ मुण्डाय नमः ।
८३१. ॐ विरूपाय नमः ।
८३२. ॐ विकृताय नमः ।
८३३. ॐ दण्डिने नमः ।
८३४. ॐ कुण्डिने नमः ।
८३५. ॐ विकुर्वणाय नमः ।
८३६. ॐ हर्यक्षाय नमः ।
८३७. ॐ ककुभाय नमः ।
८३८. ॐ वज्रिणे नमः ।
८३९. ॐ शतजिह्वाय नमः ।
८४०. ॐ सहस्रपात्सहस्रमूर्ध्ने नमः।
८४१. ॐ देवेन्द्राय नमः ।
८४२. ॐ सर्वदेवमयाय नमः ।
८४३. ॐ गुरवे नमः ।
८४४. ॐ सहस्रबाहवे नमः ।
८४५. ॐ सर्वाङ्गाय नमः ।
८४६. ॐ शरण्याय नमः ।
८४७. ॐ सर्वलोककृते नमः ।
८४८. ॐ पवित्राय नमः ।
८४९. ॐ त्रिककुन्मन्त्राय नमः ।

८५०. ॐ कनिष्ठाय नमः ।
८५१. ॐ कृष्णपिंगलाय नमः ।
८५२. ॐ ब्रह्मदण्डविनिर्मात्रे नमः।
८५३. ॐ शतघ्नीपाशशक्तिमते नमः ।
८५४. ॐ पद्मगर्भाय नमः ।
८५५. ॐ महागर्भाय नमः ।
८५६. ॐ ब्रह्मगर्भाय नमः ।
८५७. ॐ जलोद्भवाय नमः ।
८५८. ॐ गभस्तये नमः ।
८५९. ॐ ब्रह्मकृते नमः ।
८६०. ॐ ब्रह्मिणे नमः ।
८६१. ॐ ब्रह्मविदे नमः ।
८६२. ॐ ब्राह्मणाय नमः ।
८६३. ॐ गतये नमः ।
८६४. ॐ अनन्तरूपाय नमः ।
८६५. ॐ नैकात्मने नमः ।
८६६. ॐ स्वयंभुवस्तिग्मतेजसे नमः ।
८६७. ॐ ऊर्ध्वगात्मने नमः ।
८६८. ॐ पशुपतये नमः ।
८६९. ॐ वातरंहसे नमः ।
८७०. ॐ मनोजवाय नमः ।
८७१. ॐ चन्दनिने नमः ।
८७२. ॐ पद्मनालाग्राय नमः ।
८७३. ॐ सुरभ्युत्तरणाय नमः ।
८७४. ॐ नराय नमः ।
८७५. ॐ कर्णिकारमहास्रग्विणे नमः ।
८७६. ॐ नीलमौलये नमः ।
८७७. ॐ पिनाकधृषे नमः ।
८७८. ॐ उमापतये नमः ।
८७९. ॐ उमाकान्ताय नमः ।
८८०. ॐ जाह्नवीधृषे नमः ।
८८१. ॐ उमाधवाय नमः ।
८८२. ॐ वरवराहाय नमः ।
८८३. ॐ वरदाय नमः ।
८८४. ॐ वरेण्याय नमः ।
८८५. ॐ सुमहास्वनाय नमः ।
८८६. ॐ महाप्रसादाय नमः ।
८८७. ॐ दमनाय नमः ।
८८८. ॐ शत्रुघ्ने नमः ।
८८९ ॐ श्वेतपिंगलाय नमः ।
८९०. ॐ पीतात्मने नमः ।
८९१. ॐ परमात्मने नमः ।

८९२. ॐ प्रयतात्मने नमः ।
८९३. ॐ प्रधानधृषे नमः ।
८९४. ॐ सर्वपार्श्वमुखाय नमः ।
८९५. ॐ त्र्यक्षाय नमः ।
८९६. ॐ धर्मसाधारणवराय नमः।
८९७. ॐ चराचरात्मने नमः ।
८९८. ॐ सूक्ष्मात्मने नमः ।
८९९. ॐ अमृतगोवृषेश्वराय नमः।
**९००. ॐ साध्यर्षये नमः ।**
९०१. ॐ आदित्यवसवे नमः ।
९०२. ॐ विवस्वत्सवित्रमृताय नमः ।
९०३. ॐ व्यासाय नमः ।
९०४. ॐ सर्गसुसंक्षेपविस्तराय नमः ।
९०५. ॐ पर्यय-नराय नमः ।
९०६. ॐ ऋतवे नमः ।
९०७. ॐ संवत्सराय नमः ।
९०८. ॐ मासाय नमः ।
९०९. ॐ पक्षाय नमः ।
९१०. ॐ संख्यासमापनाय नमः ।
९११. ॐ कलायै नमः ।
९१२. ॐ काष्ठायै नमः ।
९१३. ॐ लवेभ्यो नमः ।
९१४. ॐ मात्राभ्यो नमः ।
९१५. ॐ मुहूर्ताहः क्षपाभ्यो नमः।
९१६. ॐ क्षणेभ्यो नमः ।
९१७. ॐ विश्वक्षेत्राय नमः ।
९१८. ॐ प्रजाबीजाय नमः ।
९१९. ॐ लिङ्गाय नमः ।
९२०. ॐ आद्यनिर्गमाय नमः ।
९२१. ॐ सते नमः ।
९२२. ॐ असते नमः ।
९२३. ॐ व्यक्ताय नमः ।
९२४. ॐ अव्यक्ताय नमः ।
९२५. ॐ पित्रे नमः ।
९२६. ॐ मात्रे नमः ।
९२७. ॐ पितामहाय नमः ।
९२८. ॐ स्वर्गद्वाराय नमः ।
९२९. ॐ प्रजाद्वाराय नमः ।
९३०. ॐ मोक्षद्वाराय नमः ।
९३१. ॐ त्रिविष्टपाय नमः ।
९३२. ॐ निर्वाणाय नमः ।
९३३. ॐ ह्लादनाय नमः ।
९३४. ॐ ब्रह्मलोकाय नमः ।

९३५. ॐ परागतये नमः ।
९३६. ॐ देवासुरविनिर्मात्रे नमः ।
९३७. ॐ देवासुरपरायणाय नमः ।
९३८. ॐ देवासुरगुरवे नमः ।
९३९. ॐ देवाय नमः ।
९४०. ॐ देवासुरनमस्कृताय नमः ।
९४१. ॐ देवासुरमहामात्राय नमः।
९४२. ॐ देवासुरगणाश्रयाय नमः।
९४३. ॐ देवासुरगणाध्यक्षाय नमः।
९४४. ॐ देवासुरगणाग्रण्ये नमः।
९४५. ॐ देवातिदेवाय नमः ।
९४६. ॐ देवर्षये नमः ।
९४७. ॐ देवासुरवरप्रदाय नमः ।
९४८. ॐ देवासुरेश्वराय नमः ।
९४९. ॐ विश्वाय नमः ।
९५०. ॐ देवासुरमहेश्वराय नमः।
९५१. ॐ सर्वदेवमयाय नमः ।
९५२. ॐ अचिन्त्याय नमः ।
९५३. ॐ देवतात्मने नमः ।
९५४. ॐ आत्मसम्भवाय नमः ।
९५५. ॐ उद्भिदे नमः ।
९५६. ॐ त्रिविक्रमाय नमः ।
९५७. ॐ वैद्याय नमः ।
९५८. ॐ विरजाय नमः ।
९५९. ॐ नीरजाय नमः ।
९६०. ॐ अमराय नमः ।
९६१. ॐ ईड्याय नमः ।
९६२. ॐ हस्तीश्वराय नमः ।
९६३. ॐ व्याघ्राय नमः ।
९६४. ॐ देवसिंहाय नमः ।
९६५. ॐ नरर्षभाय नमः ।
९६६. ॐ विबुधाय नमः ।
९६७. ॐ अग्रवराय नमः ।
९६८. ॐ सूक्ष्माय नमः ।
९६९. ॐ सर्वदेवाय नमः ।
९७०. ॐ तपोमयाय नमः ।
९७१. ॐ सुयुक्ताय नमः ।
९७२. ॐ शोभनाय नमः ।
९७३. ॐ वज्रिणे नमः ।
९७४. ॐ प्रासानां प्रभवाय नमः।

९७५. ॐ अव्ययाय नमः ।

९७६. ॐ गुहाय नमः ।

९७७. ॐ कान्ताय नमः ।

९७८. ॐ निजसर्गाय नमः ।

९७९. ॐ पवित्राय नमः ।

९८०. ॐ सर्वपावनाय नमः ।

९८१. ॐ शृङ्गिणे नमः ।

९८२. ॐ शृङ्गप्रियाय नमः ।

९८३. ॐ बभ्रवे नमः ।

९८४. ॐ राजराजाय नमः ।

९८५. ॐ निरामयाय नमः ।

९८६. ॐ अभिरामाय नमः ।

९८७. ॐ सुरगणाय नमः ।

९८८. ॐ विरामाय नमः ।

९८९. ॐ सर्वसाधनाय नमः ।

९९०. ॐ ललाटाक्षाय नमः ।

९९१. ॐ विश्वदेवाय नमः ।

९९२. ॐ हरिणाय नमः ।

९९३. ॐ ब्रह्मवर्चसाय नमः ।

९९४. ॐ स्थावरपतये नमः ।

९९५. ॐ नियमेन्द्रियवर्धनाय नमः।

९९६. ॐ सिद्धार्थाय नमः।

९९७. ॐ सिद्धभूतार्थाय नमः।

९९८. ॐ अचिन्त्याय नमः।

९९९ ॐ सत्यव्रताय नमः।

**१०००. ॐ शुचये नमः।**

१००१. ॐ व्रताधिपाय नमः।

१००२. ॐ पराय नमः।

१००३. ॐ ब्रह्मणे नमः।

१००४. ॐ भक्तानां परमागतये नमः।

१००५. ॐ विमुक्ताय नमः।

१००६. ॐ मुक्ततेजसे नमः।

१००७. ॐ श्रीमते नमः।

१००८. ॐ श्रीवर्धनाय नमः।

१००९. ॐ जगते नमः।

ॐ

*महाभारते शान्तिपर्वणि*

# श्रीशिवसहस्रनामस्तोत्रम्

## भीष्म उवाच

नमस्ते देवदेवेश देवारिबलसूदन ।
देवेन्द्रबलविष्टम्भ देवदानवपूजित ॥ १ ॥

सहस्राक्ष विरूपाक्ष त्र्यक्ष यक्षाधिपप्रिय ।
सर्वतः पाणिपादाऽन्त सर्वतोऽक्षिशिरोमुख ॥ २ ॥

सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठसि ।
शंकुकर्ण महाकर्ण कुम्भकर्णाऽर्णवालय ॥ ३ ॥

गजेन्द्रकर्ण गोकर्ण पाणिकर्ण नमोस्तु ते ।
शतोदर शतावर्त शतजिह्व नमोस्तु ते ॥ ४ ॥

गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः ।
ब्रह्माणं त्वा शतक्रतुम् ऊर्ध्वं खमिव मेनिरे ॥ ५ ॥

मूर्तौ हि ते महामूर्ते समुद्राम्बरसन्निभ ।
सर्वा वै देवता ह्यस्मिन् गावो गोष्ठ इवासते ॥ ६ ॥

भवच्छरीरे पश्यामि सोममग्निं जलेश्वरम् ।
आदित्यमथ वै विष्णुं ब्रह्माणं च बृहस्पतिम् ॥ ७ ॥

भगवान् कारणं कार्यं क्रिया करणमेव च ।
असतश्च सतश्चैव तथैव प्रभवाप्ययौ ॥ ८ ॥

नमो भवाय शर्वाय रुद्राय वरदाय च ।
पशूनां पतये नित्यं नमोऽस्त्वन्धकघातिने ॥ ९ ॥

त्रिजटाय त्रिशीर्षाय त्रिशूलवरपाणिने ।
त्र्यम्बकाय त्रिनेत्राय त्रिपुरघ्नाय वै नमः ॥ १० ॥

नमश्चण्डाय कुण्डाय अण्डायाण्डधराय च ।
दण्डिने समकर्णाय दण्डिमुण्डाय वै नमः ॥ ११ ॥

नमोर्ध्वदंष्ट्रकेशाय शुक्लायावतताय च ।
विलोहिताय धूम्राय नीलग्रीवाय वै नमः ॥ १२ ॥

नमोऽस्त्वप्रतिरूपाय विरूपाय शिवाय च ।
सूर्याय सूर्यमालाय सूर्यध्वजपताकिने ॥ १३ ॥

नमः प्रमथनाथाय वृषस्कन्धाय धन्विने ।
शत्रुं दमाय दण्डाय पर्णचीरपटाय च ॥ १४ ॥

नमो हिरण्यगर्भाय हिरण्यकवचाय च ।
हिरण्यकृतचूडाय हिरण्यपतये नमः ॥ १५ ॥

नमः स्तुताय स्तुत्याय स्तूयमानाय वै नमः ।
सर्वाय सर्वभक्षाय सर्वभूतान्तरात्मने ॥ १६ ॥

नमो होत्रेऽथ मन्त्राय शुक्लध्वजपताकिने ।
नमो नाभाय नाभ्याय नमः कटकटाय च ॥ १७ ॥

नमोऽस्तु कृशनासाय कृशाङ्गाय कृशाय च ।
संहृष्टाय विहृष्टाय नमः किलकिलाय च ॥ १८ ॥

नमोऽस्तु शयमानाय शयितायोत्थिताय च ।
स्थिताय धावमानाय मुण्डाय जटिलाय च ॥ १९॥

नमो नर्तनशीलाय मुखवादित्रवादिने ।
नाद्योपहारलुब्धाय गीतवादित्रशालिने ॥ २०॥

नमो ज्येष्ठाय श्रेष्ठाय बलप्रमथनाय च ।
कालनाथाय कल्याय क्षयायोपक्षयाय च ॥ २१॥

भीमदुन्दुभिहासाय भीमव्रतधराय च ।
उग्राय च नमो नित्यं नमोऽस्तु दशबाहवे ॥ २२॥

नमः कपालहस्ताय चितिभस्मप्रियाय च ।
विभीषणाय भीष्माय भीमव्रतधराय च ॥ २३॥

नमो विकृतवक्त्राय खड्गजिह्वाय दंष्ट्रिणे ।
पक्वाममांसलुब्धाय तुम्बीवीणाप्रियाय च ॥ २४॥

नमो वृषाय वृष्याय गोवृषाय वृषाय च ।
कटंकटाय दण्डाय नमः पचपचाय च ॥ २५॥

नमः सर्ववरिष्ठाय वराय वरदाय च ।
वरमाल्यगन्धवस्त्राय वरातिवरदे नमः ॥२६॥

नमो रक्तविरक्ताय भावनायाक्षमालिने ।
सम्भिन्नाय विभिन्नाय छायायातपनाय च ॥ २७॥

अघोरघोररूपाय घोरघोरतराय च ।
नमः शिवाय शान्ताय नमः शान्ततमाय च ॥ २८॥

एकपाद्बहुनेत्राय एकशीर्ष्णे नमोऽस्तु ते ।
रुद्राय क्षुद्रलुब्धाय संविभागप्रियाय च ॥ २९ ॥

पञ्चालाय सिताङ्गाय नमः शमशमाय च ।
नमश्चण्डिकघण्टाय घण्टायाघण्टघण्टिने ॥ ३० ॥

सहस्राध्मातघण्टाय घण्टामालाप्रियाय च ।
प्राणघण्टाय गन्धाय नमः कलकलाय च ॥ ३१ ॥

हूं-हूं-हूं-कारपाराय हूं-हूं कारप्रियाय च ।
नमः शमशमे नित्यं गिरिवृक्षालयाय च ॥ ३२ ॥

गर्भमांससृगालाय तारकाय तराय च ।
नमो यज्ञाय यजिने हुताय प्रहुताय च ॥ ३३ ॥

यज्ञवाहाय दान्ताय तप्यायातपनाय च ।
नमस्तटाय तट्याय तटानां पतये नमः ॥ ३४ ॥

अन्नदायान्नपतये नमस्त्वन्नभुजे तथा ।
नमः सहस्रशीर्षाय सहस्रचरणाय च ॥ ३५ ॥

सहस्रोद्यतशूलाय सहस्रनयनाय च ।
नमो बालार्कवर्णाय बालरूपधराय च ॥ ३६ ॥

बालानुचरगोप्ताय बालक्रीडनकाय च ।
नमो वृद्धाय लुब्धाय क्षुब्धाय क्षोभणाय च ॥ ३७ ॥

तरङ्गाङ्कितकेशाय मुञ्जकेशाय वै नमः ।
नमः षट्कर्मतुष्टाय त्रिकर्मनिरताय च ॥ ३८ ॥

वर्णाश्रमाणां विधिवत् पृथक्कर्मनिवर्तिने ।
नमो घुष्याय घोषाय नमः कलकलाय च ॥ ३९ ॥

श्वेतपिंगलनेत्राय कृष्णरक्तेक्षणाय च ।
प्राणभग्नाय दण्डाय स्फोटनाय कृशाय च ॥ ४० ॥

धर्मकामार्थमोक्षाणां कथनीयकथाय च ।
सांख्याय सांख्यमुख्याय सांख्ययोगप्रवर्तिने ॥ ४१ ॥

नमो रथ्यविरथ्याय चतुष्पथरथाय च ।
कृष्णाजिनोत्तरीयाय व्यालयज्ञोपवीतिने ॥ ४२ ॥

ईशान वज्रसंघात हरिकेश नमोऽस्तु ते ।
त्र्यम्बकाम्बिकनाथाय व्यक्ताव्यक्त नमोऽस्तु ते ॥ ४३ ॥

काम कामद कामघ्न तृप्तातृप्तविचारिणे ।
सर्व सर्वद सर्वघ्न संध्याराग नमोऽस्तु ते ॥ ४४ ॥

महाबलो महाबाहो महासत्त्व महाद्युते ।
महामेघचयप्रख्य महाकाल नमोऽस्तु ते ॥ ४५ ॥
स्थूल जीर्णाङ्ग जटिले वल्कलाजिनधारिणे ।

दीप्तसूर्याग्निजटिले वल्कलाजिनवाससे ।
सहस्रसूर्यप्रतिम तपोनित्य नमोऽस्तु ते ॥ ४६ ॥

उन्मादन शतावर्त गङ्गातोयार्द्रमूर्धज ।
चन्द्रावर्त युगावर्त मेघावर्त नमोऽस्तु ते ॥ ४७ ॥

त्वमन्नमन्नभोक्ता च अन्नदोऽन्नभुगेव च ।
अन्नस्रष्टा च पक्ता च पक्वभुक्पवनोऽनलः ॥ ४८ ॥

जरायुजाण्डजाश्चैव स्वेदजाश्च तथोद्भिजाः ।
त्वमेव देवदेवेश भूतग्रामश्चतुर्विधः ॥ ४९ ॥

चराचरस्य स्रष्टा त्वं प्रतिहर्ता तथैव च ।
त्वामाहुर्ब्रह्मविदुषो ब्रह्म ब्रह्मंविदां वर ॥५०॥

मनसः परमा योनिः खं वायुर्ज्योतिषां निधिः ।
ऋक्सामानि तथोङ्कारमाहुस्त्वां ब्रह्मवादिनः ॥५१॥

हायिहायिहुवाहायिहावुहायि तथासकृत् ।
गायन्ति त्वां सुरश्रेष्ठ सामगा ब्रह्मवादिनः ॥५२॥

यजुर्मयो ऋङ्मयश्च त्वमाहुतिमयस्तथा ।
पठ्यसे स्तुतिभिश्चैव वेदोपनिषदां गणैः ॥५३॥

ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वर्णावराश्च ये ।
त्वमेव मेघसंघाश्च विद्युत्स्तनितगर्जितः ॥५४॥

संवत्सरस्त्वमृतवो मासो मासार्धमेव च ।
युगं निमेषाः काष्ठास्त्वं नक्षत्राणि ग्रहाः कलाः ॥५५॥

वृक्षाणां ककुदोऽसि त्वं गिरीणां शिखराणि च ।
व्याघ्रो मृगाणां पततां ताक्ष्योऽनन्तश्च भोगिनाम् ॥५६॥

क्षीरोदो ह्युदधीनां च यन्त्राणां धनुरेव च ।
वज्रः प्रहरणानां च व्रतानां सत्यमेव च ॥५७॥

त्वमेव द्वेष इच्छा च रागो मोहः क्षमाक्षमे ।
व्यवसायो धृतिर्लोभः कामक्रोधौ जयाजयौ ॥५८॥

त्वं गदी त्वं शरी चापी खट्वाङ्गी झर्झरी तथा ।
छेत्ता भेत्ता प्रहर्ता त्वं नेता मन्ता पिता मतः ॥५९॥

दशलक्षणसंयुक्तो धर्मोऽर्थः काम एव च ।
गङ्गा समुद्राः सरितः पल्वलानि सरांसि च ॥ ६० ॥

लता वल्यस्तृणौषध्यः पशवो मृगपक्षिणः ।
द्रव्यकर्मसमारम्भः कालः पुष्पफलप्रदः ॥ ६१ ॥

आदिश्चान्तश्च देवानां गायत्र्योंकार एव च ।
हरितो रोहितो नीलः कृष्णो रक्तस्तथारुणः ।
कद्रुश्च कपिलश्चैव कपोतो मेचकस्तथा ॥ ६२ ॥

अवर्णश्च सुवर्णश्च वर्णकारो घनोपमः।
सुवर्णनामा च तथा सुवर्णप्रिय एव च ॥ ६३ ॥

त्वमिन्द्रश्च यमश्चैव वरुणो धनदोऽनलः ।
उपप्लवश्चित्रभानुः स्वर्भानुर्भानुरेव च ॥ ६४ ॥

होत्रं होता च होम्यं च हुतं चैव तथा प्रभुः ।
त्रिसौपर्णं तथा ब्रह्म यजुषां शतरुद्रियम् ॥ ६५ ॥

पवित्रं च पवित्राणां मङ्गलानां च मङ्गलम् ।
गिरिको हिण्डुको वृक्षो जीवः पुद्गल एव च ॥ ६६ ॥

प्राणः सत्त्वं रजश्चैव तमश्चाप्रमदस्तथा ।
प्राणोऽपानः समानश्च उदानो व्यान एव च ॥ ६७ ॥

उन्मेषश्च निमेषश्च क्षुतं जृम्भितमेव च ।

लोहितान्तर्गता दृष्टिर्महावक्त्रो महोदरः ॥ ६८ ॥

सूचीरोमा हरिश्मश्रुरूर्ध्वकेशश्चलाचलः ।
गीतवादित्रतत्त्वज्ञो गीतवादनकप्रियः ॥ ६९ ॥

मत्स्यो जलचरो जाल्योऽकलः केलिकलः कलिः ।
अकालश्चातिकालश्च दुष्कालः काल एव च ॥ ७० ॥

मृत्युः क्षुरश्च कृत्यश्च पक्षोऽपक्षक्षयंकरः ।
मेघकालो महादंष्ट्रः संवर्तकबलाहकः ॥ ७१ ॥

घण्टोऽघण्टो घटी घण्टी चरुचेली मिली मिली ।
ब्रह्मकायिकमग्नीनां दण्डी मुण्डस्त्रिदण्डधृक् ॥ ७२ ॥

चतुर्युगश्चतुर्वेदश्चातुर्होत्रप्रवर्तकः ।
चातुराश्रम्यनेता च चातुर्वर्ण्यकरश्च यः ॥ ७३ ॥

सदा चाक्षप्रियो धूर्तो गणाध्यक्षो गणाधिपः ।
रक्तमाल्याम्बरधरो गिरिशो गिरिकप्रियः ॥ ७४ ॥

शिल्पिकः शिल्पिनां श्रेष्ठः सर्वशिल्पप्रवर्तकः ।
भगनेत्राङ्कुशश्चण्डः पूष्णो दन्तविनाशनः ॥ ७५ ॥

स्वाहा स्वधा वषट्कारो नमस्कारो नमो नमः ।
गूढव्रतो गुह्यतपास्तारकस्तारकामयः ॥ ७६ ॥

धाता विधाता सन्धाता विधाता धारणोऽधरः ।
ब्रह्मा तपश्च सत्यं च ब्रह्मचर्यमथार्जवम् ॥ ७७ ॥

भूतात्मा भूतकृद्भूतो भूतभव्यभवोद्भवः ।
भूर्भुवः स्वरितश्चैव ध्रुवो दान्तो महेश्वरः ॥ ७८ ॥

दीक्षितोऽदीक्षितः क्षान्तो दुर्दान्तोऽदान्तनाशनः ।
चन्द्रावर्तो युगावर्तः संवर्तः सम्प्रवर्तकः ॥ ७९ ॥

कामो बिन्दुरणुः स्थूलः कर्णिकारस्रजप्रियः ।
नन्दीमुखो भीममुखः सुमुखो दुर्मुखोऽमुखः ॥ ८० ॥

चतुर्मुखो बहुमुखो रणेष्वग्निमुखस्तथा ।
हिरण्यगर्भः शकुनिर्महोरगपतिर्विराट् ॥ ८१ ॥

अधर्महा महापार्श्वश्चण्डधारो गणाधिपः ।
गोनर्दो गोप्रतारश्च गोवृषेश्वरवाहनः ॥ ८२ ॥

त्रैलोक्यगोप्ता गोविन्दो गोमार्गोऽमार्ग एव च ।
श्रेष्ठः स्थिरश्च स्थाणुश्च निष्कम्पः कम्प एव च ॥ ८३ ॥

दुर्वारणो दुर्विषहो दुःसहो दुरतिक्रमः ।
दुर्धर्षो दुष्प्रकम्पश्च दुर्विषो दुर्जयो जयः ॥ ८४ ॥

शशः शशाङ्कः शमनः शीतोष्णक्षुज्जराधिकृत् ।
आधयो व्याधयश्चैव व्याधिहा व्याधिरेव च ॥ ८५ ॥

मम यज्ञमृगव्याधो व्याधीनामागमो गमः ।
शिखण्डी पुण्डरीकाक्षः पुण्डरीकवनालयः ॥ ८६ ॥

दण्डधारस्त्र्यम्बकश्च उग्रदण्डोऽण्डनाशनः ।
विषाग्निपाः सुरश्रेष्ठः सोमपास्त्वं मरुत्पतिः ॥ ८७ ॥

अमृतपास्त्वं जगन्नाथ देवदेव गणेश्वरः ।
विषाग्निपा मृत्युपाश्च क्षीरपाः सोमपास्तथा ।
मधुश्च्युतानामग्रपास्त्वमेव तुषिताद्यपाः ॥ ८८ ॥

हिरण्यरेताः पुरुषस्त्वमेव,
त्वंस्त्री पुमांस्त्वं च नपुंसकं च ।
बालो युवा स्थविरो जीर्णदंष्ट्र-
स्त्वं नागेन्द्र शक्रस्त्वं विश्वकृद्विश्वकर्ता ॥ ८९ ॥

विश्वकृद् विश्वकृतां वरेण्यस्त्वं विश्ववाहो ।
विश्वरूपस्तेजस्वी विश्वतोमुखः ।
चन्द्रादित्यौ चक्षुषी ते हृदयं च पितामहः ॥ ९० ॥

महोदधिः सरस्वती वाग् बलमनलो-
ऽनिलः अहोरात्रं निमेषोन्मेषकर्म ॥ ९१ ॥

न ब्रह्मा न च गोविन्दः पौराणा ऋषयो न ते ।
माहात्म्यं वेदितुं शक्ता याथातथ्येन ते शिव ॥ ९२ ॥

या मूर्तयः सुसूक्ष्मास्ते न मह्यं यान्ति दर्शनम् ।
त्राहि मां सततं रक्ष पिता पुत्रमिवौरसम् ॥ ९३ ॥

रक्ष मां रक्षणीयोऽहं तवानघ नमोऽस्तु ते ।
भक्तानुकम्पी भगवान् भक्तश्चाहं सदा त्वयि ॥ ९४ ॥

यः सहस्राण्यनेकानि पुंसामावृत्य दुर्दृशः ।
तिष्ठत्येकः समुद्रान्ते स मे गोप्तास्तु नित्यशः ॥ ९५ ॥

यं विनिद्रा जितश्वासाः सत्त्वस्थाः संयतेन्द्रियाः ।
ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥ ९६ ॥

जटिले दण्डिने नित्यं लम्बोदरशरीरिणे ।
कमण्डलुनिषङ्गाय तस्मै ब्रह्मात्मने नमः ॥ ९७ ॥

यस्य केशेषु जीमूता नद्यः सर्वाङ्गसन्धिषु ।
कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नमः ॥ ९८ ॥

सम्भक्ष्य सर्वभूतानि युगान्ते पर्युपस्थिते ।
यः शेते जलमध्यस्थस्तं प्रपद्येऽम्बुशायिनम् ॥ ९९ ॥

प्रविश्य वदनं राहोर्यः सोमं पिबते निशि ।
ग्रसत्यर्कं च स्वर्भानुर्भूत्वा मां सोऽभिरक्षतु ॥ १०० ॥

ये चानुपतिता गर्भा यथा भागानुपासते ।
नमस्तेभ्यः स्वधा स्वाहा प्राप्नुवन्तु मुदन्तु ते ॥ १०१ ॥

येऽङ्गुष्ठमात्राः पुरुषा देहस्थाः सर्वदेहिनाम् ।
रक्षन्तु ते हि मां नित्यं नित्यं चाप्याययन्तु माम् ॥ १०२ ॥

ये न रोदन्ति देहस्था देहिनो रोदयन्ति च ।
हर्षयन्ति न हृष्यन्ति नमस्तेभ्योऽस्तु नित्यशः ॥ १०३ ॥

ये नदीषु समुद्रेषु पर्वतेषु गुहासु च ।
वृक्षमूलेषु गोष्ठेषु कान्तारे गहनेषु च ॥ १०४ ॥

चतुष्पथेषु रथ्यासु चत्वरेषु तटेषु च ।
हस्त्यश्वरथशालासु जीर्णोद्यानालयेषु च ॥ १०५ ॥

येषु पञ्चसु भूतेषु दिशासु विदिशासु च ।
चन्द्रार्कयोर्मध्यगता ये च चन्द्रार्करश्मिषु ॥ १०६ ॥

रसातलगता ये च ये च तस्मै परं गताः ।
नमस्तेभ्यो नमस्तेभ्यो नमस्तेभ्योऽस्तु नित्यशः ॥ १०७ ॥

येषां न विद्यते संख्या प्रमाणं रूपमेव च ।
असंख्येयगुणा रुद्रा नमस्तेभ्योऽस्तु नित्यशः ॥ १०८ ॥

सर्वभूतकरो यस्मात् सर्वभूतपतिर्हरः ।
सर्वभूतान्तरात्मा च तेन त्वं न नियन्त्रितः ॥ १०९ ॥

त्वमेव हीज्यसे यस्माद् यज्ञैर्विविधदक्षिणैः ।
त्वमेव कर्ता सर्वस्य तेन त्वं न निमन्त्रितः ॥ ११० ॥

अथवा मायया देव सूक्ष्मया तव मोहितः ।
एतस्मात् कारणाद् वापि तेन त्वं न निमन्त्रितः ॥ १११ ॥

प्रसीद मम भद्रं ते भव भावगतस्य मे ।
त्वयि मे हृदयं देव त्वयि बुद्धिर्मनस्त्वयि ॥ ११२ ॥

—

स्तुत्वैवं स महादेवं विरराम प्रजापतिः ।
भगवानपि सुप्रीतः पुनर्दक्षमभाषत ॥ ११३ ॥

परितुष्टोऽस्मि ते दक्ष स्तवेनानेन सुव्रत ।
बहुनात्र किमुक्तेन मत्समीपे भविष्यसि ॥ ११४ ॥

अश्वमेधसहस्रस्य वाजपेयशतस्य च ।
प्रजापते मत्प्रसादात् फलभागी भविष्यसि ॥ ११५ ॥

अथैनमब्रवीद् वाक्यं लोकस्याधिपतिर्भवः ।
आश्वासनकरं वाक्यं वाक्यविद् वाक्यसम्मतम् ॥ ११६ ॥

दक्ष दक्ष न कर्तव्यो मन्युर्विघ्नमिमं प्रति ।
अहं यज्ञहरस्तुभ्यं दृष्टमेतत् पुरातनम् ॥ ११७ ॥

भूयश्च ते वरं दद्मि तं त्वं गृह्णीष्व सुव्रत ।
प्रसन्नवदनो भूत्वा तदिहैकमनाः शृणु ॥ ११८ ॥

वेदात् षडङ्गादुद्धृत्य सांख्ययोगाच्च युक्तितः ।
तपः सुतप्तं विपुलं दुश्चरं देवदानवैः ॥ ११९ ॥

अपूर्वं सर्वतोभद्रं सर्वतोमुखमव्ययम् ।
अब्दैर्दशाहसंयुक्तं गूढमप्राज्ञनिन्दितम् ॥ १२० ॥

वर्णाश्रमकृतैर्धर्मैर्विपरीतं क्वचित्समम् ।
गतान्तैरध्यवसितमत्याश्रममिदं व्रतम् ॥ १२१ ॥

मया पाशुपतं दक्ष शुभमुत्पादितं पुरा ।
तस्य चीर्णस्य तत् सम्यक् फलं भवति पुष्कलम् ।
तच्चास्तु ते महाभाग त्यज्यतां मानसो ज्वरः ॥ १२२ ॥

एवमुक्त्वा महादेवः सपत्नीकः सहानुगः ।
अदर्शनमनुप्राप्तो दक्षस्यामितविक्रमः ॥ १२३ ॥

दक्षप्रोक्तं स्तवमिमं कीर्तयेद् यः शृणोति वा ।
नाशुभं प्राप्नुयात् किंचिद् दीर्घमायुरवाप्नुयात् ॥ १२४ ॥

यथा सर्वेषु देवेषु वरिष्ठो भगवाञ्छिवः ।
तथा स्तवो वरिष्ठोऽयं स्तवानां ब्रह्मसम्मितः ॥ १२५ ॥

यशोराज्यसुखैश्वर्यकामार्थधनकांक्षिभिः ।
श्रोतव्यो भक्तिमास्थाय विद्याकामैश्च यत्नतः ॥ १२६ ॥

व्याधितो दुःखितो दीनश्चोरग्रस्तो भयार्दितः ।
राजकार्याभियुक्तो वा मुच्यते महतो भयात् ॥ १२७ ॥

अनेनैव तु देहेन गणानां समतां व्रजेत् ।
तेजसा यशसा चैवं युक्तो भवति निर्मलः ॥ १२८ ॥

न राक्षसाः पिशाचा वा न भूता न विनायकाः ।
विघ्नं कुर्युर्गृहे तस्य यत्रायं पठ्यते स्तवः ॥ १२९ ॥

श्रृणुयाच्चैव या नारी तद्भक्ता ब्रह्मचारिणी ।
पितृपक्षे भर्तृपक्षे पूज्या भवति देववत् ॥ १३० ॥

श्रृणुयाद् यः स्तवं कृत्स्नं कीर्तयेद् वा समाहितः ।
तस्य सर्वाणि कर्माणि सिद्धिं गच्छन्त्यभीक्ष्णशः ॥ १३१ ॥

मनसा चिन्तितं यच्च यच्च वाचानुकीर्तितम् ।
सर्वं सम्पद्यते तस्य स्तवस्यास्यानुकीर्तनात् ॥ १३२ ॥

देवस्य च गुहस्यापि देव्या नन्दीश्वरस्य च ।
बलिं सुविहितं कृत्वा दमेन नियमेन च ॥ १३३ ॥

ततस्तु युक्तो गृह्णीयान्नामान्याशु यथाक्रमम् ।
ईप्सिताल्लँभते सोऽर्थान् भोगान् कामांश्च मानवः । ॥ १३४ ॥

मृतश्च स्वर्गमाप्नोति तिर्यक्षु च न जायते ।
इत्याह भगवान् व्यासः पराशरसुतः प्रभुः ॥ १३५ ॥

**॥इति श्रीमहाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि दक्षप्रोक्त-शिवसहस्रनामस्तवे चतुरशीत्यधिकद्विशततमोऽध्यायः ॥**

**[ इस स्तोत्र में अनेकार्थक सहस्र-शब्द के अनुसार सहस्रनाम कहे हैं । कई नामों को एक शब्द के रूप में न कहकर वर्णन के रूप में कहा है । अतः इस स्तोत्र का पाठ ही सुकर है, इसके अनुसार अर्चना दुर्बोध होने से नामावलि नहीं दी जा रही है । ]**

ॐ

श्रीशिवरहस्ये पञ्चमांशान्तर्गतं

# श्रीशिवसहस्रनामस्तोत्रम्

## देवी उवाच

श्रुतं सुदर्शनाख्यानं त्वत्तो विस्मापनं मम ।
प्रदोषे पापिना तेन दृष्टश्चान्यार्चितः शिवः ॥ १ ॥

शेषेण नामसाहस्रैस्त्वं स्तुतः कथमीश्वर ।
त्वन्नाम्नां श्रवणेच्छा मे भूयसी भवति प्रभो ॥ २ ॥

## सूत उवाच

तस्मिन् कैलासशिखरे सुखासीनं महेश्वरम् ।
प्रणम्य प्रार्थयामास सा देवी जगदम्बिका ॥ ३ ॥

तदा देव्या महादेवः प्रार्थितः सर्वकामदः ।
भवो भवानीमाहेत्थं सर्वपापप्रणाशकम् ॥ ४ ॥

फणीशो मुखसाहस्रैर्यानि नामानि चोक्तवान् ।
तानि वः सम्प्रवक्ष्यामि यथा मम गुरोः श्रुतम् ॥ ५ ॥

## ईश्वर उवाच

ऋषिः छन्दो दैवतं च तान्यहं क्रमशोऽम्बिके ।
सहस्रनाम्नां पुण्यं मे फणीन्द्र कृतवानुमे ॥ ६ ॥

*ऋषिस्तस्य* हि शेषोऽयं छन्दोऽनुष्टुप् प्रकीर्तितम् ।
दे*वता*स्याहमीशानि सर्वत्र *विनियोजनम्* ।
ध्यानं ते कथयाम्यद्य शृणु त्वमगकन्यके ॥ ७ ॥

## ध्यानम्

कैलासे सुहिरण्यविष्टरवरे देव्या समालिङ्गितं
नन्द्याद्यैर्गणपैः सदा परिवृतं वन्दे शिवं सुन्दरम् ।

भक्ताघौघनिकृन्तनैकपरशुं बिभ्राणमिन्दुप्रभं
स्कन्दाद्यैर्गजवक्त्रसेवितपदं ध्यायामि साम्बं सदा ॥ ८ ॥

एवं मामम्बिके ध्यात्वा नामानि प्रजपेत्ततः ।
हृत्पद्मसद्मसंस्थं मां सर्वाभीष्टार्थसिद्धये ॥ ९ ॥

पुण्यकालेषु सर्वेषु सोमवारे विशेषतः ।
बिल्वपत्रैः पङ्कजैश्च पुण्यनामानि शङ्करि ॥ १०॥

पूजयेत् नामसाहस्रैः सर्वार्थप्राप्तये शिवे ।
यो यं कामयते कामं तं तमाप्नोति शङ्करि ॥ ११ ॥

धनार्थी लभते वित्तं कन्यार्थी कन्यकां तथा ।
राज्यार्थी राज्यमाप्नोति मोक्षार्थी मोक्षमाप्नुयात् ॥ १२ ॥

शृणु देवि परं पुण्यं मातृकानामनुत्तमम् ।
सहस्रं प्रजपेन्नित्यं धर्मकामार्थमोक्षभाक् ॥ १३ ॥

## ईश्वर उवाच

ओंकारनिलयात्मस्थः ओंकारार्थैकवाचकः ।
ओंकारेशाकृतिरोमितिशब्दकृतस्तुतिः ॥ १४ ॥

ओंकारकुण्डनिलयलिंगपूजनपापहृत् ।
नमिताशेषदेवादिर्नदीपुलिनसंस्थितः ॥ १५ ॥

नन्दिवाद्यप्रियो नित्यो नामपारायणप्रियः ।
महेन्द्रनिलयो मानी मानसान्तरपापभित् ॥ १६ ॥

मयस्करो महायोगी मायाचक्रप्रवर्तकः ।
शिवः शिवतरः शीतः शीतांशुकृतभूषणः ॥ १७ ॥

धनुः शरकरो ध्याता धर्माधर्मपरायणः ।
आत्मा आतार्य आलाद्य अनङ्गशरखण्डनः ॥ १८ ॥

ईशान ईड्य ईश्व्यश्च इभमस्तकसंस्तुतः ।
उमासंश्लिष्टवामाङ्ग उशीनरनृपार्चितः ॥ १९ ॥

उदुम्बरफलप्रीत उमादिसुरपूजितः ।
ऋजीषीकृतभूचक्रो रिपुप्रमथनोर्जितः ॥ २० ॥

लिङ्गार्चकजनप्रीतो लिङ्गी लिङ्गसमप्रियः ।
लिपिप्रियो बिन्दुहीनो लीलाकृतजगत्त्रयः ॥ २१ ॥

ऐन्द्रीदिक्पतिसंयुक्त ऐश्वर्यादिफलप्रदः ।
औत्तानपादपूज्याङ्घ्रिरौमादिसुरपूजितः ॥ २२ ॥

कल्याणाचलकोदण्डः कामितार्थफलप्रदः ।
कस्तूरीतिलकप्रीतः कर्पूराभकलेवर ॥ २३ ॥

करन्धमसुतप्रीतः कल्पादिपरिवर्जितः ।
कल्पितानेकभूतादिः कलिकल्मषनाशनः ॥ २४ ॥

कमलाभलसन्नेत्रः कमलापतिपूजितः ।
खगोल्कादित्यवरदः खञ्जरीटवरप्रदः ॥ २५ ॥

खर्जूरवनमध्यस्थः खण्डिताखण्डलीकरः ।
खगः खड्गहरः खण्डः खगगः खाकृतिः खसः ॥ २६ ॥

खण्डपर्शुः खण्डघनः खण्डितारातिमण्डलः ।
गन्धर्वगणसुप्रीतो गन्धधृक् गर्वनाशकः ॥ २७ ॥

गङ्गाधरो गोगणेशो गणेशवरपुत्रकः ।
गतिदो गदहा गन्धी गन्धमाल्यवरार्चितः ॥ २८ ॥

गगनस्थो गणपतिर्गगनाभोगभूषणः ।
घण्टाकर्णप्रियो घण्टी घटजस्तुतिसुप्रियः ॥ २९ ॥

घोटकप्रियपुत्रश्च घर्मकालो घनाकृतिः ।
घनवाहो घृताध्यक्षो घनघोषो घटेश्वरः ॥ ३० ॥

घटानादकरप्रीतो घटीभूतमहागिरिः ।
चन्द्रचूडश्चन्द्रकरश्चन्दनार्द्रश्चतुष्पथः ॥ ३१ ॥

चमसोद्भेदमध्यस्थश्चण्डकोपश्चतुर्मुखः ।
चक्षुःश्रोत्रमहाहारश्चण्डिकेशवरप्रदः ॥ ३२ ॥

चेतोजन्महरश्चण्डश्चातुर्होत्रप्रियश्चरः ।
चतुर्मुखमुखस्तुत्यश्चतुर्वेदश्चराचरः ॥ ३३ ॥

चण्डभानुकरान्तःस्थश्चतुर्मूर्तिवपुःस्थितः ।
छादितानेकलोकादिः छन्दसां गणमध्यगः ॥ ३४ ॥

छत्रचामरशोभाढ्यः छन्दोगगतिदायकः ।
जङ्गमाजङ्गमाकारो जगन्नाथो जगद्गतः ॥ ३५ ॥

जह्नुकन्याजटो जप्यो जेता जत्रुर्जनार्तिहा ।
जम्भारातिर्जनप्रीतो जनको जनिकोविदः ॥ ३६ ॥

जनार्दनार्दनो जामिजात्यादिपरिवर्जितः ।
झणज्झणांघ्रिजारावो झङ्कारोज्झितदुष्क्रियः ॥ ३७ ॥

टङ्कप्रियष्टंकृतिकष्टंकभेदी टकारकः ।
टादिवर्णप्रियष्ठान्तो ढक्कानादप्रियो रसः ॥ ३८ ॥

डामरीतन्त्रमध्यस्थो डमरुध्वनिशोभितः ।
ढक्काध्वनिकृतानल्पबधिरीकृतदिङ्मुखः ॥ ३९ ॥

णकारो णणुकोत्थादिर्णान्तकृण्णतिमोचकः ।
तस्करस्ताम्रकस्ताक्ष्र्यस्तामसादिगुणोज्झितः ॥ ४० ॥

तरुमूलप्रियस्तातस्तमसां नाशकस्तटः ।
थानासुरहरः स्थाता स्थाणुः स्थानप्रियः स्थिरः ॥ ४१ ॥

दाता दानपतिर्दान्तो दन्दशूकविभूषितः ।
दर्शनीयो दीनदयो दण्डितारातिमण्डलः ॥ ४२ ॥

दक्षयज्ञहरो देवो दानवारिर्दमोदयः ।
दत्तात्रेयप्रियो दण्डी दाडिमीकुसुमप्रियः ॥ ४३ ॥

धाता धनाधिपसखो धनधान्यप्रदो धनम् ।
धामप्रियोऽन्धसां नाथो धर्मवाहो धनुर्धरः ॥ ४४ ॥

नमस्कारप्रियो नाथो नमिताशेषदुःखहृत् ।
नन्दिप्रियो नर्मसखो नर्मदातीरसंस्थितः ॥ ४५ ॥

नन्दनो नमसामीशो नानारूपो नदीगतः ।
नामप्रीतो नामरूपगुणकर्मविवर्जितः ॥ ४६ ॥

पत्तीनां च पतिः पार्यः परमात्मा परात्परः ।
पङ्कजासनपूज्याङ्घ्रिः पद्मनाभवरप्रदः ॥ ४७ ॥

पन्नगाधिपसद्धारः पशूनां पतिपावकः ।
पापहा पण्डितः पान्थो पादपोन्मथनः परः ॥ ४८ ॥

फणी फणालसन्मौलिः फणिकङ्कणसत्करः ।
फणितानेकवेदोक्तिः फणिमाणिक्यभूषितः ॥ ४९ ॥

बन्धमोचनकृद्बन्धुर्बन्धुरालकशोभितः ।
बली बलवतां मुख्यो बलिपुत्रवरप्रदः ॥ ५० ॥

बाणासुरेन्द्रपूज्याङ्घ्रिर्बाणलिङ्गो बहुप्रदः ।
बन्दीकृतागमो बालपालको बहुशोभितः ॥ ५१ ॥

भवादिर्भवहा भव्यो भवो भावपरायणः ।
भवहृद्भवदो भूतो भण्डासुरवरप्रदः ॥ ५२ ॥

भगाक्षिमथनो भर्गो भवानीशो भयङ्करः ।
भङ्गकारो भावुकदो भस्माभ्यक्ततनुर्भटः ॥ ५३ ॥

मयस्करो महादेवो मायावी मानसान्तरः ।
मायातीतो मन्मथारिर्मधुपोऽथ मनोन्मनः ॥ ५४ ॥

मध्यस्थो मधुमांसात्मा मनोवाचामगोचरः ।
मण्डितो मण्डनाकारो मतिदो मानपालकः ॥ ५५ ॥

मनस्वी मनुरूपश्च मन्त्रमूर्तिर्महाहनुः ।
यशस्करो यन्त्ररूपो यमिमानसपावनः ॥ ५६ ॥

यमान्तकरणो यामी यजमानो यदुर्यमी ।
रमानाथार्चितपदो रम्यो रतिविशारदः ॥ ५७ ॥

रम्भाप्रीतो रसो रात्रिचरो रावणपूजितः ।
रङ्गपादो रन्तिदेवो रविमण्डलमध्यगः ॥ ५८ ॥

रथन्तरस्तुतो रक्तपानो रथपती रजः ।
रथात्मको लम्बतनुर्लाङ्गली लोलगण्डकः ॥ ५९ ॥

ललामसोमलूतादिर्ललितापूजितो लवः ।
वामनो वायुरूपश्च वराहमथनो वटुः ॥ ६० ॥

वाक्यजातो वरो वार्यो वरुणेड्यो वराश्रयः ।
वपुर्धरो वर्षवरो वरीयान् वरदो वरः ॥ ६१ ॥

वसुप्रदो वसुपतिर्वन्दारुजनपालकः ।
शान्तः शमपरः शास्ता शमनान्तकरः शठः ॥ ६२ ॥

शङ्खहस्तः शत्रुहन्ता शमिताखिलदुष्कृतः ।
शरहस्तः शतावर्तः शतक्रतुवरप्रदः ॥ ६३ ॥

शम्भुः शम्याकपुष्पार्च्यः शंकरः शतरुद्रगः ।
शम्याकरः शान्तमनाः शान्तः शशिकलाधरः ॥ ६४ ॥

षडाननगुरुः षण्डः षट्कर्मनिरतः षगुः ।
षड्जादिरसिकः षष्ठः षष्ठीप्रीतः षडङ्गवान् ॥ ६५ ॥

षडूर्मिरहित: शष्प्य: षिङ्ग: षाड्गुण्यदायक: ।
सत्यप्रिय: सत्यधामा संसाररहित: सम: ॥ ६६ ॥

सखा सन्धानकुशल: सर्वसम्पत्प्रदायक: ।
सगर: सागरान्त:स्थ: सत्राश: सरण: सह: ॥ ६७ ॥

साम्ब: सनातन: साधु: सारासारविशारद: ।
सामगानप्रिय: सार: सरस्वत्या सुपूजित: ॥ ६८ ॥

हतारातिर्हंसगतिर्हाहाहूहूस्तुतिप्रिय: ।
हरिकेशो हरिद्रांगो हरिन्मणिसरोहठ: ॥ ६९ ॥

हरिपूज्यो हरो हार्यो हरिणाङ्कशिखण्डक: ।
हाहाकारादिरहितो हनुनासो हहुंकृत: ॥ ७० ॥

लालाननो लतासोमो लक्ष्मीकान्तवरप्रद: ।
लम्बोदरगुरुर्लभ्यो लवलीशो लुलायग: ॥ ७१ ॥

क्षयद्वीर: क्षमायुक्त: क्षयादिरहित: क्षमी ।
क्षत्रियान्तकर: क्षान्त: क्षात्रधर्मप्रवर्तक: ॥ ७२ ॥

क्षयिष्णुवर्धन: क्षान्त: क्षपानाथकलाधर: ।
क्षपादिपूजनप्रीत: क्षपणान्त: क्षराक्षर: ॥ ७३ ॥

रुद्रो मन्यु: सुधन्वा च बाहुमान् परमेश्वर: ।
स्विषु: स्विष्टकृदीशान: शरव्याधारको युवा ॥ ७४ ॥

अघोरस्तनुमान् देवो गिरीश: पाकशासन: ।
गिरित्र: पुरुष: प्राण: पञ्चप्राणप्रवर्तक: ॥ ७५ ॥

अध्यवोचो महादेवो अधिवक्ता महेश्वरः ।
ईशानः प्रथमो देवो भिषजां पतिरीश्वरः ॥ ७६ ॥

ताम्रोऽरुणो विश्वनाथो बभ्रुश्चैव सुमङ्गलः ।
नीलग्रीवः शिवो हृष्टो देवदेवो विलोहितः ॥ ७७ ॥

गोपवश्यो विश्वकर्ता उदहार्यजनेक्षितः ।
विश्वदृष्टः सहस्राक्षो मीढुष्ठो भगवान् हरः ॥ ७८ ॥

शतेषुधिः कपर्दी च सोमो मीढुष्टमो भवः ।
अनाततश्चातिधृष्णुः सत्त्वानां रक्षकः प्रभुः ॥ ७९ ॥

विश्वेश्वरो महादेवस्त्र्यम्बकस्त्रिपुरान्तकः ।
त्रिकाग्निकालः कालाग्निरुद्रो नीलोऽधिपोऽनिलः ॥ ८० ॥

सर्वेश्वरः सदा शम्भुः श्रीमान् मृत्युञ्जयः शिवः ।
स्वर्णबाहुः सैन्यपालो दिशाधीशो वनस्पतिः ॥ ८१ ॥

हरिकेशः पशुपतिरुग्रः सस्पिञ्जरोऽन्तकः ।
त्विषीमान् मार्गपो बभ्रुर्विव्याधी चान्नपालकः ॥ ८२ ॥

पुष्टो भवाधिपो लोकनाथो रुद्राततायिकः ।
क्षेत्रेशः सूतपोऽहन्त्यो वनपो रोहितः स्थपः ॥ ८३ ॥

वृक्षेशो मन्त्रजो वाण्यो भुवन्त्यो वारिवस्कृतः ।
ओषधीशो महाघोषः क्रन्दनः पत्तिनायकः ॥ ८४ ॥

कृत्स्नवीती धावमानः सत्त्वनां पतिरव्ययः ।
सहमानोऽथ निर्व्याधिरव्याधिः ककुभो नटः ॥ ८५ ॥

निषङ्गी स्तेनपः कक्ष्यो निचेरुः परिचारकः ।
आरण्यपः सृकावी च जिघांसुर्मुष्णपोऽसिमान् ॥ ८६ ॥

नक्तञ्चरः प्रकृन्तश्च उष्णीषी गिरिसञ्चरः ।
कुलुञ्च इषुमान् धन्वी आतन्वान् प्रतिधानवान् ॥ ८७ ॥

आयच्छो विसृजोऽप्यात्मा वेधनो आसनः परः ।
शयानः स्वापकृत् जाग्रत् स्थितो धावनकारकः ॥ ८८ ॥

सभापतिस्तुरङ्गेश उगणस्तृंहतिर्गुरुः ।
विश्वो व्रातो गणो विश्वरूपो वैरूप्यकारकः ॥ ८९ ॥

महानणीयान् रथपः सेनानीः क्षत्रसंग्रहः ।
तक्षा च रथकारश्च कुलालः कर्मकारकः ॥ ९० ॥

पुञ्जिष्ठश्च निषादश्च इषुकृद् धन्वकारकः ।
मृगयुः श्वानपो देवो भवो रुद्रोऽथ शर्वकः ॥ ९१ ॥

पशुपो नीलकण्ठश्च शितिकण्ठः कपर्दभृत् ।
व्युप्तकेशः सहस्राक्षः शतधन्वा गिरीश्वरः ॥ ९२ ॥

शिपिविष्टोऽथ मीढुष्ट इषुमान् ह्रस्ववामनः ।
बहुवर्षवया वृद्धः संवृद्ध्वा प्रथमोऽग्रियः ॥ ९३ ॥

आशुश्चैवाजिरः शीघ्र्यः शीभ्य ऊर्म्योऽथ वस्वनः ।
स्रोतो द्वीप्यस्तथा ज्येष्ठः कनिष्ठः पूर्वजोऽपरः ॥ ९४ ॥

मध्यश्चाथापगल्भश्च[१]................................ ।
आशुषेणश्चाशुरथः शूरो वै भिन्दिवर्मधृक् ॥ ९५ ॥

---
[१] मातृका गलिता

वरूथी बिल्मी कवची श्रुतसेनोऽथ दुन्दुभिः ।
धृष्णुश्च प्रहितो दूतो निषङ्गी तीक्ष्णसायकः ॥ ९६ ॥

आयुधी स्वायुधी देव उपवीती सुधन्वधृक् ।
स्रुत्यः पथ्यस्तथा काट्यो नीप्यः सूद्यः सरोद्भवः ॥ ९७ ॥

नाद्यवैशन्तकूप्याश्चावट्यो वर्ष्यो मेघ्योऽथ वैद्युतः ।
ईध्रय आतप्य वातोत्थो रश्मिजो वास्तवोऽस्तुपः ॥ ९८ ॥

सोमो रुद्रस्तथा ताम्र अरुणः शङ्ग ईश्वरः ।
उग्रो भीमस्तथैवाग्रेवधो दूरेवधस्तथा ॥ ९९ ॥

हन्ता हनीयान् वृक्षश्च हरिकेशः प्रतर्दनः ।
तारः शम्भुर्मयोभूश्च शङ्करश्च मयस्करः ॥ १०० ॥

शिवः शिवतरस्तीर्थ्यः कूल्यः पार्यो वार्यः प्रतारणः ।
उत्तारणस्तथालाद्य आतार्यः शष्प्यफेनजः ॥ १०१ ॥

सिकत्यश्च प्रवाह्यश्च इरिण्यः प्रमथः किंशिलः ।
क्षयणः कूलगो गोष्ठ्यः पुलस्त्यो गृह्य एव च ॥ १०२ ॥

तल्प्यो गेह्यस्तथा काट्यो गह्वरेष्ठो ह्रदोद्भवः ।
निवेष्ट्यः पांसुमध्यस्थो रजस्यो हरितस्थितः ॥ १०३ ॥

शुष्क्यो लोप्यस्तथोलप्य ऊर्म्यः सूर्म्यश्च पर्णजः ।
पर्णशद्योऽपगुरकः अभिघ्नोत्खिद्यकोविदः ॥ १०४ ॥

अवःकिरिक ईशानो देवादिहृदयान्तरः ।
विक्षीणको विचिन्वत्क्यः आनिर्ह आमिवत्ककः ॥ १०५ ॥

द्रापिरन्धस्पतिर्दाता दरिद्रन्नीललोहितः ।
तवस्वांश्च कपर्दीशः क्षयद्वीरोऽथ गोहनः ॥ १०६ ॥
पुरुषन्तो गर्तगतो युवा मृगवरोग्रकः ।
मृडश्च जरिता रुद्रो मीढ्यो देवपतिर्हरिः ॥ १०७ ॥

मीढुष्टमः शिवतमो भगवान् अर्णवान्तरः ।
शिखी च कृत्तिवासाश्च पिनाकी वृषभस्थितः ॥ १०८ ॥

अग्नीषुश्च वर्षेषुर्वातिषुश्च························ ।
पृथिवीस्थो दिविष्ठश्च अन्तरिक्षस्थितो हरः ॥ १०९ ॥

अप्सु स्थितो विश्वनेता पथिस्थो वृक्षमूलगः ।
भूताधिपः प्रमथप································ ॥ ११० ॥

अवपलः सहस्रास्यः सहस्रनयनश्रवाः ।
ऋग्गणात्मा यजुर्मध्य साममध्यो गणाधिपः ॥ १११ ॥

ऊर्म्यर्वशीर्षपरमः शिखा स्तुत्योऽनसूयकः ।
मैत्रायणो मित्रगतिस्तण्डुप्रीतो रिटिप्रियः ॥ ११२ ॥

उमाधवो विश्वभर्ता विश्वहर्ता सनातनः ।
सोमो रुद्रो मेघपतिर्वंकुर्वै [॰तिर्वैकुंठो म॰ ?] मरुतां पिता ॥ ११३ ॥

·························· अरुषो अध्वरेश्वरः ।
जलाषभेषजो भूरिदाता सुजनिमा सुरः ॥ ११४ ॥

सम्राट् पुरांभिद् दुःखस्थः सत्पतिः पावनः क्रतुः ।
हिरण्यरेता दुर्धर्षो विश्वाधिक उरुक्रमः ॥ ११५ ॥

उरुगायोऽमितगुणो महाभूतस्त्रिविक्रमः ।
अमृतो अजरोऽजय्यो रुद्रोऽग्निः पुरुषो विराट् ॥ ११६ ॥

तुषाराट् पूजितपदो महाहर्षो रसात्मकः ।
महर्षिबुद्धिदो गोप्ता गुप्तमन्त्रो गतिप्रदः ॥ ११७ ॥

गन्धर्वगानप्रीतात्मा गीतप्रीतोरुशासनः ।
विद्वेषणहरो हार्यो हर्षक्रोधविवर्जितः ॥ ११८ ॥

भक्तप्रियो भक्तिवश्यो भयहृद् भूतसंघभित् ।
भुवनेशो भूधरात्मा विश्ववन्द्यो विशोषकः ॥ ११९ ॥

ज्वरनाशो रोगनाशो मुञ्जिकेशो वरप्रदः ।
पुण्डरीकमहाहारः पुण्डरीकत्वगम्बरः ॥ १२० ॥

आखण्डलमुखस्तुत्यः कुण्डली कुण्डलप्रियः ।
चण्डांशुमण्डलान्तस्थः शशिखण्डशिखण्डकः ॥ १२१ ॥

चण्डताण्डवसन्नाहश्चण्डकोपोऽखिलाण्डगः
चण्डिकापूजितपदो मण्डनाकल्पकाण्डजः ॥ १२२ ॥

रणशौण्डो महादण्डस्तुहुण्डवरदायकः ।
कपालमालाभरणस्तारणः शोकहारणः ॥ १२३ ॥

विधारणः शूलकरो धर्षणः शत्रुमारणः ।
गङ्गाधरो गरधरस्त्रिपुण्ड्रावलिभासुरः ॥ १२४ ॥

शम्बरारिहरो दक्षहरोऽन्धकहरो हरः ।
विश्वजिद् गोजिदीशानो अश्वजिद्धनजित् तथा ॥ १२५ ॥

उर्वराजिद् उद्वजिच्च सर्वजित् सर्वहारकः ।
मन्दारनिलयो नन्दः कुन्दमालाधरोऽम्बुदः ॥ १२६ ॥

नन्दिप्रीतो मन्दहासः सुरवृन्दनिषेवितः ।
मुचुकुन्दार्चितपदो द्वन्द्वहीनेन्दिरार्चितः ॥ १२७ ॥

विश्वाधारो विश्वनेता वीतिहोत्रो विनीतकः ।
शङ्करः शाश्वतः शास्ता सहमानः सहस्रदः ॥ १२८ ॥

भीमो महेश्वरो नित्य अम्बरान्तरनर्तनः ।
उग्रो भवहरो धौम्यो धीरोदात्तो विराजितः ॥ १२९ ॥

वञ्चको नियतो विष्णुः परिवञ्चक ईश्वरः ।
उमावरप्रदो मुण्डी जटिलः शुचिलक्षणः ॥ १३० ॥

चर्माम्बरः कान्तिकरः कंकालवरवेषधृक् ।
मेखली अजिनी दण्डी कपाली मेखलाधरः ॥ १३१ ॥

सद्योजातः कालिपतिर्वरेण्यो वरदो मुनिः ।
वसाप्रियो वामदेवस्तत्पूर्वो वटमूलगः ॥ १३२ ॥

उलूकरोमा घोरात्मा लास्यप्रीतो लघुः स्थिरः ।
अणोरणीयानीशानः सुन्दरभ्रूः सुताण्डवः ॥ १३३ ॥

किरीटमालाभरणो राजराजलसद्गतिः ।
हरिकेशो मुञ्जिकेशो व्योमकेशो यशोधरः ॥ १३४ ॥

पातालवसनो भर्ता शिपिविष्टः कृपाकरः ।
हिरण्यवर्णो दिव्यात्मा वृषधर्मा विरोचनः ॥ १३५ ॥

दैत्येन्द्रवरदो वैद्यः सुरवन्द्योऽघनाशकः ।
आनन्देशः कुशावर्तो नन्द्यावर्तो मधुप्रियः ॥ १३६ ॥

प्रसन्नात्मा विरूपाक्षो वनानां पतिरव्ययः ।
मस्तकादो वेदवेद्यः सर्वो ब्रह्मौदनप्रियः ॥ १३७ ॥

पिशङ्गितजटाजूटस्तडिल्लोकविलोचनः ।
गृहाधारो ग्रामपालो नरसिंहविनाशकः ॥ १३८ ॥

मत्स्यहा कूर्मपृष्ठास्थिधरो भूदारदारकः ।
विधीन्द्रपूजितपदः पारदो वारिधिस्थितः ॥ १३९ ॥

महोदयो महादेवो महाबीजो महाङ्गधृक् ।
उलूकनागाभरणो विधिकन्धरपातनः ॥ १४० ॥

आकाशकोशो हार्दात्मा मायावी प्रकृतेः परः ।
शुक्लस्त्रिशुक्लस्त्रिमधुस्त्रिसुपर्णः षडङ्गवित् ॥ १४१ ॥

ललनाजनपूज्यांघ्रिर्लङ्कावासोऽनिलाशनः ।
विश्वतश्चक्षुरीशानो विश्वतोबाहुरीश्वरः ॥ १४२ ॥

सर्वात्मा भावनागम्यः स्वतन्त्रः परमेश्वरः ।
विश्वभक्षो विद्रुपाक्षः सर्वदेवशिरोमणिः ॥
ब्रह्म सत्यं तथानन्दो ज्ञानानन्दमहाफलः ॥ १४३ ॥

## ईश्वर उवाच

अष्टोत्तरं महादेवि शेषाशेषमुखोद्गतम् ।
इत्येतन्नामसाहस्रं रहस्यं कथितं मया ॥ १४४ ॥

पवित्रमिदमायुष्यं पठतां शृण्वतां सदा ।
यस्त्वेतन्नामसाहस्त्रैः बिल्वैः पङ्कजकुड्मलैः ॥ १४५ ॥
पूजयेत् सर्वकालेषु शिवरात्रौ महेश्वरि ।
तस्य मुक्तिं ददामीशे सत्यं सत्यं न संशयः ॥ १४६ ॥

मम प्रियकरं ह्येतत् फणिना फणितं शुभम् ।
पठेत् सर्वान् लभेतैव कामानायुष्यमेव च ॥ १४७ ॥

नामसाहस्त्रपाठी स यमलोकं न पश्यति ।
कल्याणीं च लभेद् गौरि गतिं नाम्नां च वैभवात् ॥ १४८ ॥

नाख्येयं गोप्यमेतद्धि नाभक्ताय कदाचन ।
न प्रकाश्यमिदं देवि मातृकारुद्रसंहितम् ॥ १४९ ॥

भक्तेषु लभते नित्यं भक्तिं मत्पादयोर्दृढाम् ।
दत्वाऽभक्तेषु पापात्मा रौरवं नरकं व्रजेत् ॥ १५० ॥

## सूत उवाच

इति शिववचनं निशम्य गौरी
प्रणयाच्च प्रणता शिवाङ्घ्रिपद्मे ।
सुरवरतरुसुन्दरोरुपुष्पै-
रभिपूज्य प्रमथाधिपं तुतोष ॥ १५१ ॥

**॥ इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे चत्वारिंशोऽध्यायः ॥**

## ॥ अथ नामावलिः ॥

१. ॐ ओंकारनिलयात्मस्थाय नमः।
२. ॐ ओंकारार्थैकवाचकाय नमः।
३. ॐ ओंकारेशाकृतये नमः।
४. ॐ ओमितिशब्दकृतस्तुतये नमः।
५. ॐ ओंकारकुण्डनिलयलिंग-पूजनपापहृते नमः।
६. ॐ नमिताशेषदेवादये नमः।
७. ॐ नदीपुलिनसंस्थिताय नमः।
८. ॐ नन्दिवाद्यप्रियाय नमः।
९. ॐ नित्याय नमः।
१०. ॐ नामपारायणप्रियाय नमः।
११. ॐ महेन्द्रनिलयाय नमः।
१२. ॐ मानिने नमः।
१३. ॐ मानसान्तरपापभिदे नमः।
१४. ॐ मयस्कराय नमः।
१५. ॐ महायोगिने नमः।
१६. ॐ मायाचक्रप्रवर्तकाय नमः।
१७. ॐ शिवाय नमः।
१८. ॐ शिवतराय नमः।
१९. ॐ शीताय नमः।
२०. ॐ शीतांशुकृतभूषणाय नमः।
२१. ॐ धनुषे नमः।
२२. ॐ शरकराय नमः।
२३. ॐ ध्यात्रे नमः।
२४. ॐ धर्माधर्मपरायणाय नमः।
२५. ॐ आत्मने नमः।
२६. ॐ आतार्याय नमः।
२७. ॐ आलाद्याय नमः।
२८. ॐ अनङ्गशरखण्डनाय नमः।
२९. ॐ ईशानाय नमः।
३०. ॐ ईड्याय नमः।
३१. ॐ ईध्र्याय नमः।
३२. ॐ इभमस्तकसंस्तुताय नमः।
३३. ॐ उमासंश्लिष्टवामाङ्गाय नमः।
३४. ॐ उशीनरनृपार्चिताय नमः।
३५. ॐ उदुम्बरफलप्रीताय नमः।
३६. ॐ उमादिसुरपूजिताय नमः।
३७. ॐ ऋजीषीकृतभूचक्राय नमः।
३८. ॐ रिपुप्रमथनोर्जिताय नमः।
३९. ॐ लिङ्गार्चकजनप्रीताय नमः।

४०. ॐ लिङ्गिने नमः।
४१. ॐ लिङ्गसमप्रियाय नमः।
४२. ॐ लिपिप्रियाय नमः।
४३. ॐ बिन्दुहीनाय नमः।
४४. ॐ लीलाकृतजगत्त्रयाय नमः।
४५. ॐ ऐन्द्रीदिक्पतिसंयुक्ताय नमः।
४६. ॐ ऐश्वर्यादिफलप्रदाय नमः।
४७. ॐ औत्तानपादपूज्याङ्घ्रये नमः।
४८. ॐ औमादिसुरपूजिताय नमः।
४९. ॐ कल्याणाचलकोदण्डाय नमः।
५०. ॐ कामितार्थफलप्रदाय नमः।
५१. ॐ कस्तूरीतिलकप्रीताय नमः।
५२. ॐ कर्पूराभकलेवराय नमः।
५३. ॐ करन्धमसुतप्रीताय नमः।
५४. ॐ कल्पादिपरिवर्जिताय नमः।
५५. ॐ कल्पितानेकभूतादये नमः।
५६. ॐ कलिकल्मषनाशनाय नमः।
५७. ॐ कमलाभलसन्नेत्राय नमः।
५८. ॐ कमलापतिपूजिताय नमः।
५९. ॐ खगोल्कादित्यवरदाय नमः।
६०. ॐ खञ्जरीटवरप्रदाय नमः।
६१. ॐ खर्जूरवनमध्यस्थाय नमः।
६२. ॐ खण्डिताखण्डलीकराय नमः।
६३. ॐ खगाय नमः।
६४. ॐ खड्गहराय नमः।
६५. ॐ खण्डाय नमः।
६६. ॐ खगगाय नमः।
६७. ॐ खाकृतये नमः।
६८. ॐ खसाय नमः।
६९. ॐ खण्डपर्शवे नमः।
७०. ॐ खण्डघनाय नमः।
७१. ॐ खण्डितारातिमण्डलाय नमः।
७२. ॐ गन्धर्वगणसुप्रीताय नमः।
७३. ॐ गन्धधृषे नमः।
७४. ॐ गर्वनाशकाय नमः।
७५. ॐ गङ्गाधराय नमः।
७६. ॐ गोगणेशाय नमः।

७७. ॐ गणेशवरपुत्रकाय नमः।
७८. ॐ गतिदाय नमः।
७९. ॐ गदघ्ने नमः।
८०. ॐ गन्धिने नमः।
८१. ॐ गन्धमाल्यवरार्चिताय नमः।
८२. ॐ गगनस्थाय नमः।
८३. ॐ गणपतये नमः।
८४. ॐ गगनाभोगभूषणाय नमः।
८५. ॐ घण्टाकर्णप्रियाय नमः।
८६. ॐ घण्टिने नमः।
८७. ॐ घटजस्तुतिसुप्रियाय नमः।
८८. ॐ घोटकप्रियपुत्राय नमः।
८९. ॐ घर्मकालाय नमः।
९०. ॐ घनाकृतये नमः।
९१. ॐ घनवाहाय नमः।
९२. ॐ घृताध्यक्षाय नमः।
९३. ॐ घनघोषाय नमः।
९४. ॐ घटेश्वराय नमः।
९५. ॐ घटानादकरप्रीताय नमः।
९६. ॐ घटीभूतमहागिरये नमः।
९७. ॐ चन्द्रचूडाय नमः।
९८. ॐ चन्द्रकराय नमः।
९९. ॐ चन्दनार्द्राय नमः।

**१००. ॐ चतुष्पथाय नमः।**
१०१. ॐ चमसोद्भेदमध्यस्थाय नमः।
१०२. ॐ चण्डकोपाय नमः।
१०३. ॐ चतुर्मुखाय नमः।
१०४. ॐ चक्षुःश्रोत्रमहाहाराय नमः।
१०५. ॐ चण्डिकेशवरप्रदाय नमः।
१०६. ॐ चेतोजन्महराय नमः।
१०७. ॐ चण्डाय नमः।
१०८. ॐ चातुर्होत्रप्रियाय नमः।
१०९. ॐ चराय नमः।
११०. ॐ चतुर्मुखमुखस्तुत्याय नमः।
१११. ॐ चतुर्वेदाय नमः।
११२. ॐ चराचराय नमः।
११३. ॐ चण्डभानुकरान्तः स्थाय नमः।
११४. ॐ चतुर्मूर्तिवपुः स्थिताय नमः।
११५. ॐ छादितानेकलोकादये नमः।
११६. ॐ छन्दसां गणमध्यगाय नमः।

११७. ॐ छत्रचामरशोभाढ्याय नमः।

११८. ॐ छन्दोगगतिदायकाय नमः।

११९. ॐ जङ्गमाजङ्गमाकाराय नमः।

१२०. ॐ जगन्नाथाय नमः।

१२१. ॐ जगद्गताय नमः।

१२२. ॐ जह्नुकन्याजटाय नमः।

१२३. ॐ जप्याय नमः।

१२४. ॐ जेत्रे नमः।

१२५. ॐ जत्रवे नमः।

१२६. ॐ जनार्तिघ्ने नमः।

१२७. ॐ जम्भारातये नमः।

१२८. ॐ जनप्रीताय नमः।

१२९. ॐ जनकाय नमः।

१३०. ॐ जनिकोविदाय नमः।

१३१. ॐ जनार्दनार्दनाय नमः।

१३२. ॐ जामिजात्यादि-परिवर्जिताय नमः।

१३३. ॐ झणज्झणांघ्रिजारावाय नमः।

१३४. ॐ झंकारोज्झितदुष्क्रियाय नमः।

१३५. ॐ टङ्कप्रियाय नमः।

१३६. ॐ टङ्कृतिकाय नमः।

१३७. ॐ टङ्कभेदिने नमः।

१३८. ॐ टकारकाय नमः।

१३९. ॐ टादिवर्णप्रियाय नमः।

१४०. ॐ ठान्ताय नमः।

१४१. ॐ ढक्कानादप्रियाय नमः।

१४२. ॐ रसाय नमः।

१४३. ॐ डामरीतन्त्रमध्यस्थाय नमः।

१४४. ॐ डमरुध्वनिशोभिताय नमः।

१४५. ॐ ढक्काध्वनिकृतानल्प-बधिरीकृतदिङ्मुखाय नमः।

१४६. ॐ णकाराय नमः।

१४७. ॐ णणुकोत्थादये नमः।

१४८. ॐ णान्तकृण्णतिमोचकाय नमः।

१४९. ॐ तस्कराय नमः।

१५०. ॐ ताम्रकाय नमः।

१५१. ॐ तार्क्ष्याय नमः।

१५२. ॐ तामसादिगुणोज्झिताय नमः।

१५३. ॐ तरुमूलप्रियाय नमः।

१५४. ॐ ताताय नमः।

१५५. ॐ तमसां नाशकाय नमः।

१५६. ॐ तटाय नमः।

१५७. ॐ थानासुरहराय नमः।

१५८. ॐ स्थात्रे नमः।

१५९. ॐ स्थाणवे नमः।

१६०. ॐ स्थानप्रियाय नमः।

१६१. ॐ स्थिराय नमः।

'१६२. ॐ दात्रे नमः।

१६३. ॐ दानपतये नमः।

१६४. ॐ दान्ताय नमः।

१६५. ॐ दन्दशूकविभूषिताय नमः।

१६६. ॐ दर्शनीयाय नमः।

१६७. ॐ दीनदयाय नमः।

१६८. ॐ दण्डितारातिमण्डलाय नमः।

१६९. ॐ दक्षयज्ञहराय नमः।

१७०. ॐ देवाय नमः।

१७१. ॐ दानवारये नमः।

१७२. ॐ दमोदयाय नमः।

१७३. ॐ दत्तात्रेयप्रियाय नमः।

१७४. ॐ दण्डिने नमः।

१७५. ॐ दाडिमीकुसुमप्रियाय नमः।

१७६. ॐ धात्रे नमः।

१७७. ॐ धनाधिपसखाय नमः।

१७८. ॐ धनधान्यप्रदाय नमः।

१७९. ॐ धनाय नमः।

१८०. ॐ धामप्रियाय नमः।

१८१. ॐ अन्धसां नाथाय नमः।

१८२. ॐ धर्मवाहाय नमः।

१८३. ॐ धनुर्धराय नमः।

१८४. ॐ नमस्कारप्रियाय नमः।

१८५. ॐ नाथाय नमः।

१८६. ॐ नमिताशेषदुःखहृते नमः।

१८७. ॐ नन्दिप्रियाय नमः।

१८८. ॐ नर्मसखाय नमः।

१८९. ॐ नर्मदातीरसंस्थिताय नमः।

१९०. ॐ नन्दनाय नमः।

१९१. ॐ नमसामीशाय नमः।

१९२. ॐ नानारूपाय नमः।

१९३. ॐ नदीगताय नमः।

१९४. ॐ नामप्रीताय नमः।

१९५. ॐ नामरूपगुणकर्मविवर्जिताय नमः।

१९६. ॐ पत्तीनां पतये नमः।

१९७. ॐ पार्याय नमः।

१९८. ॐ परमात्मने नमः।

१९९. ॐ परात्पराय नमः।

**२००. ॐ पङ्कजासनपूज्याङ्घ्रये नमः।**

२०१. ॐ पद्मनाभवरदाय नमः।

२०२. ॐ पन्नगाधिपसद्धाराय नमः।

२०३. ॐ पशूनां पतिपावकाय नमः।

२०४. ॐ पापघ्ने नमः।

२०५. ॐ पण्डिताय नमः।

२०६. ॐ पान्थाय नमः।

२०७. ॐ पादपोन्मथनाय नमः।

२०८. ॐ पराय नमः।

२०९. ॐ फणिने नमः ।

२१०. ॐ फणालसन्मौलये नमः।

२११. ॐ फणिकङ्कणसत्कराय नमः।

२१२. ॐ फणितानेकवेदोक्तये नमः।

२१३. ॐ फणिमाणिक्य-भूषिताय नमः।

२१४. ॐ बन्धमोचनकृते नमः।

२१५. ॐ बन्धवे नमः।

२१६. ॐ बन्धुरालकशोभिताय नमः।

२१७. ॐ बलवतां बलिने नमः।

२१८. ॐ मुख्याय नमः।

२१९. ॐ बलिपुत्रवरप्रदाय नमः।

२२०. ॐ बाणासुरेन्द्रपूज्याङ्घ्रये नमः।

२२१. ॐ बाणलिङ्गाय नमः।

२२२. ॐ बहुप्रदाय नमः।

२२३. ॐ बन्दीकृतागमाय नमः।

२२४. ॐ बालपालकाय नमः।

२२५. ॐ बहुशोभिताय नमः।

२२६. ॐ भवादये नमः।

२२७. ॐ भवघ्ने नमः।

२२८. ॐ भव्याय नमः।

२२९. ॐ भवाय नमः।

२३०. ॐ भावपरायणाय नमः।

२३१. ॐ भवहृते नमः।

२३२. ॐ भवदाय नमः।

२३३. ॐ भूताय नमः।

२३४. ॐ भण्डासुरवरप्रदाय नमः।

२३५. ॐ भगाक्षिमथनाय नमः।

२३६. ॐ भर्गाय नमः।

२३७. ॐ भवानीशाय नमः।

२३८. ॐ भयङ्कराय नमः।
२३९. ॐ भङ्गकाराय नमः।
२४०. ॐ भावुकदाय नमः।
२४१. ॐ भस्माभ्यक्ततनवे नमः।
२४२. ॐ भटाय नमः।
२४३. ॐ मयस्कराय नमः।
२४४. ॐ महादेवाय नमः।
२४५. ॐ मायाविने नमः।
२४६. ॐ मानसान्तराय नमः।
२४७. ॐ मायातीताय नमः।
२४८. ॐ मन्मथारये नमः।
२४९. ॐ मधुपाय नमः।
२५०. ॐ मनोन्मनाय नमः।
२५१. ॐ मध्यस्थाय नमः।
२५२. ॐ मधुमांसात्मने नमः।
२५३. ॐ. मनोवाचामगोचराय नमः।
२५४. ॐ मण्डिताय नमः।
२५५. ॐ मण्डनाकाराय नमः।
२५६. ॐ मतिदाय नमः।
२५७. ॐ मानपालकाय नमः।
२५८. ॐ मनस्विने नमः।
२५९. ॐ मनुरूपाय नमः।
२६०. ॐ मन्त्रमूर्तये नमः।
२६१. ॐ महाहनवे नमः।
२६२. ॐ यशस्कराय नमः।
२६३. ॐ यन्त्ररूपाय नमः।
२६४. ॐ यमिमानसपावनाय नमः।
२६५. ॐ यमान्तकरणाय नमः।
२६६. ॐ यामिने नमः।
२६७. ॐ यजमानाय नमः।
२६८. ॐ यदवे नमः।
२६९. ॐ यमिने नमः।
२७०. ॐ रमानाथार्चितपदाय नमः।
२७१. ॐ रम्याय नमः।
२७२. ॐ रतिविशारदाय नमः।
२७३. ॐ रम्भाप्रीताय नमः।
२७४. ॐ रसाय नमः।
२७५. ॐ रात्रिचराय नमः।
२७६. ॐ रावणपूजिताय नमः।
२७७. ॐ रङ्गपादाय नमः।
२७८. ॐ रन्तिदेवाय नमः।
२७९. ॐ रविमण्डलमध्यगाय नमः।
२८०. ॐ रथन्तरस्तुताय नमः।
२८१. ॐ रक्तपानाय नमः।
२८२. ॐ रथपतये नमः।

२८३. ॐ रजसे नमः।
२८४. ॐ रथात्मकाय नमः।
२८५. ॐ लम्बतनवे नमः।
२८६. ॐ लाङ्गलिने नमः।
२८७. ॐ लोलगण्डकाय नमः।
२८८. ॐ ललामसोमलूतादये नमः।
२८९. ॐ ललितापूजिताय नमः।
२९०. ॐ लवाय नमः।
२९१. ॐ वामनाय नमः।
२९२. ॐ वायुरूपाय नमः।
२९३. ॐ वराहमथनाय नमः।
२९४. ॐ वटवे नमः।
२९५. ॐ वाक्यजाताय नमः।
२९६. ॐ वराय नमः।
२९७. ॐ वार्याय नमः।
२९८. ॐ वरुणेड्याय नमः।
२९९. ॐ वराश्रयाय नमः।
**३००. ॐ वपुषे नमः।**
३०१. ॐ धराय नमः।
३०२. ॐ वर्षवराय नमः।
३०३. ॐ वरीयसे नमः।
३०४. ॐ वरदाय नमः।
३०५. ॐ वराय नमः।
३०६. ॐ वसुप्रदाय नमः।
३०७. ॐ वसुपतये नमः।
३०८. ॐ वन्दारुजनपालकाय नमः।
३०९. ॐ शान्ताय नमः।
३१०. ॐ शमपराय नमः।
३११. ॐ शास्त्रे नमः।
३१२. ॐ शमनान्तकराय नमः।
३१३. ॐ शठाय नमः।
३१४. ॐ शङ्खहस्ताय नमः।
३१५. ॐ शत्रुहन्त्रे नमः।
३१६. ॐ शमिताखिलदुष्कृताय नमः।
३१७. ॐ शरहस्ताय नमः।
३१८. ॐ शतावर्ताय नमः।
३१९. ॐ शतक्रतुवरप्रदाय नमः।
३२०. ॐ शम्भवे नमः।
३२१. ॐ शम्याकपुष्पार्च्याय नमः।
३२२. ॐ शङ्कराय नमः।
३२३. ॐ शतरुद्रगाय नमः।
३२४. ॐ शम्याकराय नमः।
३२५. ॐ शान्तमनसे नमः।
३२६. ॐ शान्ताय नमः।
३२७. ॐ शशिकलाधराय नमः।

३२८. ॐ षडाननगुरवे नमः।

३२९. ॐ षण्डाय नमः।

३३०. ॐ षट्कर्मनिरताय नमः।

३३१. ॐ षगवे नमः।

३३२. ॐ षड्जादिरसिकाय नमः।

३३३. ॐ षष्ठाय नमः।

३३४. ॐ षष्ठीप्रीताय नमः।

३३५. ॐ षडङ्गवते नमः।

३३६. ॐ षडूर्मिरहिताय नमः।

३३७. ॐ शष्प्याय नमः।

३३८. ॐ षिङ्गाय नमः।

३३९. ॐ षाड्गुण्यदायकाय नमः।

३४०. ॐ सत्यप्रियाय नमः।

३४१. ॐ सत्यधाम्ने नमः।

३४२. ॐ संसाररहिताय नमः।

३४३. ॐ समाय नमः।

३४४. ॐ सख्यै नमः।

३४५. ॐ सन्धानकुशलाय नमः।

३४६. ॐ सर्वसम्पत्प्रदायकाय नमः।

३४७. ॐ सगराय नमः।

३४८. ॐ सागरान्तःस्थाय नमः।

३४९. ॐ सत्राशाय नमः।

३५०. ॐ सरणाय नमः।

३५१. ॐ सहाय नमः।

३५२. ॐ साम्बाय नमः।

३५३. ॐ सनातनाय नमः।

३५४. ॐ साधवे नमः।

३५५. ॐ सारासारविशारदाय नमः।

३५६. ॐ सामगानप्रियाय नमः।

३५७. ॐ साराय नमः।

३५८. ॐ सरस्वत्या सुपूजिताय नमः।

३५९. ॐ हतारातये नमः।

३६०. ॐ हंसगतये नमः।

३६१. ॐ हाहाहूहूस्तुतिप्रियाय नमः।

३६२. ॐ हरिकेशाय नमः।

३६३. ॐ हरिद्राङ्गाय नमः।

३६४. ॐ हरिन्मणिसरोरुहाय नमः।

३६५. ॐ हरिपूज्याय नमः।

३६६. ॐ हराय नमः।

३६७. ॐ हार्याय नमः।

३६८. ॐ हरिणाङ्कशिखण्डकाय नमः।

३६९. ॐ हाहाकारादिरहिताय नमः।

३७०. ॐ हनुनासाय नमः।

३७१. ॐ हहुंकृताय नमः।

३७२. ॐ लालाननाय नमः।

३७३. ॐ लतासोमाय नमः।

३७४. ॐ लक्ष्मीकान्तवरप्रदाय नमः।

३७५. ॐ लम्बोदरगुरवे नमः।

३७६. ॐ लभ्याय नमः।

३७७. ॐ लवलीशाय नमः।

३७८. ॐ लुलायगाय नमः।

३७९. ॐ क्षयद्वीराय नमः।

३८०. ॐ क्षमायुक्ताय नमः।

३८१. ॐ क्षयादिरहिताय नमः।

३८२. ॐ क्षमिणे नमः।

३८३. ॐ क्षत्रियान्तकराय नमः।

३८४. ॐ क्षान्ताय नमः।

३८५. ॐ क्षात्रधर्मप्रवर्तकाय नमः।

३८६. ॐ क्षयिष्णुवर्धनाय नमः।

३८७. ॐ क्षान्ताय नमः।

३८८. ॐ क्षपानाथकलाधराय नमः।

३८९. ॐ क्षपादिपूजनप्रीताय नमः।

३९०. ॐ क्षपणान्ताय नमः।

३९१. ॐ क्षराक्षराय नमः।

३९२. ॐ रुद्राय नमः।

३९३. ॐ मन्यवे नमः।

३९४. ॐ सुधन्वने नमः।

३९५. ॐ बाहुमते नमः।

३९६. ॐ परमेश्वराय नमः।

३९७. ॐ स्विषवे नमः।

३९८. ॐ स्विष्टकृते नमः।

३९९. ॐ ईशानाय नमः।

**४००. ॐ शरव्याधारकाय नमः।**

४०१. ॐ यूने नमः।

४०२. ॐ अघोराय नमः।

४०३. ॐ तनुमते नमः।

४०४. ॐ देवाय नमः।

४०५. ॐ गिरीशाय नमः।

४०६. ॐ पाकशासनाय नमः।

४०७. ॐ गिरित्राय नमः।

४०८. ॐ पुरुषाय नमः।

४०९. ॐ प्राणाय नमः।

४१०. ॐ पञ्चप्राणप्रवर्तकाय नमः।

४११. ॐ अध्यवोचाय नमः।

४१२. ॐ महादेवाय नमः।

४१३. ॐ अधिवक्त्रे नमः।

४१४. ॐ महेश्वराय नमः।
४१५. ॐ ईशानाय नमः।
४१६. ॐ प्रथमाय नमः।
४१७. ॐ देवाय नमः।
४१८. ॐ भिषजां पतये नमः।
४१९. ॐ ईश्वराय नमः।
४२०. ॐ ताम्राय नमः।
४२१. ॐ अरुणाय नमः।
४२२. ॐ विश्वनाथाय नमः।
४२३. ॐ बभ्रवे नमः।
४२४. ॐ सुमङ्गलाय नमः।
४२५. ॐ नीलग्रीवाय नमः।
४२६. ॐ शिवाय नमः।
४२७. ॐ हृष्टाय नमः।
४२८. ॐ देवदेवाय नमः।
४२९. ॐ विलोहिताय नमः।
४३०. ॐ गोपवश्याय नमः।
४३१. ॐ विश्वकर्त्रे नमः।
४३२. ॐ उदहार्यजनेक्षिताय नमः।
४३३. ॐ विश्वदृष्टाय नमः।
४३४. ॐ सहस्राक्षाय नमः।
४३५. ॐ मीढुष्ठाय नमः।
४३६. ॐ भगवते नमः।
४३७. ॐ हराय नमः।
४३८. ॐ शतेषुधये नमः।
४३९. ॐ कपर्दिने नमः।
४४०. ॐ सोमाय नमः।
४४१. ॐ मीढुष्टमाय नमः।
४४२. ॐ भवाय नमः।
४४३. ॐ अनातताय नमः।
४४४. ॐ अतिधृष्णवे नमः।
४४५. ॐ सत्त्वानां रक्षकाय नमः।
४४६. ॐ प्रभवे नमः।
४४७. ॐ विश्वेश्वराय नमः।
४४८. ॐ महादेवाय नमः।
४४९. ॐ त्र्यम्बकाय नमः।
४५०. ॐ त्रिपुरान्तकाय नमः।
४५१. ॐ त्रिकाग्निकालाय नमः।
४५२. ॐ कालाग्निरुद्राय नमः।
४५३. ॐ नीलाय नमः।
४५४. ॐ अधिपाय नमः।
४५५. ॐ अनिलाय नमः।
४५६. ॐ सर्वेश्वराय नमः।
४५७. ॐ सदाशम्भवे नमः।
४५८. ॐ श्रीमते नमः।
४५९. ॐ मृत्युञ्जयाय नमः।
४६०. ॐ शिवाय नमः।
४६१. ॐ स्वर्णबाहवे नमः।

४६२. ॐ सैन्यपालाय नमः।
४६३. ॐ दिशाधीशाय नमः।
४६४. ॐ वनस्पतये नमः।
४६५. ॐ हरिकेशाय नमः।
४६६. ॐ पशुपतये नमः।
४६७. ॐ उग्राय नमः।
४६८. ॐ सस्पिञ्जराय नमः।
४६९. ॐ अन्तकाय नमः।
४७०. ॐ त्विषीमते नमः।
४७१. ॐ मार्गपाय नमः।
४७२. ॐ बभ्रवे नमः।
४७३. ॐ विव्याधिने नमः।
४७४. ॐ अन्नपालकाय नमः।
४७५. ॐ पुष्टाय नमः।
४७६. ॐ भवाधिपाय नमः।
४७७. ॐ लोकनाथाय नमः।
४७८. ॐ रुद्राततायिकाय नमः।
४७९. ॐ क्षेत्रेशाय नमः।
४८०. ॐ सूतपाय नमः।
४८१. ॐ अहन्त्याय नमः।
४८२. ॐ वनपाय नमः।
४८३. ॐ रोहिताय नमः।
४८४. ॐ स्थपाय नमः।
४८५. ॐ वृक्षेशाय नमः।
४८६. ॐ मन्त्रजाय नमः।
४८७. ॐ वाण्याय नमः।
४८८. ॐ भुवन्त्याय नमः।
४८९. ॐ वारिवस्कृताय नमः।
४९०. ॐ ओषधीशाय नमः।
४९१. ॐ महाघोषाय नमः।
४९२. ॐ क्रन्दनाय नमः।
४९३. ॐ पत्तिनायकाय नमः।
४९४. ॐ कृत्स्नवीतिने नमः।
४९५. ॐ धावमानाय नमः।
४९६. ॐ सत्त्वनांपतये नमः।
४९७. ॐ अव्ययाय नमः।
४९८. ॐ सहमानाय नमः।
४९९. ॐ निर्व्याधये नमः।
**५००. ॐ अव्याधये नमः।**
५०१. ॐ ककुभाय नमः।
५०२. ॐ नटाय नमः।
५०३. ॐ निषङ्गिणे नमः।
५०४. ॐ स्तेनपाय नमः।
५०५. ॐ कक्ष्याय नमः।
५०६. ॐ निचेरवे नमः।
५०७. ॐ परिचारकाय नमः।
५०८. ॐ आरण्यपाय नमः।
५०९. ॐ सृकाविने नमः।

५१०. ॐ जिघांसवे नमः।
५११. ॐ मुष्णपाय नमः।
५१२. ॐ असिमते नमः।
५१३. ॐ नक्तञ्चराय नमः।
५१४. ॐ प्रकृन्ताय नमः।
५१५. ॐ उष्णीषिणे नमः।
५१६. ॐ गिरिंसञ्चराय नमः।
५१७. ॐ कुलुञ्चाय नमः।
५१८. ॐ इषुमते नमः।
५१९. ॐ धन्विने नमः।
५२०. ॐ आतन्वते नमः।
५२१. ॐ प्रतिधानवते नमः।
५२२. ॐ आयच्छाय नमः।
५२३. ॐ विसृजाय नमः।
५२४. ॐ आत्मने नमः।
५२५. ॐ वेधनाय नमः।
५२६. ॐ आसनाय नमः।
५२७. ॐ पराय नमः।
५२८. ॐ शयानाय नमः।
५२९. ॐ स्वापकृते नमः।
५३०. ॐ जाग्रते नमः।
५३१. ॐ स्थिताय नमः।
५३२. ॐ धावनकारकाय नमः।
५३३. ॐ सभापतये नमः।
५३४. ॐ तुरंगेशाय नमः।
५३५. ॐ उगणाय नमः।
५३६. ॐ तृंहतये नमः।
५३७. ॐ गुरवे नमः।
५३८. ॐ विश्वाय नमः।
५३९. ॐ व्राताय नमः।
५४०. ॐ गणाय नमः।
५४१. ॐ विश्वरूपाय नमः।
५४२. ॐ वैरूप्यकारकाय नमः।
५४३. ॐ महते नमः।
५४४. ॐ अणीयसे नमः।
५४५. ॐ रथपाय नमः।
५४६. ॐ सेनान्ये नमः।
५४७. ॐ क्षत्रसंग्रहाय नमः।
५४८. ॐ तक्ष्णे नमः।
५४९. ॐ रथकाराय नमः।
५५०. ॐ कुलालाय नमः।
५५१. ॐ कर्मकारकाय नमः।
५५२. ॐ पुञ्जिष्ठाय नमः।
५५३. ॐ निषादाय नमः।
५५४. ॐ इषुकृते नमः।
५५५. ॐ धन्वकारकाय नमः।

५५६. ॐ मृगयवे नमः।
५५७. ॐ श्वानपाय नमः।
५५८. ॐ देवाय नमः।
५५९. ॐ भवाय नमः।
५६०. ॐ रुद्राय नमः।
५६१. ॐ शर्वकाय नमः।
५६२. ॐ पशुपाय नमः।
५६३. ॐ नीलकण्ठाय नमः।
५६४. ॐ शितिकण्ठाय नमः।
५६५. ॐ कपर्दभृते नमः।
५६६. ॐ व्युप्तकेशाय नमः।
५६७. ॐ सहस्राक्षाय नमः।
५६८. ॐ शतधन्वने नमः।
५६९. ॐ गिरीश्वराय नमः।
५७०. ॐ शिपिविष्टाय नमः।
५७१. ॐ मीढुष्टाय नमः।
५७२. ॐ इषुमते नमः।
५७३. ॐ ह्रस्वाय नमः।
५७४. ॐ वामनाय नमः।
५७५. ॐ बहुवर्षवयसे नमः।
५७६. ॐ वृद्धाय नमः।
५७७. ॐ संवृद्ध्वसे नमः।
५७८. ॐ प्रथमाय नमः।
५७९. ॐ अग्रियाय नमः।
५८०. ॐ आशवे नमः।
५८१. ॐ अजिराय नमः।
५८२. ॐ शीघ्र्याय नमः।
५८३. ॐ शीभ्याय नमः।
५८४. ॐ ऊर्म्याय नमः।
५८५. ॐ वस्वनाय नमः।
५८६. ॐ स्रोताय नमः।
५८७. ॐ द्वीप्याय नमः।
५८८. ॐ ज्येष्ठाय नमः।
५८९. ॐ कनिष्ठाय नमः।
५९०. ॐ पूर्वजाय नमः।
५९१. ॐ अपराय नमः।
५९२. ॐ मध्याय नमः।
५९३. ॐ अपगल्भाय नमः।
५९४. ॐ आशुषेणाय नमः।
५९५. ॐ आशुरथाय नमः।
५९६. ॐ शूराय नमः।
५९७. ॐ भिन्दिवर्मधृषे नमः।
५९८. ॐ वरूथिने नमः।
५९९. ॐ बिल्मिने नमः।
**६००. ॐ कवचिने नमः।**
६०१. ॐ श्रुतसेनाय नमः।

६०२. ॐ दुन्दुभये नमः।
६०३. ॐ धृष्णवे नमः।
६०४. ॐ प्रहिताय नमः।
६०५. ॐ दूताय नमः।
६०६. ॐ निषङ्गिणे नमः।
६०७. ॐ तीक्ष्णसायकाय नमः।
६०८. ॐ आयुधिने नमः।
६०९. ॐ स्वायुधिने नमः।
६१०. ॐ देवाय नमः।
६११. ॐ उपवीतिने नमः।
६१२. ॐ सुधन्वधृषे नमः।
६१३. ॐ स्रुत्याय नमः।
६१४. ॐ पथ्याय नमः।
६१५. ॐ काट्याय नमः।
६१६. ॐ नीप्याय नमः।
६१७. ॐ सूद्याय नमः।
६१८. ॐ सरोद्भवाय नमः।
६१९. ॐ नाद्याय नमः।
६२०. ॐ वैशन्ताय नमः।
६२१. ॐ कूप्याय नमः।
६२२. ॐ अवट्याय नमः।
६२३. ॐ वर्ष्याय नमः।
६२४. ॐ मेघ्याय नमः।
६२५. ॐ वैद्युताय नमः।
६२६. ॐ ईध्र्याय नमः।
६२७. ॐ आतप्याय नमः।
६२८. ॐ वातोत्थाय नमः।
६२९. ॐ रश्मिजाय नमः।
६३०. ॐ वास्तवाय नमः।
६३१. ॐ अस्तुपाय नमः।
६३२. ॐ सोमाय नमः।
६३३. ॐ रुद्राय नमः।
६३४. ॐ ताम्राय नमः।
६३५. ॐ अरुणाय नमः।
६३६. ॐ शङ्गाय नमः।
६३७. ॐ ईश्वराय नमः।
६३८. ॐ उग्राय नमः।
६३९. ॐ भीमाय नमः।
६४०. ॐ अग्रेवधाय नमः।
६४१. ॐ दूरेवधाय नमः।
६४२. ॐ हन्त्रे नमः।
६४३. ॐ हनीयसे नमः।
६४४. ॐ वृक्षाय नमः।
६४५. ॐ हरिकेशाय नमः।
६४६. ॐ प्रतर्दनाय नमः।
६४७. ॐ ताराय नमः।

६४८. ॐ शम्भवे नमः।
६४९. ॐ मयोभुवे नमः।
६५०. ॐ शङ्कराय नमः।
६५१. ॐ मयस्कराय नमः।
६५२. ॐ शिवाय नमः।
६५३. ॐ शिवतराय नमः।
६५४. ॐ तीर्थ्याय नमः।
६५५. ॐ कूल्याय नमः।
६५६. ॐ पार्याय नमः।
६५७. ॐ वार्याय नमः।
६५८. ॐ प्रतारणाय नमः।
६५९. ॐ उत्तारणाय नमः।
६६०. ॐ आलाद्याय नमः।
६६१. ॐ आतार्याय नमः।
६६२. ॐ शष्प्यफेनजाय नमः।
६६३. ॐ सिकत्याय नमः।
६६४. ॐ प्रवाह्याय नमः।
६६५. ॐ इरिण्याय नमः।
६६६. ॐ प्रमथाय नमः।
६६७. ॐ किंशिलाय नमः।
६६८. ॐ क्षयणाय नमः।
६६९. ॐ कूलगाय नमः।
६७०. ॐ गोष्ठ्याय नमः।
६७१. ॐ पुलस्त्याय नमः।
६७२. ॐ गृह्याय नमः।
६७३. ॐ तल्प्याय नमः।
६७४. ॐ गेह्याय नमः।
६७५. ॐ काट्याय नमः।
६७६. ॐ गह्वरेष्ठाय नमः।
६७७. ॐ हृदोद्भवाय नमः।
६७८. ॐ निवेष्ट्याय नमः।
६७९. ॐ पांसुमध्यस्थाय नमः।
६८०. ॐ रजस्याय नमः।
६८१. ॐ हरितस्थिताय नमः।
६८२. ॐ शुष्क्याय नमः।
६८३. ॐ लोप्याय नमः।
६८४. ॐ उलप्याय नमः।
६८५. ॐ ऊर्म्याय नमः।
६८६. ॐ सूर्म्याय नमः।
६८७. ॐ पर्णजाय नमः।
६८८. ॐ पर्णशद्याय नमः।
६८९. ॐ अपगुरकाय नमः।
६९०. ॐ अभिघ्नोत्खिद्यकोविदाय नमः।
६९१. ॐ अवकिरिकाय नमः।

६९२. ॐ ईशानाय नमः।
६९३. ॐ देवादिहृदयान्तराय नमः।
६९४. ॐ विक्षीणकाय नमः।
६९५. ॐ विचिन्वत्क्याय नमः।
६९६. ॐ आनिर्हते नमः।
६९७. ॐ आमिवत्ककाय नमः।
६९८. ॐ द्रापये नमः।
६९९. ॐ अन्धस्पतये नमः।
**७००. ॐ दात्रे नमः।**
७०१. ॐ दरिद्रते नमः।
७०२. ॐ नीललोहिताय नमः।
७०३. ॐ तवस्वते नमः।
७०४. ॐ कपर्दीशाय नमः।
७०५. ॐ क्षयद्वीराय नमः।
७०६. ॐ गोहनाय नमः।
७०७. ॐ पुरुषन्ताय नमः।
७०८. ॐ गर्तगताय नमः।
७०९. ॐ यूने नमः।
७१०. ॐ मृगवरोग्रकाय नमः।
७११. ॐ मृडाय नमः।
७१२. ॐ जरित्रे नमः।
७१३. ॐ रुद्राय नमः।
७१४. ॐ मीढ्याय नमः।
७१५. ॐ देवपतये नमः।
७१६. ॐ हरये नमः।
७१७. ॐ मीढुष्टमाय नमः।
७१८. ॐ शिवतमाय नमः।
७१९. ॐ भगवते नमः।
७२०. ॐ अर्णवान्तराय नमः।
७२१. ॐ शिखिने नमः।
७२२. ॐ कृत्तिवाससे नमः।
७२३. ॐ पिनाकिने नमः।
७२४. ॐ वृषभस्थिताय नमः।
७२५. ॐ अग्नीषवे नमः।
७२६. ॐ वर्षेषवे नमः।
७२७. ॐ वातेषवे नमः।
७२८. ॐ पृथिवीस्थाय नमः।
७२९. ॐ दिविष्ठाय नमः।
७३०. ॐ अन्तरिक्षस्थिताय नमः।
७३१. ॐ हराय नमः।
७३२. ॐ अप्सुस्थिताय नमः।
७३३. ॐ विश्वनेत्रे नमः।
७३४. ॐ पथिस्थाय नमः।
७३५. ॐ वृक्षमूलगाय नमः।
७३६. ॐ भूताधिपाय नमः।
७३७. ॐ प्रमथपाय नमः।

७३८. ॐ अवपलाय नमः।
७३९. ॐ सहस्रास्याय नमः।
७४०. ॐ सहस्रनयनश्रवसे नमः।
७४१. ॐ ऋग्गणात्मने नमः।
७४२. ॐ यजुर्मध्याय नमः।
७४३. ॐ साममध्याय नमः।
७४४. ॐ गणाधिपाय नमः।
७४५. ॐ ऊर्म्याय नमः।
७४६. ॐ वशीर्षपरमाय नमः।
७४७. ॐ शिखायै नमः।
७४८. ॐ स्तुत्याय नमः।
७४९. ॐ अनसूयकाय नमः।
७५०. ॐ मैत्रायणाय नमः।
७५१. ॐ मित्रगतये नमः।
७५२. ॐ तण्डुप्रीताय नमः।
७५३. ॐ रिटिप्रियाय नमः।
७५४. ॐ उमाधवाय नमः।
७५५. ॐ विश्वभर्त्रे नमः।
७५६. ॐ विश्वहर्त्रे नमः।
७५७. ॐ सनातनाय नमः।
७५८. ॐ सोमाय नमः।
७५९. ॐ रुद्राय नमः।
७६०. ॐ मेघपतिवंकवे नमः।
[ॐ मेघपतये नमः ।
ॐ वैकुण्ठाय नमः:]

७६१. ॐ मरुतां पित्रे नमः।
७६२. ॐ अरुषाय नमः।
७६३. ॐ अध्वरेश्वराय नमः।
७६४. ॐ जलाषभेषजाय नमः।
७६५. ॐ भूरिदात्रे नमः।
७६६. ॐ सुजनिम्ने नमः।
७६७. ॐ सुराय नमः।
७६८. ॐ सम्राजे नमः।
७६९. ॐ पुरांभिदे नमः।
७७०. ॐ दुःखस्थाय नमः।
७७१. ॐ सत्पतये नमः।
७७२. ॐ पावनाय नमः।
७७३. ॐ क्रतवे नमः।
७७४. ॐ हिरण्यरेतसे नमः।
७७५. ॐ दुर्धर्षाय नमः।
७७६. ॐ विश्वाधिकाय नमः।
७७७. ॐ उरुक्रमाय नमः।
७७८. ॐ उरुगायाय नमः।
७७९. ॐ अमितगुणाय नमः।
७८०. ॐ महाभूताय नमः।
७८१. ॐ त्रिविक्रमाय नमः।
७८२. ॐ अमृताय नमः।
७८३. ॐ अजराय नमः।

७८४. ॐ अजय्याय नमः।
७८५. ॐ रुद्राय नमः।
७८६. ॐ अग्नये नमः।
७८७. ॐ पुरुषाय नमः।
७८८. ॐ विराजे नमः।
७८९. ॐ तुषाराजे नमः।
७९०. ॐ पूजितपदाय नमः।
७९१. ॐ महाहर्षाय नमः।
७९२. ॐ रसात्मकाय नमः।
७९३. ॐ महर्षये नमः।
७९४. ॐ बुद्धिदाय नमः।
७९५. ॐ गोप्त्रे नमः।
७९६. ॐ गुप्तमन्त्राय नमः।
७९७. ॐ गतिप्रदाय नमः।
७९८. ॐ गन्धर्वगानप्रीतात्मने नमः।
७९९. ॐ गीतप्रीताय नमः।
८००. ॐ उरुशासनाय नमः।
८०१. ॐ विद्वेषणहराय नमः।
८०२. ॐ हार्याय नमः।
८०३. ॐ हर्षक्रोधविवर्जिताय नमः।
८०४. ॐ भक्तप्रियाय नमः।
८०५. ॐ भक्तिवश्याय नमः।
८०६. ॐ भयहृते नमः।
८०७. ॐ भूतसंघभिदे नमः।
८०८. ॐ भूवनेशाय नमः।
८०९. ॐ भूधरात्मने नमः।
८१०. ॐ विश्ववन्द्याय नमः।
८११. ॐ विशोषकाय नमः।
८१२. ॐ ज्वरनाशाय नमः।
८१३. ॐ रोगनाशाय नमः।
८१४. ॐ मुञ्जिकेशाय नमः।
८१५. ॐ वरप्रदाय नमः।
८१६. ॐ पुण्डरीकमहाहाराय नमः।
८१७. ॐ पुण्डरीकत्वगम्बराय नमः।
८१८. ॐ आखण्डलमुखस्तुत्याय नमः।

८१९. ॐ कुण्डलिने नमः।

८२०. ॐ कुण्डलप्रियाय नमः।

८२१. ॐ चण्डांशुमण्डलान्तस्थाय नमः।

८२२. ॐ शशिखण्डशिखण्डकाय नमः।

८२३. ॐ चण्डताण्डवसन्नाहाय नमः।

८२४. ॐ चण्डकोपाय नमः।

८२५. ॐ अखिलाण्डगाय नमः।

८२६. ॐ चण्डिकापूजितपदाय नमः।

८२७. ॐ मण्डनाकल्पकाण्डजाय नमः।

८२८. ॐ रणशौण्डाय नमः।

८२९. ॐ महादण्डाय नमः।

८३०. ॐ तुहुण्डवरदायकाय नमः।

८३१. ॐ कपालमालाभरणाय नमः।

८३२. ॐ तारणाय नमः।

८३३. ॐ शोकहारणाय नमः।

८३४. ॐ विधारणाय नमः।

८३५. ॐ शूलकराय नमः।

८३६. ॐ धर्षणाय नमः।

८३७. ॐ शत्रुमारणाय नमः।

८३८. ॐ गङ्गाधराय नमः।

८३९. ॐ गरधराय नमः।

८४०. ॐ त्रिपुण्ड्रावलिभासुराय नमः।

८४१. ॐ शम्बरारिहराय नमः।

८४२. ॐ दक्षहराय नमः।

८४३. ॐ अन्धकहराय नमः।

८४४. ॐ हराय नमः।

८४५. ॐ विश्वजिते नमः।

८४६. ॐ गोजिते नमः।

८४७. ॐ ईशानाय नमः।

८४८. ॐ अश्वजिते नमः।

८४९. ॐ धनजिते नमः।

८५०. ॐ उर्वराजिते नमः।

८५१. ॐ उद्वजिते नमः।

८५२. ॐ सर्वजिते नमः।

८५३. ॐ सर्वहारकाय नमः।
८५४. ॐ मन्दारनिलयाय नमः।
८५५. ॐ नन्दाय नमः।
८५६. ॐ कुन्दमालाधराय नमः।
८५७. ॐ अम्बुदाय नमः।
८५८. ॐ नन्दिप्रीताय नमः।
८५९. ॐ मन्दहासाय नमः।
८६०. ॐ सुरवृन्दनिषेविताय नमः।
८६१. ॐ मुचुकुन्दार्चितपदाय नमः।
८६२. ॐ द्वन्द्वहीनेन्दिरार्चिताय नमः।
८६३. ॐ विश्वाधाराय नमः।
८६४. ॐ विश्वनेत्रे नमः।
८६५. ॐ वीतिहोत्राय नमः।
८६६. ॐ विनीतकाय नमः।
८६७. ॐ शङ्कराय नमः।
८६८. ॐ शाश्वताय नमः।
८६९. ॐ शास्त्रे नमः।
८७०. ॐ सहमानाय नमः।
८७१. ॐ सहस्रदाय नमः।
८७२. ॐ भीमाय नमः।
८७३. ॐ महेश्वराय नमः।
८७४. ॐ नित्याय नमः।
८७५. ॐ अम्बरान्तरनर्तनाय नमः।
८७६. ॐ उग्राय नमः।
८७७. ॐ भवहराय नमः।
८७८. ॐ धौम्याय नमः।
८७९. ॐ धीरोदात्ताय नमः।
८८०. ॐ विराजिताय नमः।
८८१. ॐ वञ्चकाय नमः।
८८२. ॐ नियताय नमः।
८८३. ॐ विष्णवे नमः।
८८४. ॐ परिवञ्चकाय नमः।
८८५. ॐ ईश्वराय नमः।
८८६. ॐ उमावरप्रदाय नमः।
८८७. ॐ मुण्डिने नमः।
८८८. ॐ जटिलाय नमः।
८८९. ॐ शुचिलक्षणाय नमः।
८९०. ॐ चर्माम्बराय नमः।
८९१. ॐ कान्तिकराय नमः।

